ॐ नमः परमात्मने ।

# न्यायवार्त्तिकस्य

## भूमिका ।

—:०:—

विश्वनाथन्यायपञ्चानना गोतमसूत्रवृत्तौ प्रमाणप्रमेयेत्यादिप्रथमसूत्रव्याख्याने "अत्र वार्त्तिकं यदि वादे देशनीयत्वात् पृथगभिधानं तदा न्यूनाधिकापसिद्धान्तानां वादे देशनीयत्वात् पृथगभिधानं स्यात्"(१) इत्युक्तवन्तः । शङ्करमिश्रेण वैशेषिकसूत्रोपस्कारे २अध्याये २ आह्निके सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च संशय इति १७ सूत्रव्याख्याने "न्यायवार्त्तिकेऽपि यत् कारणभेदेन संशये त्रित्वमुक्तं तदपि न सम्भवति व्यभिचारेण समानधर्मादीनां त्रयाणां कारणत्वस्यैवासम्भवात्"(२) इत्युक्तम् । श्रीधराचार्येण न्यायकन्दल्यां पृथिवीनिरूपणे "यथाहोद्द्योतकरः समानासमानजातीयव्यवच्छेदो लक्षणार्थः"(३) इत्युक्तम् । वर्द्धमानोपाध्यायेन द्रव्यकिरणावलीप्रकाशे "तस्य संस्कारात् कालाद्वा विनाश इति वार्त्तिकविरोधाच्च" इत्युक्तम् । षड्दर्शनटीकाकृद्वाचस्पतिमिश्रेणापि "प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्या-

(१) अस्मिन्नेव मुद्रिते न्यायवार्त्तिकपुस्तके पृ०१९ प०९ द्रष्टव्यम् ।
(२) " " पृ० ९९ प० १४ "
(३) " " पृ० २८ प० १०

तम्"(१) इतिकारिकाव्याख्यायां सांख्यतत्त्वकौमुद्यां "सर्वं चैतदस्माभिर्न्यायवार्त्तिकतात्पर्यटीकायां व्युत्पादितं नेहोक्तं विस्तरभया"दित्युक्तम् । चित्सुखाचार्येण तत्त्वप्रदीपिकायां ( चित्सुख्यां ) द्वितीयपरिच्छेदे "वाचको गवयस्याय"मिति ३१ कारिकाव्याख्यायां "तथा च भगवदक्षपादप्रणीतं सूत्रम् प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानमिति । व्याख्यातं चैतदुद्द्योतकरेण वार्त्तिककृता आगमाहितसंस्कारस्मृत्यपेक्षं सादृश्यज्ञानमुपमानमिति"(२) इत्युक्तम् । एवमनेकेषु न्याय-वैशेषिक-सांख्य-वेदान्तग्रन्थेषु न्यायवार्त्तिकस्य तथा तट्टीकायाश्च नाम दृष्ट्वा उद्द्योतकराचार्यकृतं न्यायवार्त्तिकनामानं महानिबन्धं मनसि विज्ञाय पण्डितवृद्धेभ्यो न्यायदर्शनवात्स्यायनभाष्यस्य पठनपाठनयोः परमोपयोगित्वं तस्य निशम्य तदन्वेषणेऽहं प्रवृत्तः । किन्तु "न्यायवार्त्तिकस्य विनष्टप्रायत्वात् तल्लाभेऽनेके महापण्डिताश्चिरादेव विफलप्रयत्ना अभूवं(३)स्तव किं साध्यं भविष्यतीति" नैयायिकवृद्धैर्निरुत्साहितोऽप्यहम्

(१) पञ्चमी कारिका ।

(२) अस्मिन्नेव मुद्रिते न्यायवार्त्तिकपुस्तके पृ०५७ प०२१ द्रष्टव्यम् ।

(३) न्यायवार्त्तिकस्य दुर्लभत्वे खण्डशः उपलब्धत्वे वा वक्ष्यमाणा लेखा वर्तन्ते ।

A contribution towards an index to the Bibliography of the Indian Philosophical systems by Fitzdward Hall, M.A., page 20, III. Nyāya-Vârttika-Tâtparya-Parisuddhi, also called Nyāya-nibandha. This is probably an emendation of Pakshila Svâmin's Vârttika or Supplement to No. I. Dinnága, whom Vāchaspati Misra names with censure: he was another ancient expositor of

"उद्योगेनैव सिध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥"

इत्यनुसरन् न्यायवार्त्तिकं स्मरन् कतिपयवर्षानन्तरमेकस्य ब्राह्मणस्य गृहेऽहं भोजनार्थमाहूतो ब्राह्मणानां पङ्क्तौ उपविष्टस्तत्रैकस्य महावातायनस्य मध्ये याथातथ्येन जीर्णवस्त्रेण वेष्टितानि धूलीधूसराणि ऊर्णनाभादिभिराच्छादितानि अनेकानि पुस्तकपुटकानि प्रवेशितानि दृष्ट्वा तेषां निष्कासने प्रवृत्तो गृहपतिना वृद्धेन

---

the logical institutes. The writings of both have, perhaps, perished. Complete copies of the work in question may be forthcoming; but I have never seen one. Its author is Udayana Âchārya, who is also called Uddyotakara Âchārya and Udayakara Âchārya. He was of the gotra of Bharadwāja. F. E. H.

The Kusumānjali edited and translated by E. B. Cowell, preface page vi, III–The Nyāya–Vārttika, a commentary on No. II. by Uddyotakara Âchārya. I procured lately, from a pandit of Nuddea, a fragment of this work containing a portion of the first book.

A classified index of the Sanskrit MSS in the palace at Tanjore by A. C. Burnell, p. 113; these are all precisely similar recent transcripts made at Benares by several persons about 1820. As the work is exceedingly rare, it is much to be regretted that these MSS. are so incorrect as to be useless. Whole lines are quite unintelligible, and some of the copyists seem to have been perfectly ignorant of even the form of the letters.

See Catalogus Catalogorum by Theodor Aufrecht printed in 1891–1903, part I, p. 311; pt. II, p. 68; pt. III, p. 66.

ब्राह्मणेन "मा स्पृश मा स्पृश मार्जारगमनागमननिरोधार्थं स्थापितानीमानि पुस्तकानि भोजनकाले मार्जार आगमिष्यति कीदृशस्त्वं बालकश्चञ्चलः सर्वमन्नपानादिकं मार्जारेण भ्रंशयिष्यसि" इत्यादिभिरनेकैर्भर्त्सनैरपमानितो निवारितोऽप्यहं विलम्बेन भोजनं करिष्यामीति ब्रुवन् तत्र स्थितानि कतिपयपुस्तकपुटकानि समाकृष्टवान्। तेष्वेकस्मिन् पुटके न्यायवार्त्तिकस्य प्रथमाध्यायस्य त्रिसूत्रीप्रकरणं प्रमाणप्रकरणं(१) द्वितीयतृतीयावध्यायौ च सम्पूर्णौ(२) लब्धवान्। ततश्चास्मद्गुरुवरप्रम-

(१) पुस्तकमिदं देवनागराक्षरैः कागजाख्याधारे लिखितं परिशुद्धं च। पेशवामहाराजसभासदा नैयायिकप्रवरेण श्रीभेकशास्त्रिणा लिखितेन वाराणसीस्थेन न्यायदर्शनवात्स्यायनभाष्यपुस्तकेन संवादादिदं वार्त्तिकपुस्तकमपि तेनैव पण्डितेन लिखितमित्यनुमीयते। अस्यैव पुस्तकस्य प्रथमपत्रे लिखितम् (?) लिखितं तिरङ्कगुद्धे।

प्र० २८००
द्वि० २३००
तृ० १६००
च० ११००
प० ४३५
८२३५

इति लेखदर्शनात् संपूर्णस्य वार्त्तिकग्रन्थस्य संख्यावगता। "प्र० २८००" इत्यनेन प्रथमाध्याये श्लोकसंख्या "द्वि० २३००" इत्यनेन द्वितीयाध्याये श्लोकसंख्या एवंरीत्याग्रेऽपि बोध्या।

(२) अयं द्वितीयाध्यायो देवनागराक्षरैः कागजाख्याधारे लिखितोऽशुद्धश्च। अत्र लेखकेन लिपिकाल एवंरूपेण लिखितः।

"इत्याचार्यश्रीउद्द्योतकरकृतौ द्वितीयोऽध्यायः समाप्तः॥ शुभमस्तु॥ संवत् १६०० शाके १४६५ विरोधकृत नाम संवत्सरे पुस्तक लिपि(खि)तं वाराणसीमध्ये लिपा(खा)यितं ब्राह्मण लि-

हामहोपाध्यायश्रीमत्कैलासचन्द्रभट्टाचार्यशिरोमणिभिर्दत्तं प्रथमाध्यायत्रिसूत्रीवार्त्तिकपुस्तकम् तत्प्राप्त्या मात्यन्तं हर्षितः। ततश्च क्रमशोऽन्वेषणे कृते चिरेण मिथिलादेशस्थझोपाख्यपण्डितश्रीचण्डीश्वरसकाशात् प्रमेयप्रकरणमारभ्य प्रथमाध्यायसमाप्त्यन्तं पुस्तक(१)मुपलब्धवान्। इत्थमध्यायत्रये सम्पन्ने वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालये वर्तमानं तृतीयचतुर्थाध्यायपुस्तकं(२) ततश्च स्वर्गनिवासिनां भूतपूर्ववाराणसीभूषणभूतानां श्रीविभवरामपण्डितानां पुरातनं पञ्चमाध्यायपुस्तक(३)मथ च वाराणसीस्थितेन श्रीहरिनामदास-

---

पि(खि)तं धर्म्मदासकायस्थ मासमाघवदि एकादशी ॥ श्रीविश्वेश्वरस्थानात् ॥ श्रि(शेर)साहि आलमराज्ये प्रवर्तमाने ॥"

तृतीयाध्यायोऽपि तथैव लिखितो जीर्णत्वाद्याकारेणानुमीयते यद्वर्षत्रिशतात् पूर्वं लिखितो भवेदिति।

(१) पुस्तकमिदं मैथिलाक्षरैस्तेडेतपत्रेषु लिखितं पुरातनं जीर्णं कृमिस्पृष्टं प्रायः शुद्धं च। अन्ते लेखकेन "पुस्तकमिदं महोपाध्यायश्रीभवानन्दभट्टाचार्याणाम्" इति लिखितत्वात् कस्यचित्पण्डितस्य पुस्तकमिदमित्यवगम्यते। तेडेतपत्राणि तालपत्रेभ्यो भिन्नानि समीचीनान्यपि भवन्ति। तेडेतफलं च सुदृढं कृष्णवर्णं भाषायां वज्रवट्टु इति प्रसिद्धं दृष्टिदोषनिवारणार्थं बालकैर्धार्यते।

(२) इदमपि मैथिलाक्षरैः कागजाख्याधारे लिखितं परिशुद्धं जीर्णम्। अत्र यद्यपि लिपिकालो न लिखितस्तथापि जीर्णत्वाद्याकारेण तत्सस्वद्धन्यायनिबन्धप्रकाशपुस्तकेन ल० सं० ४५६ (लक्ष्मणसेनसंवत्सर) लिखितेन चानुमीयते तस्मिन्नेव समये लिखितं भवेदिति।

(३) देवनागराक्षरैः कागजाख्याधारेषु लिखितं "१६०० विक्रमीये संवत्सरे लिखितमिति" तत्र लिपिकालो लिखितो लेखकेन।

साधुना कृपया प्रदत्तं नवीनं प्रथमाध्यायपुस्तकं(१) च प्राप्य पञ्चाध्याय्यात्मकं सम्पूर्णं न्यायवार्त्तिकं सङ्कलय्य(२) तमानन्दमविन्दं यो वचसामगोचरः ।

"लाभाल्लोभः प्रवर्द्धते" इति न्यायवार्त्तिकलाभात् न्यायवार्त्तिकतात्पर्यटीकाया अप्यन्वेषणे कृतेऽस्या अपि त्रीणि पुस्तकानि(३) प्राप्तानि । ततश्च क्रमशो न्यायवार्त्तिकतात्पर्यटीकाया अपि व्याख्यानमुदयनाचार्यकृतं न्यायवार्त्तिकतात्पर्यपरिशुद्ध्याख्य(४)मस्यापि व्याख्यानं श्रीगङ्गेशोपा-

---

(१) इदमशुद्धं नवीनमपि सन्दिग्धस्थले पाठापपाठनिश्चायकमत्यन्तमुपयोगि च ।

(२) एषु पञ्चस्वध्यायेषु "इति प्रमाणप्रकरणम्" "इति प्रमेयप्रकरण"मेवरूपेण भिन्नान्येव प्रकरणानि आसन् तानि च वाचस्पतिमिश्रकृतन्यायसूचीनिबन्धानुसारेण एकत्र सङ्कलितानि कृत्वा ग्रन्थः सम्पूर्णीकृत इति । अयं च न्यायसूचीनिबन्धोऽप्यत्र मुद्रित एव विस्तरस्त्वग्रे वक्ष्यते ।

(३) प्रथमं पुस्तकं कागजाख्याधारे देवनागराक्षरैर्वाराणस्यां लिखितम् । तत्र लेखकेन लिपिकाल एवं लिखितः ।

"इति वाचस्पतिमिश्रविरचितायां न्यायवार्त्तिकतात्पर्यटीकायां प्रथमोऽध्यायः समाप्तः । छ् ॥ छ् ॥ छ् ॥ स्वस्ति संवत्॥१४५४समये आश्विनवदि १० रविवासरे ॥ श्रीः ॥ छ् ॥ ॐ नमो नारायणाय ॥ स्वस्ति ॥ ॥ काशी करोतु कल्याणं विश्वेशः सर्वसम्पदः" इत्यादि ।

द्वितीयं तु तेडनपत्रेषु मैथिलाक्षरैर्लिखितं तत्र लेखकेन लिपिकाल एव लिखितः । "ल० सं० ४१७" ( लक्ष्मणसेनसंवत्सरे )

तृतीयं कागजाख्याधारे देवनागराक्षरैर्लिखितं नवीनमशुद्धं च । ग्रन्थोऽयं श्लोकदशसाहस्रयात्मक इदानीं मुद्रित उपलभ्यते ।

(४) ग्रन्थोऽयं श्लोकद्वादशसाहस्रयात्मकः । इदानीं वङ्गदेशस्थएसियाटिक्सोसाइटीसभाया निर्देशेन श्रीवर्द्धमानोपाध्यायकृतटीकासहितो मुद्रितो भवतीति तद्विशेषवर्णनं तद्भूमिकायां द्रष्टव्यम् ।

-ध्यायात्मजश्रीवर्द्धमानोपाध्यायविरचितं न्यायनिबन्धप्रकाशाख्य(१)मस्यापि व्याख्यानं श्रीबलभद्रमिश्रात्मजश्रीपद्मनाभमिश्रविरचितं वर्द्धमानेन्दुनामक(२)मस्यापि व्याख्यानं तात्पर्यमण्डनाभिधं श्रीशङ्कर(३)कृतं च प्राप्तम् । एतेषां प्राप्त्या परमप्रमुदितमना एते ग्रन्थाः सर्वेषामपि विद्यानुरागिणां सुलभा भवेयुरिति चिन्तयन् मुद्रणद्वारा प्रकाशने यतमानोऽहमतिष्ठम् ।

अत्रान्तरे न्यायवार्त्तिकमन्वेषयद्भिर्वाराणस्यां समागतैः कलिकातास्थगवर्नमेण्टसंस्कृतपाठशालाप्रधानाध्यक्षैर्महामहोपाध्यायैरिदानीं स्वर्गस्थैः श्रीमहेशचन्द्रन्यायरत्नभट्टाचार्य–सी. आई. ई. महाशयैरहं प्रोत्साहितो "यदेतेषां ग्रन्थानां मुद्रणं बङ्गदेशस्थएसियाटिक्सोसाइटीसभासमादेशेन यदि भवेत् तर्हि सर्वप्रकारेण समीचीनं भविष्यतीति" तत्र न्यायदर्शनवात्स्यायनभाष्यस्य पृथक् मुद्रितत्वादिदानीं न्यायवार्त्तिकादीनां ग्रन्थानामपि पार्थक्येनैव मुद्रणं समुचितमिति निर्धारितं तैरेव महाशयैः । ततश्च मयानुमोदितेऽस्मिन्नर्थे उक्तमहाशयेषु कलिकातानगरे गतेषु उक्तसोसाइटीसम्पादकमहाशयानामपि समादेशपत्रे समागते न्यायवार्त्तिकमुद्रणारम्भो जात इति ।

---

(१) ग्रन्थोऽयं श्लोकविंशतिसाहस्रयात्मकः ।

(२) आरम्भप्रभृत्यात्मनिरूपणान्तस्य ग्रन्थस्य पुस्तकमस्मत्सन्निकटे वर्ततेऽतः सम्पूर्णग्रन्थस्य श्लोकसंख्या इदानीं कर्तुं न शक्यते । अनेनैव पद्मनाभमिश्रेण किरणावलीप्रकाशोऽपि व्याख्यातस्तद्पि व्याख्यानं वर्द्धमानेन्दुनामकं द्रव्यग्रन्थात्मकमस्मत्सन्निकटे वर्तते तत्र श्लोकसंख्या ॥ ३०० ।

(३) अयं शङ्करमिश्रो वा शङ्करभट्टाचार्यो वेति निर्णयस्तन्मुद्रणावसरे भविष्यति ।

तत्र च सर्वेष्वप्युपलब्धन्यायवार्त्तिकादर्शपुस्तकेषु व्या- ख्येयत्वेन मूलत्वेन वा विन्यस्तानि न्यायसूत्राणि वार्त्तिकसं- श्लिष्टानि न तु पार्थक्येन, मया तु जिज्ञासूनां सुबोधार्थं तत्र तत्रैव सर्वाणि न्यायसूत्राणि स्थूलाक्षरैः पार्थक्येन मुद्रणसमये विन्यस्तानीति विज्ञेयम् ।

अत्रादर्शपुस्तकेषु प्रथमद्वितीयाध्यायपुस्तकानि देवनागरा- क्षरलिखितपरमादर्शपुस्तकाद्देवनागराक्षरैर्लिखितानीति लेखक- लिखितनामग्रामादिभ्योऽनुमीयते । अपराणि तृतीयचतुर्थाध्या- यपुस्तकानि देवनागराक्षरैर्लिखितानि प्राचीनान्यपि मैथिला- क्षरलिखितपरमादर्शपुस्तकाद्देवनागराक्षरेष्ववतारितानि यतस्ते- षु क्वचिद् रकारस्थाने वकारः क्वचिच्च वकारस्थाने रकार इत्यादिलेखोऽस्ति । अन्यानि प्रथमतृतीयचतुर्थाध्यायपुस्तका- नि मैथिलाक्षरलिखितानि किन्तु प्राचीनत्वाज्जीर्णत्वाद्विलुप्ता- क्षरत्वाच्च मैथिलानामपि दुष्पठानि ततः का कथा मादृशाना- मचिरपरिचितमैथिलाक्षराणाम् । एवं क्वचित् क्वचिद् तात्पर्यटी- कायामप्यव्याख्यातत्वाद् भ्रामकेष्वक्षरेषु अर्थानुसन्धानेनाक्ष- रान्तरविन्यासः क्वचित् सम्भवतीति भ्रान्तेः पुरुषधर्मत्वादिति तत् क्षन्तव्यं विद्वद्भिः परिश्रमवेत्तृभिरिति ।

मुद्रणसमयेऽस्मिन् पुस्तके पाठान्तरबोधनार्थं वाराणस्यां वृद्धब्राह्मणस्य गृहे प्राप्तं पुस्तकं प्रथमत्वेन मिथिलादेशस्थेन झोपाख्यपण्डितश्रीचण्डीश्वरशर्मणा दत्तं पुस्तकं द्वितीयत्वेन गुरुभिर्दत्तं पुस्तकं तृतीयत्वेन वाराणसीस्थराजकीयसंस्कृत- पाठशालीयं चतुर्थत्वेन विभवरामपण्डितानां पुस्तकं पञ्च- मत्वेन द्वितीयाध्यायमुद्रणसमये च महामहोपाध्यायश्रीगङ्गा- धरशास्त्रि— सी. आई. ई. महाशयैर्वाराणसीस्थराजकीय-

संस्कृतपाठशालीयभूतपूर्वाध्यापकैः प्रदत्तं द्वितीयाध्यायपुस्तकं च पश्चत्वेनाङ्कद्वारा सूचितम् ।

यद्यप्यस्य न्यायवार्त्तिकस्य टीका आचार्यवाचस्पतिमिश्रेण कृता तस्या अपि टीका उदयनाचार्येण कृता तस्या अपि टीका वृर्द्धमानोपाध्यायेन कृता एवंरूपेण टीकापरम्पराशालिनोऽप्यस्य न्यायदर्शनरहस्यप्रकाशकस्य महानिबन्धस्य मुद्रणकार्यं महानैयायिकानामप्यसाध्यं किं पुनर्मादृशानामल्पज्ञानां तथापि चिरेणाननुभूतमहाश्रमेणोक्तरीत्या वार्त्तिकपुस्तकं सम्पूर्णं समाकलय्य यावच्छक्यं संशोध्य पाठान्तराणि च सन्निवेश्य सर्वसाधारणविद्यानुरागिणां सौलभ्यार्थमुक्तसोसाइटीसभानिदेशेन मुद्रितवानहमस्मि । अत्र गुणैकपक्षपातिनो नैयायिकप्रवराः सम्पूर्णं मुद्रितपुस्तकं समधिगम्य दृष्टिपूतं कृत्वा मामकीनं परिश्रमं सफलयन्तु नैसर्गिकदयया अस्मद्दृष्टिदोषजा मुद्राप्रमादजा अशुद्धीः संशोधयन्त्विति च भूयोभूय एवाभ्यर्थये। अनेन कर्मणा प्रसीदतु सर्वान्तर्यामी श्रीपरमेश्वर इति ॥

अत्र वाराणसीस्थराजकीयसंस्कृतपाठशालाभूषणभूतैरिदानीं स्वर्गस्थैर्महामहोपाध्यायैस्तार्किकशिरोमणिभिरस्मद्गुरुवरैः श्री६ कैलासचन्द्रभट्टाचार्यमहाशयैरादर्शपुस्तकसम्पादनसाहाय्येन विषमस्थलव्याख्यानादिना च परममनुकम्पितोऽस्मि नोचेदस्य संस्करणं मम साध्यं कथमपि न भवेदिति ॥

---

यद्यपि कविभिः कल्पनया(१) शिष्यप्रशिष्यैश्च स्तु-

(१) यथा माधवीये शङ्करविजये ३ सर्गे। विष्णुः पद्मपादाचार्योऽभूत् । वायुर्हस्तामलकाचार्योऽभूत् । वायुरेव तोटकाचार्योऽभूत् । ब्रह्मा सुरेश्वराचार्योऽभूदेवमन्येऽनेके देवाः शङ्कराचा-

गोवर्धनेन कृता यथा।

"अखिलागमसञ्चारि श्रीकृष्णाख्यं परं महः।
ध्यात्वा गोवर्धनसुधीस्तनुते न्यायबोधिनीम्॥"

इति टीकामुखदर्शनादवगम्यते गोवर्धनात् पूर्वकालवर्त्ती अन्नम्भट्टोऽपि तर्कसंग्रहकारः। "शृङ्गारोत्तमसत्प्रमेयरचनैराचार्यगोवर्धनस्पर्द्धी कोऽपि न विश्रुत" इति गीतगोविन्दे आदावेव दर्शनात् जयदेवसमयात् पूर्वकालवर्त्ती गोवर्द्धनाचार्यः।

"ख्यातो गोवर्धनाचार्य उमापतिधरस्तथा।
शरण्यो जयदेवश्च धोयी कविनृपः क्रमात्॥
राज्ञो लक्ष्मणसेनस्य पञ्चरत्नानि संसदि॥"

इत्यनेन लक्ष्मणसेनस्य राज्ञः समये १०१० शकाब्दे या तदासन्ने समये जयदेवस्य स्थितिरिति निष्पन्नं भवति। श्रीरजनीकान्तगुप्तमहाशयेन जयदेवचरितपुस्तके ११०० शकाब्दे जयदेवस्य स्थितिरनुमिता ततोऽपि जयदेवात्पूर्वं गोवर्धनाचार्यस्ततोऽपि पूर्वं तर्कभाषातर्कसंग्रहकाराविति।

वस्तुतस्तु तर्कभाषाटीकारम्भे

"यस्तर्कभाषामनुभाषते स्म गोवर्धनस्तर्ककथासु धीरः।
तेनानवद्येन सुधानुगारी कीर्तिर्गुरूणाममृताधिकास्तु॥
विजयश्रीतनूजन्मा गोवर्धन इति श्रुत।
तर्कानुभाषां तनुते विविच्य गुरुनिर्मितिम्॥
श्रीविश्वनाथानुजपद्मनाभानुजो गरीयान् बलभद्रजन्मा।
तनोति तर्कानधिगत्य सर्वान् श्रीपद्मनाभाद्विदुषो विनोदम्॥"

इति दर्शनात् गोवर्धनः पद्मनाभमिश्रस्य भ्राता बलभद्रमिश्रस्य पुत्रः। पद्मनाभेन च किरणावलीभास्करे

"उपदिष्टा गुरुचरणैरस्पृष्टा वर्धमानेन।
किरणावल्यामर्थास्तन्यन्ते पद्मनाभेन॥"

"यस्तर्कदुस्तरतरार्णवकर्णधारो
वेदान्तवर्त्मनिरताध्वगसार्थवाहः।
श्रीपद्मनाभरचितेन दिवाकरेण
तुष्टोऽमुनास्तु सुकृती बलभद्रमिश्रः॥"

इत्युक्तत्वात् वर्धमानोपाध्यायादपि पश्चात्कालभावीत्यर्वाचीनः सः यत उदयनाचार्यं न्यायलीलावत्यां प्रमाणयति न्यायलीलावतीकारः सा च वर्द्धमानोपाध्यायेन व्याख्याता इति ॥

अपि च शुक्लयजुःसंहिताभाष्यकर्तु महीधरस्य समयनिर्णये १८६९ ईसवीयवर्षे सप्तेम्बरमासे पण्डितपत्रे मुद्रितं जयचन्द्रप्रदत्तताम्रपत्रशासनस्थं "द्वात्रिंशदधिकद्वादशशतसंवत्सरे भाद्रे मासि शुक्लपक्षे त्रयोदश्यां तिथौ रविदिने अङ्कतोऽपि संवत् १२३२" इत्युपक्रम्य "महापण्डितश्रीमहीधरपौत्राय महामिश्रपण्डितश्रीहालेपुत्राय महापण्डितश्रीहृषीकेशशर्म्मणे ब्राह्मणाय" इत्युक्तं वचनमवलम्ब्य १२३२ संवत्सरात् पूर्वं महीधरस्य स्थितिर्निर्णीता।

वस्तुतस्तु शुक्लयजुःसंहिताभाष्यकर्त्रा महीधरेणात्मचरितमेवं लिखितम् ।

"रसनेत्राङ्कभू १६४६ वर्षे मास्यसे ? धवले दले ।
त्रयोदश्यां रवेर्वारे वाराणस्यां महीधरः ॥
श्रीरत्नेश्वरमिश्रस्य गुरोः केशवजन्मनः ।
आज्ञया विवृतिं शौल्वीं भाष्यवृत्त्यनुसारिणीम् ।
विदुषां सुखबोधाय व्यधाद्बुद्ध्यनुसारतः ।
भाष्यं रामकृतां वृत्तिं तारावालोक्य ? तत्त्वतः ॥
नीलकण्ठो रमानाथः सिताम्भश्चन्द्रशेखरः ।
भैरवोऽथ कृपासिन्धुस्तेन तुष्यान्नृकेशरी ॥
इति महीधरविरचिता शुल्वसूत्रवृत्तिः समाप्ता ॥"

अत्र कदाचिद्बहूनां महीधराणां सम्भवोऽस्ति तथापि तत्कृतग्रन्थेषु मङ्गलदलोकस्यैक्यात् संहिताभाष्ये आशावेव "भाष्यं विलोक्यौव्वटमाधवीयम्" इत्युक्त्या च १३१३ शकाब्दे वर्तमानस्य माधवाचार्यस्य समयात् पश्चाद्भावी महीधर इति तु वज्रलेपायितम् ।

एवं—ऋग्वेदीयसर्वानुक्रमे मेधातिथिः ऋषिः, मेधातिथिभट्टोपि मनुस्मृतिभाष्यकारः। श्रीवाचस्पतिमिश्रो भामत्यामन्ते "तस्मिन्महीपे महनीयकीर्त्तौ श्रीमन्नृगेऽकारि मया निबन्धः ।" नृ-

स्या(१)सम्प्रदायप्रवर्तकैश्चोत्कर्षख्यापनाय(२)अन्यैश्च साहसिकैः किंवदन्तीश्रवणादिना(३) अपरैश्च हेत्वाभासैर्भ्रमात्मकानुमाने-

---

र्यस्य चरणं सेवितुं ब्राह्मणपुत्रा अभूवन्निति निरूपितम्।

अयं माधवश्च न वेदभाष्यकर्ता पूर्वोत्तरमीमांसाव्याख्याता पराशरस्मृत्यादिधर्मशास्त्रव्याख्याता सायनमाधवाचार्यः यतः पूर्वोक्तामाख्यायिकां प्रमाणोल्लेखरहितां स कथं लिखेत्। अपि च ९१३ शाकाब्दे निर्मितां न्यायकन्दलीं चित्सुखीग्रन्थे समुद्धृतवन्तं चित्सुखाचार्यं खण्डनखण्डखाद्यटीकाकारं श्रीहर्षादपि पश्चाद्भाविनं शङ्कराचार्यस्य शिष्यत्वेन च कथं लिखेत्। अपि च "वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे" इत्यादिमुद्राश्लोकानां शङ्करविजयेऽभावात्। यद्यपि मुद्राश्लोकः सर्वदर्शनसंग्रहेऽपि नास्ति तथापि "श्रीमत्सायनदुग्धाब्धिकौस्तुभेन महौजसे"त्यादिश्लोकदर्शनात् तस्य तत्कर्तृत्वं निर्विवादमेव।

(१) गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
　　तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः॥ इत्यादि।

(२) यथा रामानुजाचार्यो लक्ष्मणार्यापरनामधेयः फणिराजशेषस्यावतारः १२० वर्षाणि भूमौ स्थितो लोकोत्तराणि कार्याणि कृतवानित्यादिप्रपन्नामृतग्रन्थे रामानुजचरितनामधेये प्रतिपादितम्। मध्वाचार्यस्तु वायोरवतार इत्यादिमहाभारते भविष्यत्पर्वणि आर्यविद्यासुधाकरग्रन्थेऽपि। महाभारतस्य खिलो हरिवंशोऽस्यापि खिलो भविष्यत्पर्व अस्यापि खिलः कश्चित् भवेत्? वल्लभाचार्यस्तु अग्नेरवतार इत्यादिवल्लभदिग्विजयग्रन्थे। एवं नानकशाहस्य नानकचन्द्रोदयपुस्तके गोरखनाथस्य निरञ्जनपुराणे माहात्म्यम्। अनयैव रीत्या बहूनां निरूपणम्।

(३) यथा भक्तमालाग्रन्थे १०८ भक्तानां चरितानि।

मानसिंहः। हनूमान्। विभीषणः। शबरी। अजामिलः। जटायुः। अम्बरीषः। विदुरः। सुदामा। चन्द्रहासः। शिविः। उशीनरः। द्रौपदी। वाल्मीकिः। रुक्माङ्गदः। मयूरध्वजः। प्र-
.दः। निम्बादित्यः। श्रीमार्गः। रामानुजः। श्रीरङ्गः। श्रीकृष्ण-

न(१)बहूनां पुरुषाणामेकनाम्ना प्रसिद्ध्यापि नाममात्रेणैवा(२)र्वा-

दासः। अग्रदासामरसिंहो। शङ्कराचार्यः। मण्डनमिश्रः। उदयनाचार्यः। विठ्ठलेशः। नामदेवः। श्रीतगोविन्दकारजयदेवः। पद्माधनी। श्रीधरस्वामी। बिल्वमङ्गलः। पद्मकला। विष्णुशर्मा। ज्ञानदेवः। त्रिलोचनः। कुलशेखरः। रतिमतिः। द्युतिमान्। कर्मावाई। राजकन्या। राजपुत्रः। वैश्यसाधुः। चतुर्भुजः। कामधुक्। जयमल्लः। श्रीधरः। साक्षीगोपालः। रामदासः। नन्ददासः। आह्लदासः। रविदासः। कबीरदासः। पीपाजी। धनाभागवतः। रामदासः। सुखानन्दः। सुरसरित्। नरहरिः। माधवदासः। धुन्दा। परमानन्दः। श्रीकृष्णचैतन्यः। सूरदासः। हरिव्यासः। कृष्णदासः। विठ्ठलः। व्रजवल्लभः। रूपसनातनः। व्यासः। गोविन्दस्वामी। मुरारिः। सदनकसाई। लड्डूदासः। सखाराज्ञी। लखा। नरसी। मीरावाई। तुलसीदासः। परशुरामः। एवमन्येऽपि बहवो निरूपिताः।

एवमेव सन्तविलासग्रन्थेऽपि अनेके निरूपिताः।

(१) यथा केनचिन्निरूपितं "वराहमिहिराचार्यो भिल्लजातीयो वा कश्चित् शूद्र इति। उक्तं च बृहज्जातके।

आदित्यदासतनयस्तदवाप्तबोधः
कापित्थके सवितृलब्धवरप्रसादः।
आवन्तिको मुनिमतान्यवलोक्य सम्य-
ग्घोरां वराहमिहिरो रुचिरां चकार॥ इति।

अत्र आदित्यदासतनय इत्यत्र दासपदोपादानात्।"

वस्तुतस्तु भट्टोत्पलेन बृहज्जातकटीकायाम्।

"आदित्यदासाख्यो ब्राह्मणस्तस्य तनयः पुत्रः"

"चैत्रमासस्य पञ्चम्यां सितायां गुरुवासरे।
वस्वष्टाष्टमिते शाके ८८८ कृतेयं विवृतिर्मया॥"

इत्युक्तत्वाद् ब्राह्मण एव। अन्येऽपीदानींतना ब्राह्मणा रामलदासकालिदासादिनामानो वर्तन्ते।

(२) एके तु तर्कभाषाकर्तुः केशवमिश्रस्य समयनिर्णये प्रीतिपादितवन्तः गोवर्धनेन तर्कभाषायाष्टीका रचितेति गोवर्धनसमयात् पूर्वकालभावी केशवः अपि च तर्कसंग्रहटीकापि न्यायबोधिनी

चीनानामपि निबन्धकाराणां जीवनचरितस्य निरूपितत्वात् तथ्येनेयत्तया विवादरहितमर्वाचीनानां जीवनचरितं प्रायो नावगम्यते किं पुनश्चिरन्तनानां गोतम-कणाद-प्रभृतीनां महर्षीणामन्येषामपि ऋषिकल्पानामाचार्याणां तथापि यथोपलब्धं सप्रमाणमत्र निरूपयामि ॥

---

## न्यायशास्त्रप्रणेतुर्भगवतो महर्षेर्गोतमस्य चरितम् ।

तत्र तावन्न्यायशास्त्रप्रणेता भगवान् महर्षिर्गोतमः(१) क-

---

गोपाख्यानं महाभारते अनुशासनपर्वणि ७० अध्याये श्रीमद्भागवतेऽपीत्यन्यो नृगनृपतिः । रामावतारसमये रावणो दशमुखः अपरोऽपि लक्ष्मणोत्सवग्रन्थकर्त्तुर्लक्ष्मणकायस्थस्य भ्राता रावण इति लक्ष्मणोत्सवग्रन्थे प्रथमोल्लासे वर्णितः । वैशेषिकसूत्रकर्त्ता कणादमहर्षिरपरोऽपि कणादभट्टाचार्यो भाषारत्नस्य कर्त्ता । मान्धाता महार्णवकर्मविपाकग्रन्थकारः अन्योऽपि मान्धाता महाभारते राजधर्मे ६४ अध्याये निरूपितः । एवमेव बहवो वर्त्तन्ते ।

(१) मन्त्रद्रष्टृत्वमृषित्वमिति सामान्यलक्षणं मन्त्रद्रष्टृत्वे सति महद्दर्शित्वं महर्षित्वं तथा च वक्ष्यमाणरीत्या ऋग्वेदादिसूक्त-द्रष्टृत्वात् तत्त्वज्ञानान्निःश्रेयसाधिगम इत्यादिशास्त्रकर्तृत्वेन महद्दर्शित्वाल्लक्षणसमन्वयः ।

महर्षिलक्षणं वायुपुराणे पूर्वार्द्धे ५९ अध्याये ।

"ऋषीत्येष गतौ धातुः श्रुतौ सत्ये तपस्यथ ।
एतत्सन्नियते तस्मिन् ब्रह्मणा स ऋषिः स्मृतः॥७९॥"इत्यादि ।
"यस्मान्न हन्यते मानैर्महान् परिगतः पुरः ।
यस्मादृषन्ति ये धीरा महान्तं सर्वतो गुणैः ॥
तस्मान्महर्षयः प्रोक्ता बुद्धेः परमदर्शिनः ॥ ८२ ॥"

विस्तरस्तु तत्रैवाथ मत्स्यपुराणे १४४ अध्यायेऽप्यनुसन्धेयः ।

स्मिन् काले कस्मिन् देशे आविरासीदिति निर्णयस्तु दूरे गतस्तस्य नाम्न्येव विवादो वर्तते । स च गोतमो गौतमो वा ? दृश्यते चानेकत्र गोतम इति बहुत्र च गौतम इति । किन्तु नैषधचरिते १७ सर्गे ७५ श्लोकः ।

"मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम् ।
गोतमं तमवेत्यैव यथा वित्थ तथैव सः(१) ॥" इति

महापण्डितेन लोकोत्तरविद्यावैभवशालिना श्रीहर्षेणोक्तत्वात्(२) ।

न्यायसूत्रवृत्तावप्यन्ते ।

---

ऋषिलक्षणं तेषां चातुर्विध्यमुक्तं सम्प्रदायविद्भिः । यथा

"ऋषीणाम् ऋषिपुत्राणामृषिकाणां स्वयम्भुवाम् ।
तथा नामाभिजानीयाद्यथैषां मन्त्रदृष्टयः ॥
प्रवरैर्थे समाख्याता ऋषयस्ते इति श्रुतिः ।
तत्पुत्रपौत्रनप्तार ऋषिपुत्रा इति स्मृताः ॥
राजन्यवैश्या ऋषिकास्त्रियस्तास्तिर्यग्योनयः ।
देवादेवाप्सरोनद्यो गन्धर्वास्ते स्वयम्भुवः ॥" इति ।

(१) यः सचेतसां चैतन्यवतां सुखदुःखाद्यनुभवितॄणामात्मनां शिलात्वाय पाषाणावस्थारूपायै मुक्तये मुक्तिं प्रतिपादयितुं शास्त्रमूचे न्यायदर्शनं निर्ममे यूयं तं स्वयमेव अवेत्य विचार्यैव गोतमम् एतन्नामानं मुनिं यथा वित्थ जानीथ स एव तथा नान्य इत्यर्थः । स गोतमः यथा युष्माकं संमतस्तथा ममापीत्यर्थः । नायं परं नाम्ना गोतमः किं तु प्रकृष्टो गौर्गोतमो महावृषभः पशुरेव । इति भगीरथाद्यष्टीकाकाराः ।

(२) श्रीहर्षेण स्वकपोलकल्पनया नोक्तमिदं किन्तु चार्वाकोक्तिरेवाक्षरशोऽनूदिता । चार्वाकस्य कथा तु महाभारते शान्तिपर्वणि राजधर्मे ३८ । ३९ अध्याये विस्तरेण वर्तते । यथा

"वैशम्पायन उवाच ।
ततस्तत्र राजानं तिष्ठन्तं भ्रातृभिः सह ।

उवाच देवकीपुत्रः सर्वदर्शी जनार्दनः ॥
वासुदेव उवाच ।
ब्राह्मणास्तात लोकेऽस्मिन् अर्चनीयाः सदा मम ।
एते भूमिचरा देवा वाग्विषाः सुप्रसादकाः ॥
पुरा कृतयुगे राजंश्चार्वाको नाम राक्षसः ।
तपस्तेपे महाबाहो बदर्यां बहुवार्षिकम् ॥
वरेण छन्द्यमानश्च ब्रह्मणा च पुनः पुनः ।
अभयं सर्वभूतेभ्यो वरयामास भारत ॥
द्विजावमानादन्यत्र प्रादाद्वरमनुत्तमम् ।
अभयं सर्वभूतेभ्यो ददौ तस्मै जगत्पतिः ॥
स तु लब्धवरः पापो देवानमितविक्रमः ।
राक्षसस्तापयामास तीव्रकर्मा महाबलः ॥" इत्युपक्रम्य
"स एष निहतः शेते ब्रह्मदण्डेन राक्षसः ।
चार्वाको नृपतिश्रेष्ठ मा शुचो भरतर्षभ ॥" इत्युक्तम् ।

अत्र केचित् बृहस्पतिशिष्य एकश्चार्वाको दुर्योधनसखः (धूर्तः) राक्षसश्चार्वाकोऽपर इति चार्वाकद्वयं निर्मूलं कल्पयन्ति । तथात्वेऽपि वेदादिनिन्दकस्य न्यायकर्तृगोतमनिरूपकस्य चार्वाकस्य नलकथाप्रसङ्गे निरूपणान्महाभारतेऽस्य निरूपणं नासम्भवीति मन्तव्यम् ।

अपि च शान्तिपर्वणि मोक्षधर्मे १८६ अध्याये । भारद्वाज उवाच ।

"यदि प्राणयते वायुर्वायुरेव विचेष्टते ।
श्वसित्याभाषते चैवं तस्माज्जीवो निरर्थकः ॥"

अत्र नीलकण्ठटीकाकारः । नित्यं समीक्ष्यत इति जीवस्यानौपाधिकं रूपं दीप्यत इत्युक्तं तल्लोकायतमते स्थित्वा आक्षिपति । यदीति । एवमेव २१८ अध्याये २३ तमे श्लोके लोकायतमतसञ्चारः कृतः "दृश्यमाने विनाशे च प्रत्यक्षे लोकसाक्षिके" इत्यादिना ।

चार्वाकः चारुः लोकसम्मतो वाको वाक्यं यस्य पृषोदरादित्वात् साधुः । "अत एव तस्य चार्वाकमतस्य लोकायतमित्यन्वर्थपरं नामधेय"मिति सर्वदर्शनसंग्रहे चार्वाकदर्शने माधवाचार्येणोक्तत्वात् चार्वाको लोकायतिकश्चैक एवेति ।

अपरे तु "अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।

"एषा मुनिप्रवरगोतमसूत्रवृत्तिः(१)
श्रीविश्वनाथकृतिना सुगमाल्पवर्णा ।
श्रीकृष्णचन्द्रचरणाम्बुजचञ्चरीक-
श्रीमच्छिरोमणिवचःप्रचयैरकारि ॥"
इति नैयायिकप्रवरेण विश्वनाथन्यायपञ्चाननेनोक्तत्वात् ।

---

बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥ " इति
"त्रयो वेदस्य कर्तारो धूर्तभण्डनिशाचराः ।"

इत्याद्यपि च यद्दतश्चार्वाकराक्षसस्यैवेदमपि "मुक्तये यः शिलात्वाये"त्यादिवचनमित्यविज्ञाय न्यायशास्त्रस्य वास्तविकनिन्दायां तद् प्रमाणयन्ति तन्नूपहासास्पदम् राक्षसोक्तत्वेन शिष्टापरिगृहीतत्वात् । *न चैवं रीत्या गोतमनामाप्युपहासास्पदमित्यप्युच्यता*मिति वाच्यम । वेदानां वेदसञ्ज्ञयैव अग्निहोत्रस्याग्निहोत्रसञ्ज्ञयैवोचरितत्वात् । यथा च अग्निहोत्रत्रिदण्डभस्मधारणादीनां बुद्धिपौरुषहीनानां जीविकात्वेन व्यवस्थापनं कृतम तथैव गोतममहर्षेर्गोतमत्वं व्यवस्थापितं महापशुत्वमिति यावत् तस्य गोतम इति नाम्नि तत्र सम्भवतीति भावः ।

अत्र महाभारते राजधर्मे युधिष्ठिरस्य राज्याभिषेकसमये चार्वाकः समायातश्चार्वाकाद् बहुपूर्वो बाल्पपूर्वो महर्षिगोतम इति लौकिकानां मते निर्णयो भवितुमर्हतीति ।

स च समय "आसन् मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ" इत्यादिबृहत्संहितावचनेन यदा सप्तर्षयो मघानक्षत्रे स्थितास्तदेति ५४०० गतवर्षासन्ने सम्भवतीति गणितशास्त्रानुसारेणैतिहासिकसूत्रेन च न्यायदर्शनभाष्यकारवात्स्यायनचरितेऽत्रैव निपुणतरमुपपादयिष्यते ।

(१) अस्मन्निकटे पुण्यग्राम(पूनानगर)लिखितं पुरातनमेकं परिशुद्धं पुस्तकं वर्तते तत्राऽयमेव पाठः तथा इण्डियाआफिस्लाइब्रेरीपुस्तकालये वर्तमाने लिखितपुस्तकेऽपि एवं १८२८ इसवीयवर्षे कलिकातानगरे मुद्रिते ऽपि पुस्तके । नवीने तु क्वचित् शोधकप्रमादाद्"गौतमसूत्रवृत्ति"रिति जातम् ।

वेदादिभाष्यकर्त्रा श्रीमाधवाचार्येण च सर्वदर्शनसंग्रहे(१) ऽक्षपाददर्शने "तत्र प्रथमाध्यायस्य प्रथमाह्निके भगवता गोतमेन प्रमाणादिपदार्थनवकलक्षणनिरूपणं विधाये"त्याद्युक्तत्वाद् श्रीजयनारायणतर्कपञ्चाननेन च वैशेषिकसूत्रविवृत्याद्यनेकनिबन्धकारेण वङ्गदेशस्थ–एसिआटिक्–सोसाइटीद्वारा मुद्रिते न्यायदर्शनपुस्तके "गोतममुनिप्रणीतं न्यायदर्शन"मिति लिखितत्वात् । श्रीतारानाथतर्कवाचस्पतिभट्टाचार्येणापि "वाचस्पत्ये बृहदभिधाने न्यायशब्दे न्यायशास्त्रस्य गोतमप्रणीतत्वेनैवावधारणाद् गोतम इत्येव निर्णीतं भवति ।

अयं च गोतमः पुरोहितत्वेन सूक्तकर्तृत्वेन वा ऋग्वेदसंहिता–तद्भाष्य–अथर्ववेदसंहिता–शतपथब्राह्मणादिषु अनेकेषु स्थलेषूक्त इत्यस्य समयादिनिर्णये वेदा एव प्रमाणानीति ।

तथाहि ऋग्वेदसंहितायाम् १ अष्टके ५ अध्याये ६२ सूक्ते ।

सनायते गोतम इन्द्र नव्यमतक्षद्ब्रह्म हरियोजनाय ।
सुनीथाय नः शवसान नोधाः प्रातर्मक्षू धियावसुर्जगम्यात् ॥

एवमेव ७७ । ७८ सूक्तयोरपि ।

अथर्ववेदसंहितायाम् ४ काण्डे ६ अनुवाके, १८ काण्डे ३ अनुवाकेऽपि गोतमस्य चर्चास्ति ।

माध्यन्दिनीये शतपथब्राह्मणे(२) १ काण्डे ४ अध्याये । "विदेघो ह माथवोऽग्निं वैश्वानरं मुखे बभार तस्य गोतमो राहूगण ऋषिः पुरोहित आस तस्मै ह स्यामन्त्र्यमाणो न प्रतिशृणोति नन्मेऽग्निर्वैश्वानरो मुखान्निष्पद्याताऽइति ।" एवमेवा-

(१) एसिआटिक् सोसाइटीमुद्रिते पुस्तके ११२ पृष्ठेऽवलोक्यम् ।
(२) Dr. Albrecht Weber. वेवरमहाशयमुद्रिते पुस्तके ३४ पृष्ठे द्रष्टव्यम् ।

ग्रेऽपि तस्मिन्नेवाध्याये ।

ऋग्वेदसंहिताभाष्ये प्रथमाष्टके ५ अध्याये २१ वर्गे । "त्रयोदशानुवाके एकादश सूक्तानि तत्रोपप्रयन्त इति नवर्चं प्रथमं सूक्तम् । तत्रानुक्रम्यते । उपप्रयन्तो नव गोतमो राहूगणो गायत्रं त्विति । अस्यायमर्थः रहूगणनामा कश्चिदृषिः तस्य पुत्रो गोतमोऽस्य सूक्तस्य ऋषिरि"त्यादि ।

अपि च । यजुर्वेदीयकाठकोपनिषदि ५ वल्ल्याम् । छान्दोग्योपनिषदि ४ प्रपाठके ४ खण्डे, ५ प्रपाठके ३ । ४ । ५ । ६ । ७ । १६ । खण्डेषु । बृहदारण्यकेऽपि ४ अध्याये ६ ब्राह्मणे गोतमस्य चर्चाया वर्तमानत्वान्निश्चितं भवति गोतमस्यापत्यं गौतमः ऋष्यन्धकवृष्णिकुरुभ्यश्च ( पाणिनिः अ. ४ पा. १ सू. ११४ ) इत्यनेन अण्प्रत्यये कृते गोतमं विना गौतमस्यासम्भवात् गोतम एव मूलपुरुषः ।

अत एव बृहदारण्यकोपनिषदि ५ अध्याये ७ ब्राह्मणे "सोऽब्रवीत् पतञ्चलं काप्यं याज्ञिकांश्च यो वै तत् काप्य सूत्रं विद्यात् तञ्चान्तर्यामिणमिति स ब्रह्मवित् स लोकवित् स देववित् स वेदवित् स भूतवित् स आत्मवित् स सर्ववि- दि"त्युपक्रम्य "स होवाच वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्ति" इत्युक्तम् । अत्र शाङ्करभाष्ये "गौतमेति गोत्रतः" इत्युक्तम् । अन्ये तु अस्यामेवोपनिषदि ४ अ. २ ब्रा. "इमावेव गोतमभरद्वाजावयमेव गोतमोऽयं भरद्वाज" इत्यत्र गोतमशब्दवदत्रापि गोतम एवेत्याहुः ।

यद्यपि नैषधचरितश्लोके शास्त्रमित्येवोक्तं न तु न्यायशास्त्रमिति तथापि भगीरथ-नृहरि-नारायण-लक्ष्मणप्रभृ-

तिलट्टीकाकारैः "शास्त्रं न्यायदर्शनं" "तदत्यन्तविमोक्षोऽपवर्ग इतिसूत्रेण" इत्यस्यैवोक्तत्वात् गोतमकृतस्य अस्यैव न्यायशास्त्रस्य ग्रहणम्। अपि च गोतमान्तरेण कृतमर्वाचीनमिदं न्यायशास्त्रमित्यपि न भ्रमितव्यम्। विश्वनाथन्यायपञ्चाननेन न्यायसूत्रवृत्तौ प्रथमाध्याये प्रथमसूत्रव्याख्याने न्यायस्य सर्वशास्त्रोत्तमत्वसाधनप्रस्तावे "तथा च न्यायो मीमांसा धर्मशास्त्राणीति श्रुति(१)"रित्युक्तत्वात् वेदे(२) न्यायशब्दोपादानान्न्यायस्यातिचिरकालावस्थायित्वात् तत्क-

(१) मुण्डकोपनिषदि प्रथममुण्डके "द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च तत्र परा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति इतिहासपुराणं न्यायो मीमांसा धर्मशास्त्राणीत्यपरा यया तदक्षरमधिगम्यते" अस्मन्निकटे वर्तमानेऽतिप्राचीने पुस्तकेऽयं पाठो वर्तते। मुक्तद्यायमन्यासूपनिषत्सु मन्वादिस्मृतिष्वपि तथा पातञ्जले व्याकरणमहाभाष्ये च इतिहासपुराणन्यायमीमांसादीनां परिकीर्तनात् शिक्षाद्यङ्गसहितानामुपनिषद्धर्माणां चतुर्णां वेदानां परविद्यात्वं सर्वोत्कृष्टत्वं न्यायाद्युपाङ्गसहितानामितिहासपुराणानां वेदोपबृंहणरूपाणामपराविद्यात्वमिति विभागस्याप्यन्वर्थत्वाच्च। मुद्रितमुण्डकोपनिषदि तथा पाठाभावात् स चांशो निपतित इति प्रतिभाति। ऋग्वेदीयचरणव्यूहे तथा यजुर्वेदीयचरणव्यूहेऽपि दृश्यते। तथाहि "तस्मात् साङ्गमधीत्य ब्रह्मलोके महीयते। तथा प्रतिपदमनुपदं छन्दो भाषा धर्मो मीमांसा न्यायतर्का इत्युपाङ्गानि।"इति। जीर्णं प्राचीनं लिखितं चरणव्यूहपुस्तकमस्मन्निकटे वर्तते। तत्राप्ययं पाठो वर्तते। तत्र लेखकेन लिपिकाल एवं लिखितः "स्वस्ति संवत् १६४२ वर्षे माघवदि १२ शनौ पञ्चोलीदापेपापठनार्थं द्विजजनचरणपांशुधूसरमौलिना महादेवेन कृष्णार्पणबुद्ध्या लिखितं॥"

(२) श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः। मनुस्मृति॰ अ॰ १ श्लो॰ १०।

तुर्गोतमस्याप्यतिचिरकालावस्थायित्वं निर्विवादमेव । अत्र श्रुतौ मीमांसाधर्मशास्त्रयोः साक्षादुक्तत्वान्न्यायशब्दवाच्ययोरपि तयोर्ग्रहणं न सम्भवति तस्मान्न्यायशास्त्रस्य ऋग्वेदसंहिताशतपथब्राह्मण–यजुर्वेदीयकाठकोपनिषत्–सामवेदीयच्छान्दोग्योपनिषत्प्रतिपादितगोतम(१)प्रणीतत्वे नासमञ्जसमिति । एतदनुकूलान्येव वचनानि पुराणेष्वपि उपलभ्यन्ते । तथाहि पद्मपुराणे उत्तरखण्डे २६३ अध्याये ।

"कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत् ।
गोतमेन(२) तथा न्यायं सांख्यं तु कपिलेन वै ॥

---

(१) केचित्तु वायुपुराणीयगयामाहात्म्ये २ अध्याये ।
"ब्रह्मा संभृतसंभारो मानसानृत्विजोऽसृजत " इत्युपक्रम्य ।
"सुकपालं गोतमं च तथा वेदशिरोमतम् । "
इत्युक्तं वचनमवलम्ब्य श्वेतवाराहकल्पे गोतमस्य ब्रह्मणः पुत्रत्वं वदन्ति तथात्वे ।

" क्षीरोदार्णवसम्भूत लक्ष्मीबन्धो निशाकर ।
गृहाणार्घ्यं मया दत्तं गणेशप्रीतिवर्द्धनम् ॥ "

इति गणेशचतुर्थीव्रतकथायां दर्शनाच्चन्द्रमसः समुद्रादुत्पत्तिः ।
अपि च " नेत्राभ्यां वारि सुस्राव दशधा द्योतयद्दिशः ।
तद्गर्भविधिना हृष्टा दिशो देव्यो दधुस्तदा ॥
समेत्य धारयामासुर्न च ताः समशक्नुवन् ।
स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः ॥
पपात भासयँल्लोकाञ्छीतांशुः सर्वभावनः ॥ " इति

हरिवंशात् अत्रेर्महर्षेर्नेत्रादुत्पत्तिः अस्य च समन्वयः कल्पभेदाद्भवतीति गोतमोत्पत्तावपि तथैव समन्वयः कार्य इति । गयामाहात्म्ये मुद्रिते तु गौतमं चेति दृश्यते ।

(२) अपरोऽपि गोतमो मत्स्यपुराणे ४८ अध्याये निरूपितः । अयं च उशिजान्महर्षेर्ममतागर्भे स्थितो बृहस्पतिशापाद् दीर्घतमा नाम (अन्धः) ऋषिरभूत् पुनः सुरभेरनुग्रहात् गोभिस्तमो ध्व-

( पाणिनिः अ० ४ पा० १ सूत्र ११४ ) इत्यनेन अण्प्रत्यये कृते अनेके गौतमाः सम्भवन्ति । तथाहि वाल्मीकिरामायणे बालकाण्डे ५० सर्गे

"शतानन्दं पुरस्कृत्य पुरोहितमनिन्दितः ।"
"प्रतिगृह्य तु तां पूजां जनकस्य महात्मनः ।" इति ।

"गौतमश्च शतानन्दो जनकानां पुरोहितः ।" इति उत्तररामचरिते "गौतम. गोतमस्य महर्षेरपत्यं पुमान्"इति तट्टीकाकारः ।

शतानन्दस्य पिता गोतमः माता च अहल्या अस्मिन् विषये साधकानि बाधकानि च प्रमाणानि सङ्गिरन्ते पण्डिता- किन्तु साधके ममापि संमतिः गौतमो राहूगणो विदेघराजस्य तत्प्रत्यस्य पुरोहित आसीदिति शतपथब्राह्मणे प्रतिपादितमिति पूर्वं पृ. १८ पं. २० दर्शितम् । तत्पुत्रस्य शतानन्दस्य जनकानां पुरोहितत्वे किमपि नासमञ्जसम् । एवं चेद्वाल्मीकिरामायणे बालकाण्ड ४८–५१ सर्गेषु मिथिलाभूमौ जनकपुरोपकण्ठे गौतमाश्रमस्य वर्णनात् तस्मिन् देशे न्यायशास्त्रस्य प्रणयनकथनं न साहसास्पदं भविष्यतीति । अत एव मिथिलायां न्यायचर्चाधिक्यात् उदयनवाचस्पति–गङ्गेश–वर्धमानोपाध्यायैरनेके न्यायरहस्यग्रन्था निर्मिता इति । केचित्तु "अक्षपादः कणादश्च उलूको वत्स एव च"इत्यादिवायुपुराणमुद्धृत्य अन्तसमये गोतमस्य प्रभासगमनेन समन्वयं दर्शयन्ति । तच्चिन्त्यम् अपवर्गनिरूपकं न्यायशास्त्रं निर्मायापि किमपरमवशिष्टं यदर्थं प्रभासं गत्वा सोमशर्मणो ब्राह्मणस्य शिष्यतां गत इति विचारासहत्वात् ।

अपि चामरकोशे बुद्धनामभेदेऽपि ।

"सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः ।" इत्यादि ।
"गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः ।" इति ।

अन्यच्च । जैनतीर्थङ्करस्य २४ संख्यकस्य महावीरस्वामिनः शिष्योऽपि गौतमः यतो गौतमः पृच्छति महावीरस्वामी भणतीति जैनागमेषु दृष्टत्वात् ते चागमाः उभयसंवादरूपा एवेति ।

एतेनापि प्रमाणेन गोतमस्य चिरन्तनत्वमेव सिद्धम् ।

द्विजन्मना जैमिनिना पूर्वं वेदमयार्थतः ।
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् ॥" । इत्यादि

स्कन्दपुराणे कालिकाखण्डे १७ अध्याये ।

"गौतमः स्वेन तर्केण खण्डयन् तत्रतत्र ही"त्यादि ।

अपि च न्यायदर्शनवात्स्यायनभाष्येऽन्ते ।

"योऽक्षपाद(१)मृषिं न्यायः प्रत्यभाद्वदतां वरम् ।
तस्य वात्स्यायन इति भाष्यजातमवर्तयत ॥" इति ।

न्यायवार्त्तिकारम्भे च ।

"यदक्षपादः प्रवरो मुनीनां
शमाय शास्त्रं जगतो जगाद ।" इति

इत्यनेनास्य गोतमस्य महर्षेः अक्षपाद इति नामान्तरं निष्पन्नं भवति ।

महाभारतटीकायां नैलकण्ठ्यामादौ ।

"कणभक्षमक्षचरणं जैमिनिकपिलौ पतञ्जलिं च नुमः"।

इति दर्शनात् अक्षचरण इत्यपि नामान्तरमेवेति ॥

---

(१) "नैयायिकस्त्वक्षपादः" इत्यमरः । ( भट्टकीलहार्नेनिर्देशेन मुद्रितेऽमरकोशे १६७ पृष्ठे ) नैयायिकः अक्षपादः द्वे प्रमाणप्रमेयसंशयेत्यादिषोडशपदार्थवादिनो गौतमस्ये"ति तद्व्याख्यातारः । अक्षं नेत्रं दर्शनसाधनतया जातः पादेऽस्येति तदर्थः ।

कदाचिद्वेदव्यासापरनामधेयः कृष्णद्वैपायनमहर्षिर्गौतमेन सक्तः इदमूचे यदनेन जीवब्रह्मणोर्भेदस्तर्केण प्रतिपादित इत्यस्य मुखं नावलोकयिष्यामीति तावदेव गौतमेन महर्षिणा व्यासस्यावलोकनार्थं पादः प्रसारित इति पादे चक्षुः सञ्जातं ततश्च व्यासो गौतममक्षपादनाम्ना स्तुतवानिति पौराणिकीं कथां कथयन्ति वृद्धाः । इमामेव कथां भङ्ग्यन्तरेण समुद्धृत्य वाचस्पत्ये बृहदभिधानेऽक्षपादशब्दे शब्दार्थसमन्वयः कृत इति ।

## अथ न्यायशास्त्रप्रशंसा ।

अनेन गोतमेन प्रणीतस्य न्यायशास्त्रस्य सर्वविद्योत्तमत्वं प्रतिपादयन्ति स्म श्रुतिस्मृतिपुराणेषु ।

तथाहि "न्यायो मीमांसा धर्मशास्त्राणीति श्रुतिः(१) ।" मनुः ।

"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥"(२) इति ।

याज्ञवल्क्योऽपि ।

"पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥"(३) इति ।

विष्णुपुराणे च ।

"अङ्गानि चतुरो वेदा मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चैव ते त्रयः ।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव तु ॥"(४) इति ।

अत्र कर्मोपासनाज्ञानात्मककाण्डत्रयप्रतिपादकत्वाद् वेदानां काण्डत्रयात्मकत्वा(५)न्मीमांसापि कर्ममीमांसा भक्तिमीमांसा

---

(१) पुराणं न्यायो मीमांसा धर्मशास्त्राणीति आत्मोपनिषदि २ खण्डे।

(२) इदं वचनं तु "वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेतीति" रघुवंशस्यपञ्चमसर्गस्थश्लोकव्याख्याने मल्लिनाथेन समुद्धृतम् ।

(३) याज्ञवल्क्यस्मृतौ १ अध्याये ३ श्लोकः । अत्र पुराणतर्कमीमांसेति केचित् पठन्ति, अनेनापि पाठेन तर्कपदेन न्यायस्यैव ग्रहणम् ।

(४) विष्णुपुराणे ३ अंशे ६ अध्याये । एवं वायुपुराणे पूर्वार्द्धे ६१ अध्याये श्लो. ७८ । ७९ ।

(५) गीतागूढार्थप्रकाशे आरम्भे

ब्रह्ममीमांसा चेति त्रिविधैव मीमांसापदेन ग्राह्या । परमात्मजीवात्मनोर्भेदस्य सिद्धान्तत्वेन प्रतिपादकत्वाद्वैशेषिकसांख्ययोगानां न्यायविस्तरपदेन न्यायेऽन्तर्भाव इति प्राधान्येन न्यायपदोपादानम् । यद्यपि सांख्ये परमात्मानिरूपणं नास्ति तथापि "एकं सांख्यं च योगं च यः पश्यति स पश्यति" इति वचनप्रामाण्यात् सांख्ययोगयोरेकवाक्यतया सांख्यस्यापि ग्रहणम्(१) ।

अत एव मनुरपि । १२ अध्याये १०६ श्लो० ।

"आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥" इति ।

इदमेव मनुवचन(२)मुद्ग्राह्य

---

"सच्चिदानन्दरूपं तत् पूर्वं विष्णोः परं पदम् ।
यत्प्राप्तये समारब्धा वेदाः काण्डत्रयात्मकाः ॥
कर्मोपास्तिस्तथा ज्ञानमिति काण्डत्रयं क्रमात् ।
तद्रूपाष्टादशाध्यायैर्गीता काण्डत्रयात्मिका ॥" इत्यादि ।

(१) जरन्नैयायिकजयन्तस्तु न्यायमञ्जर्याः प्रारम्भे एव । "न्यायविस्तरशब्देनैतदेव शास्त्रमुच्यते । न्यायस्तर्कोऽनुमानं सोऽस्मिन्नेव व्युत्पाद्यते । यतः सांख्यार्हतानां तावत्क्षपणकानां कीदृशमनुमानोपदेशकौशलं कियदेव तत्तर्केण वेदप्रामाण्यं रक्ष्यते इति नासाविह गणनार्हः इति ।"

(२) अत्र मनुवचनं नैकदेशीयत्वेन ग्राह्यम् । मेधातिथिप्रभृतिभाष्यकारैर्मन्वर्थमुक्तावलीकारैः कुल्लूकभट्टैरपि "मनुर्वै यत्किञ्चावदत् तद्भेषजमिति ।

ऋचो यजूंषि सामानि मन्त्रा आथर्वणाश्च ये ।
सप्तर्षिभिस्तु यत् प्रोक्तं तत्सर्वं मनुरब्रवीत् ॥" इत्याद्युक्तम् ॥

मनोः प्राधान्ये मन्वर्थमुक्तावल्युद्धृतच्छान्दोग्यब्राह्मणे "मनुर्वै यत्किञ्चिदवदत् तद्भेषजं भेषजताया इति ।" एवं छान्दोग्योप-

तार्किकरक्षायां(१) तर्कस्य सर्वप्रमाणानुग्राहकत्वं प्रसाधितम्। एतस्मादपि तर्कनिरूपकन्यायशास्त्रस्य ग्रहणं सम्भवति। अत्र तर्कशब्देन गोतमप्रणीताया आन्वीक्षिक्या एव ग्रहणम्। "आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयो"रित्यमरकोशात्। अत एव सर्वलिङ्गसंन्यासग्रन्थे "नैषा तर्केण मतिरापने- येति कठोपनिषदः २।९" "तर्कादिशास्त्रपठनं वर्जयेच्छ्रुति- शासना"दित्यादिविदोन्तिकार्यः सङ्गच्छत इति। न्यायदर्श- नवात्स्यायनभाष्ये १ सूत्रव्याख्याने।

"सेयमान्वीक्षिकी विद्या·
प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता॥"(२) इति।

---

निषदि ८ प्रपाठके १५ खण्डे "तद्धैतद्ब्रह्मा प्रजापतये उवाच प्र- जापतिर्मनवे मनुः प्रजाभ्य आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधी- यानो धार्मिकान् विदधदि"त्यादिदर्शनान्मनोः प्रशंसा वेदेऽपि वर्तत इति विज्ञेयम्।

बृहस्पतिनाप्युक्तम्।

"वेदार्थोपनिबद्धत्वात् प्राधान्यं हि मनोः स्मृतम्।
मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते॥
तावच्छास्त्राणि शोभन्ते तर्कव्याकरणानि च।
धर्मार्थमोक्षोपदेष्टा मनुर्यावन्न दृश्यते॥"

वचनमिदं कुल्लूकभट्टेन मनुटीकायां समुद्धृतं किन्तूपलभ्य- मानायां मुद्रितायां बृहस्पतिस्मृतौ नोपलभ्यते, उपलभ्यते च वृद्ध- बृहस्पतिस्मृतौ ग्रन्थोऽयं ३२०० श्लोकात्मको वर्तते इति श्रुतं मया श्रीगुरुचरणेभ्यः।

(१) तार्किकरक्षायां दिपण्डितजनर्ल्मुद्रिते पुस्तके १९५ पृष्ठेऽवलोक्यम्।

(२) अस्यार्थो न्यायवार्त्तिक-न्यायवार्त्तिकतात्पर्यटीका-न्या-

जयन्तोऽपि न्यायमञ्जर्याख्यायां न्यायसूत्रवृत्तौ प्रथमसूत्रावतरणिकायाम् । "इयमेवान्वीक्षिकी चतसृणां विद्यानां मध्ये न्यायविद्या गण्यते आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वतीति । प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षाऽनुमानमित्यर्थः । तद्व्युत्पादकं शास्त्रमान्वीक्षिकम् । ननु चतस्रश्चेद् विद्याः कथं चतुर्दश दर्शिताः" इत्युपक्रम्य "नन्वक्षपादात् पूर्वं कुतो वेदप्रामाण्यनिश्चय आसीत् । अत्यल्पमिदमुच्यते । जैमिनेः पूर्वं केन वेदार्थो व्याख्यातः पाणिनेः पूर्वं केन पदानि व्युत्पादितानि । पिङ्गलात् पूर्वं केन छन्दांसि रचितानि । आदिसर्गात् प्रभृति वेदवदिमाः विद्याः प्रवृत्ताः । संक्षेपविस्तरविवक्षया तु तांस्तांस्तत्र तत्र कर्तृनाचक्षते" इत्यन्तेनामुमर्थं निपुणतरमुपपादितवान् ।

अत एव गङ्गेशोपाध्याया अपि तत्त्वचिन्तामणौ

"अथ जगदेव दुःखपङ्कमग्नमुद्दिधीर्षुरष्टादशविद्यास्थानेष्वभ्यर्हिततमामान्वीक्षिकीं परमकारुणिको मुनिः प्रणिनाय" इत्याद्युक्तवन्तः ।

विश्वनाथन्यायपञ्चाननास्तु न्यायसूत्रवृत्तौ प्रथमसूत्रव्याख्याने ।

"श्रवणादनु पश्चादीक्षा अन्वीक्षा उत्रयनं तन्निर्वाहिका सेयमान्वीक्षिकी न्याय(१)तर्कादिशब्दैरपि व्यवह्रियते

यथार्थिकतात्पर्यपरिशुद्ध्यादौ बहुविस्तरेण श्रुतिस्मृतिपुराणप्रामाण्येन न्यायस्य सर्वविद्योत्तमत्वं व्यवस्थाप्य प्रपञ्चितोऽतो विस्तरभिया न निरूपितोऽस्माभिरिति ।

(१) न्यायदर्शनवात्स्यायनभाष्ये प्रमाणप्रमेयेत्यादिप्रथमसूत्रव्याख्याने "कः पुनरयं न्यायः । प्रमाणैरर्थपरीक्षणं न्यायः । प्र-

तथा च न्यायो मीमांसा धर्मशास्त्राणीति श्रुतिः। पुराणन्यायमीमांसेत्यादिस्मृतिः। मीमांसा न्यायतर्कश्च उपाङ्गः(१) परिकीर्तित इति पुराणम्।

त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम्।

---

त्यक्षागमाश्रितमनुमानं सान्वीक्षा प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा तया प्रवर्तत इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रम्।" अत्र तात्पर्यटीका "पञ्चरूपश्चतूरूपो वा हेतुर्न्यायः। प्रतिज्ञाद्यवयवसमूहो वा न्यायः। नीयते प्राप्यते विवक्षितार्थसिद्धिरनेनेति न्याय इति।"

निर्णीयतेऽनेनेति न्याय इति व्युत्पत्त्या न्यायशब्दो वैदिकपदार्थनिर्णायकेऽधिकरणभेदे प्रयुज्यते अत एव जैमिनीयन्यायमालाविस्तरे माधवाचार्याः "सर्वे न्यायाः समर्थिता भवन्तीति।" क्वचिद्धर्मशास्त्रेऽपि न्यायशास्त्रत्वेन प्रयुज्यते। काकतालीयन्यायादौ आभाणके न्यायशब्दप्रयोगस्तु पारिभाषिकस्ते च न्याया लौकिकन्यायसंग्रहग्रन्थे ३३४ संख्यकाः पण्डितश्रीरामदयालुशिष्यश्रीरघुनाथेन संगृहीताः।

(१) वेदाङ्गानि अथर्ववेदीयमुण्डकोपनिषदि १ मुण्डके "द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च। तत्र परा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति॥"

पाणिनीयशिक्षादौ च वेदाङ्गानां निरूपणं यथा

"छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्॥
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते॥" इति

वेदाङ्गोपाङ्गभेदाः शिक्षाकल्पव्याकरणभेदादयश्चतुर्वेदपरिशिष्टसंग्रहभूमिकायां जैनेन्द्रव्याकरणभूमिकायां च निरूपयिष्यन्तेऽस्माभिः।

आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः॥ इति मनुः(१)

तथा । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतर इत्यादि(२) । मोक्षधर्मे भारते ।

तत्रोपनिषदं तात परिशेषं तु पार्थिव ।

मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं पराम् ॥

इत्युपनिषदर्थश्चान्वीक्षिक्यनुसारी ग्राह्य" इत्याद्युक्तवन्तः ।

देवीपुराणे ऽपि ४८ अध्याये ।

"आत्मवेदनशीलत्वादन्वीक्षणपराथ वा ।

अन्वीक्षाकरणत्वाद्वा तस्मादान्वीक्षिकी स्मृता ॥" इति ।

कामन्दकोऽपि ।

"आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती ।

विद्याश्चतस्र एवैता लोकसंस्थितिहेतवः ॥

आन्वीक्षिक्याऽऽत्मविज्ञानं धर्माधर्मौ त्रयीस्थितौ ।

अर्थानर्थौ च वार्तायां दण्डनीतौ नयानयौ ॥" इति ।

इमामेवान्वीक्षिकीं विद्यामध्यात्मविद्यात्वेन दत्तात्रेयः अलर्काय प्रह्लादादिभ्य ऊचिवानिति श्रीमद्भागवते महापुराणे १ स्कन्धे ३ अध्याये १० । ११ श्लोके प्रतिपादितं यथा

"पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम् ।

प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम् ॥

षष्ठे अत्रेरपत्यत्वं वृतः प्राप्तो ऽनसूयया ।

आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान् ॥" इति ।

अत्र टीकाकाराः, तत्र श्रीधरस्वामी आन्वीक्षिकीमात्मवि-

(१) मनुस्मृतौ ७ अध्याये श्लो० ४३ । विस्तरस्तु मेधातिथिभाष्यादौ द्रष्टव्यः ।

(२) मनुस्मृतौ १२ अध्याये श्लो० १०६ ।

द्याम् । राधारमणदासगोस्वामी अन्वीक्ष्यते आत्मा इत्यन्वीक्षा तामधिकृत्य ताम् । वीरराघवः आन्वीक्षिकीमध्यात्मविद्याम् । विजयध्वजः आन्वीक्षिकीं तत्त्वविद्याम् । वल्लभाचार्यः आन्वीक्षिकीं योगपुरःसरामात्मविद्याम् । विश्वनाथचक्रवर्त्ती आन्वीक्षिकीमात्मविद्याम् । शुकदेवः अन्वीक्षिकीमध्यात्मविद्याम् ।

एतेन न्यायभिन्ना आन्वीक्षिकी न प्रतीयते । अत एव "आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयो"रित्यमरकोशेऽपि निरूपितः ।

"नैयायिकानां मुख्येन वरुणस्यात्मजेन च ।
पराजितो यत्र वन्दी विवादेन महात्मना ॥"

इति महाभारतेऽपि तृतीयो नैयायिकः सङ्गच्छते अन्यथान्वीक्षिकीत्रितयापत्तेः । अयमेवार्थो न्यायनिन्दाप्रशंसासमन्वये ऽग्रे विस्तरेण प्रपञ्चयिष्यते ।

तत्र उपनिषदर्थश्च आन्वीक्षिक्यनुसारीग्राह्य इत्यत्र "तत्रोपनिषदं तात परिशेषं तु पार्थिवेत्यादि"महाभारतीयमोक्षधर्मं प्रमाणयन्ति स्म विश्वनाथन्यायपञ्चाननादयः परं समन्वयं तु न प्रदर्शितवन्त इति समन्वयः प्रदर्श्यते ।

महर्षिणा गोतमेन आन्वीक्षिकीत्यपरनामधेये न्यायशास्त्रे प्रमाणादिपदार्थनिर्वचनरूपाणि सूत्राणि(१) रचितानि उपनि-

---

(१) पराशरोपपुराणे १८ अध्याये ।

"स्वल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥" इति ।

अस्मन्निकटे वर्तमाने एकस्मिन् प्राचीने व्याकरणमहाभाष्यपुस्तके केनचित् पण्डितेन समुद्धृतम् ।

परस्त्वपि तत्रतत्रोपदेशप्रसङ्गेन स्वभावोक्त्या भङ्ग्यन्तरेण व तत्तत्पदार्थज्ञापनपराणि वाक्यान्युपलभ्यन्ते इति उपनिषद्वा-क्याभिप्रायकाण्येव सूत्राणीति विज्ञायते।

तथाहि। प्रमाण–प्रमेय–संशय–प्रयोजन–दृष्टान्त–सिद्धान्तावयव–तर्क–निर्णय–वाद–जल्प–वितण्डा–हेत्वाभास–च्छल-जाति–निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति न्याय-सूत्रम्।

प्रमाणम्–सौक्ष्म्यत्वादेतत् प्रमाणम्–न विना प्रमाणेन प्रमेय-स्योपलब्धिः। मैत्र्युपनिषदि ६। १४, प्रमाणैरेतैरवगतः। नृसिंहोत्तरतापन्याम् ९, प्रमाणाप्रमाणसाधारणा। सर्वोपनिषत्सारे ४, किं द्रव्यं किं स्थानं कति प्रमा-णम्। कालाग्निरुद्रोपनिषदि १, उपनिषदः प्रमा-णम्। मुक्तिकोपनिषदि २॥

प्रत्यक्षम्–अनो ह वै नाम प्रत्यक्षम्। छान्दोग्ये ८। २। १, त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि। तैत्तिरीयके। १। १। १॥

अनुमा वा अनुमानम्–बहिरात्मगत्या मत्यान्तरात्मनोऽनुमीयते गतिः अन्तरात्मगत्या गत्या बहिरात्मनोऽनुमीयते गतिः। मैत्र्युपनिषदि ६। १।

उपमा वा उपमानम् सप्ताविधेयं तस्योपमा। मैत्र्युपनिषदि ६।२२।

"अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम्।
सूत्रस्य लक्षणं चैतत् सहेतु अनुमापकम्॥" इति।

भामत्यां श्रीवाचस्पतिमिश्राः।

"लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।
सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः॥" इति।

केचित्तु "बह्वर्थसूचनात् सूत्र"मित्यप्याहुः।

शब्दः-प्रज्ञया श्रोत्रं समारुह्य श्रोत्रेण सर्वाञ्छब्दानाप्नोति । कौषीतकिब्राह्मणोप. । ३ । ६ । उपनिषदः प्रमाणम् । मुक्तिकोपनिषदि २ ॥

---

प्रमेयम्-प्रमेयोऽपि प्रमाणतां पृथक्त्वादुपैति । मैत्र्युपनिषदि६।१४।

आत्मा-कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा येन वा रूपं पश्यति येन वा शब्दं शृणोति येन वा गन्धाना-जिघ्रति येन वा वाच्यं व्याकरोति येन वा स्वादु चास्वादु च विजानाति । ऐतरेयोपनिषदि ३ अध्याये ।

आत्मानꣳ रथिनं विद्धि शरीरꣳ रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥
इन्द्रियाणि हयानाहुर्विषयाꣳस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥

कठोप. १ अध्या० । ३ वल्ल्याम् ।

महान्तं विभुमात्मानं मत्वा धीरो न शोचति ।

कठोप. ४ वल्ल्याम् ।

अविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा । बृहदा-रण्यके ४ । ५ । १४ ।

आत्मा वा अरे द्रष्टव्यः श्रोतव्यः । बृहदारण्य.२ । ४ । ५,

आत्मगुणाः )-इच्छयाप्नोति कैवल्यम् । अमृतबिन्दु. २९, विदेहमुक्ताविच्छा चेत् । मुक्तिकोपनिषदि १ । २९, द्वेषश्चाणुरमल्लोऽयम् । कृष्णोप. १५, तत्प्रयत्नेन शोधयेत्, मैत्र्युपनि - ६ । ३४, तत्पुरुषप्रयत्नसाध्यम् । मुक्ति-कोप. २, पौरुषेण प्रयत्नेन । मुक्तिकोप. २ । ६, अन्वेष्टव्यं प्रयत्नेन । मुक्तिकोप. ६३ ।

यदा वै सुखं लभते ऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञासे। छान्दोग्ये। ७।२२।१, तेषां सुखं शाश्वतं नेतरेषाम्। कठो. ५।१२, इतरे दुःखमेवापि यन्ति। बृहदारण्यके ४।४।१४, श्वेताश्वत. ३।१०। दुःखस्यान्तं भविष्यति। श्वेताश्वत. ६। २०, ज्ञानमात्मनि महति नियच्छेत। कठोप. ३। १३, अनेन ज्ञानमाप्नोति संसारार्णवनाशनम्। कैवल्य. २४।

शरीरम्–केन सुखदुःखे इति शरीरेणेति। कौषीतकि. १। ७, प्रज्ञया शरीरं समारुह्य शरीरेण सुखदुःखे आप्नोति। कौषीतकि. ३। ६, स्वे शरीरे यथाकामं परिवर्तते। बृहदारण्यके २।१।१८, अस्मिन् पञ्चात्मके शरीरे। गर्भोप. १।

इन्द्रियम्–भूतानीन्द्रियाणि। नृसिंहोत्तरता. ९। दशेन्द्रियाणि महो. १। चक्षुरादीन्द्रियं स्वतः। मुक्ति. २। २२।

अर्थाः–शब्दस्पर्शादयो ह्यर्थाः। मैत्र्युप. ४।२।

बुद्धिः–संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति। ऐतरेयोप. ३ अध्याये, बुद्धिर्धृतिः स्मृतिः प्रज्ञानम्। मैत्र्युप. ६। ३१।

मनः–दशेन्द्रियाणि मन एकादशम्। महोप. १, हृदीन्द्रियाणि मनसा सन्निवेश्य। श्वेताश्वत. २। ८, मनः सर्वेन्द्रियाणि च। मुण्डकोप. २। १। ३, इन्द्रियैर्मनसि सम्पद्यमानैः। प्रश्नोप. ३। ९।

प्रेत्यभावः—अञ्जसा प्रेत्य सम्भवः। बृहदारण्यके ३।९।२८।
फलम्—रतिमात्रं फलमस्याः। मैत्र्युप. ७।९।
दुःखम्—दुःखे नोद्वेगः। परमहंसोप. ३, कर्तृत्वादिदुःखनिवृत्तिद्वारा। मुक्ति. २।
अपवर्गः—सर्गस्वर्गापवर्गहेतुः। मैत्र्युप. ६।३०, अध्यवसायस्य दोषक्षयाद्धि मोक्षः। मैत्र्युप. ६।३०, वद्धोऽतस्तद्विपरीतो मुक्तः। मैत्र्युप. ६।३०, तन्निवृत्तिर्मोक्षः। सर्वोपनिषत्सारे १, मोक्षः स्याद्वासनाक्षयः। मुक्तिकोप. २।६८।

अनेनैव दिशा संशयादयोऽपि पदार्थास्तत्रतत्रोक्ता वेदितव्या विस्तरभयादिहोपरम्यते।

एवमुपनिषत्सु तत्रतत्र तर्क–चिकित्सित–योग–वेदान्त–मीमांसा–ऋग्यजुःसामाथर्ववेदेतिहासपुराणादिविद्यानां नामानि तत्प्रतिपाद्यविषयाश्च वर्तन्त इत्यवगन्तव्यम्।

अत एव "आदिसर्गात् प्रभृति वेदवदिमा विद्या" इत्यादि २९ पृष्ठोक्तजयन्तलेखोऽपि सङ्गच्छत इति।

तच्च न्यायशास्त्रं(१) पञ्चाध्याय्यात्मकं तथा च न्यायवा-

---

(१) केचित्तु वात्स्यायनभाष्ये आत्मशरीरेन्द्रियार्थेत्यादिप्रमेयसूत्रव्याख्याने "अस्त्यन्यदपि द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयम्। तद्भेदेन चापरिसंख्येयम्। अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात् संसार इति।" अपि च वैशेषिकशास्त्रे त्रय एव हेत्वाभासाः संक्षेपेण निरूपितास्त एव विस्तरेण पञ्च न्यायशास्त्रे निरूपिता इत्यादिना बलवतीं युक्तिं प्रदर्श्य न्यायापेक्षया वैशेषिकस्य प्राथम्यं निरूपयन्ति। तदसत्, मुक्तावलीप्रकाशादौ प्रमाणादिषोडशपदार्थानां न्यायोक्तानां वैशेषिकोक्तद्रव्यादिसप्तपदार्थेष्वन्तर्भावनिरूपणात्। सङ्क्षेपस्यैव पूर्वं कालाद्यस्थायित्वे "पदार्थो द्विविधो भावोऽभावश्च भावःषड्विधः अ-

र्त्तिके आरम्भे "शास्त्रं पुनः प्रमाणादिवाचकपदसमूहो व्यूह-विशिष्टः पदं पुनर्वर्णसमूहः पदसमूहः सूत्रम् सूत्रसमूहः प्रकरणम् प्रकरणसमूह आह्निकम्. आह्निकसमूहोऽध्यायः पञ्चाध्यायी शास्त्रम्" इति ।

तत्र प्रथमाध्यायान्ते ।

"तन्त्रप्रतिज्ञा संसारस्तन्निवृत्तिश्च संविदा ।
उद्देशो लक्षणं चैव तत्त्वानामिह कीर्तितम् ॥"

द्वितीयाध्यायान्ते ।

"संशयस्य प्रमाणानां विचारस्तद्व्यवस्थितिः ।
शब्दस्य तत्त्वप्रामाण्यं पदार्थश्चेह कीर्तिताः ॥"

तृतीयाध्यायान्ते ।

"आत्मा शरीरं करणमर्थो बुद्धिर्मनस्तथा ।
यद्यथा वस्तु तत्त्वेन तत्तथेहोपपादितम् ॥"

चतुर्थाध्यायान्ते ।

"प्रवृत्तिर्दोषसम्बन्धः प्रेत्यभावः प्रपञ्चितः ।
फलं दुःखं विमुक्तिश्च चतुर्थे परिकीर्तिताः ॥"

पञ्चमाध्यायान्ते ।

"जातीनां सप्रपञ्चानां निग्रहस्थानलक्षणम् ।
शास्त्रस्य चोपसंहारः पञ्चमे परिकीर्तितः ॥"

इत्येवम्प्रकारेण शास्त्रार्थसंग्रहे कृतेऽपि(१) इदानीं न्यायसू-

---

मायमतुर्विध" इति निरूपणात् जगदीशभट्टाचार्यकृततर्कामृत-चोण्डभट्टकृतपदार्थप्रदीपिकादीनां सर्वापेक्षया प्राथम्यापत्तेश्च ।

(१) न्यायोक्तानां पदार्थानां संक्षेपेण निरूपणं न्यायसिद्धान्तः निरूपणं च सर्वदर्शनसंग्रहादौ श्रीमाधवाचार्यादिभिः कृतमेवेति विशेषतनिया न प्रदर्शितमस्माभिः ।

त्रपाठनिर्णये बहवो मतभेदा दृश्यन्ते । तत्र तावत् सूत्रपाठपुस्तकं द्विविधमुपलभ्यते प्राचीनं भाष्यकारसम्मतपाठानुसारि नवीनं च विश्वनाथन्यायपञ्चाननकृतवृत्त्यनुसारि । किन्त्वेकं पुरातनं प्रायःशुद्धं पुण्यग्रामे ( पूनानगरे ) लिखितं नैयायिकैः प्रामाणिकत्वेनावधृतं वात्स्यायनीयन्यायभाष्यपुस्तकमस्मन्निकटे वर्तते तत्र सर्वत्र सूत्रभाष्ययोर्मध्ये विरामचिह्नाभावात् सूत्राक्षराणां नवीनपुस्तकवत् गैरिकादिना रञ्जितत्वाभावात् क्वचिच्च भाष्यकारेणापि अवतरणव्याख्यानयोर्मध्ये सूत्राणां मिश्रणात् (१) क्वचिच्च स्वतन्त्रेच्छस्य मुनेर्नियोगपर्यनुयोगानर्हत्वात् सूत्रकारेण यत्रयत्र ग्रन्थसङ्कोचः कृतस्तत्रतत्र वैशद्यार्थं भाष्यकारेण सूत्रत्वेनावभासमानानि बहूनि वाक्यानि रचितानि तान्यपि "स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदु"रिति भाष्यलक्षणसमन्वयिना तेन व्याख्यातानीति (२) भाष्यग्रन्थेन सूत्रपाठनिर्णयो दुरधिगम एव ।

सूत्राणां लघुत्वात् स्वल्पाक्षरत्वात् सर्वतः सारभूतत्वात् भाष्यसंवलितानामेव तेषां पठनपाठनयोः प्रचारश्चिरन्तनः । कुतार्किकैश्च कुहेतूपस्थापनादिना स च प्रचारो कृशतां नीत इति एतावन्मात्रं सूत्रमेतावन्मात्रं भाष्यमिति निर्णयो न्यायवार्त्तिककारसमयेऽपि दुरधिगम एवासीत् अत एव वार्त्तिककारोऽपि "अन्ये तु साध्यसाधर्म्यात् तद्धर्मभावित्वं

---

(१) १ अ० १ आ० २८ सर्वतन्त्रसिद्धान्तसूत्रव्याख्याने द्रष्टव्यम् ।

(२) १ अ० १ आ० तदत्यन्तविमोक्षोऽपवर्ग इति २२ सूत्रव्याख्याने द्रष्टव्यम् ।

दृष्टान्तस्येति सूत्रं पठन्ति" इत्याद्युक्तवान्(१) किन्तु महर्षिणाक्षपादेन प्रणीतस्य निःश्रेयसहेतुभूतस्य शास्त्रस्य कुतार्किकाज्ञानान्धकारतिरोहितस्य प्रकाशनार्थं महाप्रदीपप्रज्वलने प्रवृत्तेन वार्त्तिककारेण प्रायो बहूनि सूत्राणि निर्णीतानीति तत्रतत्र वार्त्तिकदर्शनादवगतं भवति ।

अथ वार्त्तिककारकृतसूत्रनिर्णयोऽपि मन्देभ्यो नालं भविष्यतीति षड्दर्शनटीकाकार आचार्यवाचस्पतिमिश्रो न्यायवार्त्तिकतात्पर्यटीकायां सूत्रपाठनिर्णयं यत्र तत्र कृत्वापि साकल्येन तदाढ्यार्थं न्यायसूचीनिबन्धाख्यं(२) न्यायदर्शनसारार्थबोधकं

---

(१) मुद्रितवार्त्तिकपुस्तके पृ० १३५ पं० ९ द्रष्टव्यम् ।

(२) एतदनुसारेणैव विश्वनाथन्यायपञ्चाननैरपि न्यायसूत्रवृत्तौ सनामानि ८४ प्रकरणानि विभक्तानि किन्तु मुद्रितस्य तत्सूत्रवृत्तिपुस्तकस्यानवस्थितत्वात् परिशुद्धे पुस्तके तत्सर्वं द्रष्टव्यम् ।

निबन्धोऽयं न्यायवार्त्तिके तृतीयखण्डेऽन्ते मुद्रितः । अस्माभिः समालोचितं न्यायसूचीनिबन्धे पदसंख्यायामक्षरसंख्यायां च लेखगणनावैषम्यं वर्तत इति । तच्च लेखकशोधकप्रमादाज्जातमिति बोध्यम् ।

केचित्तु अस्य न्यायसूचीनिबन्धस्य न्यायवार्त्तिकतात्पर्यटीकायां क्वचिद् विसंवाददर्शनाद्भिन्नकर्तृकत्वं वदन्ति । तदसत् न्यायवार्त्तिकटीकायामेव १ सूत्रव्याख्याने पृ. २ "तदिदमभिधेयसम्बन्धप्रयोजनप्रतिपादनार्थकत्वं प्रथमसूत्रस्येत्युक्तम्" पृ. ४८ "तदेवं प्रथमसूत्रेण शास्त्रस्याभिधेयप्रयोजनसम्बन्धान् दर्शयता पदार्थाः प्रमाणादय उद्दिष्टा" इति वैषम्यदर्शनात् पूर्वापरग्रन्थयोर्विभिन्नकर्तृकत्वापत्तेः ।

आधुनिकास्तु नैतादृशो निबन्धः केनापि प्रामाणिकेनाचार्येण कस्मिंश्चिदपि शास्त्रे निर्मित इति केनचिद्धूर्तेनास्य सूत्रनिर्णायकस्य ग्रन्थस्योपलब्धेः प्रदर्शनेन कीर्तिलाभेच्छया क-

लिपनोऽयमित्युद्घोषयन्ति । तदत्यन्तदरिद्रायितमनोरथम् यतः ऋग्वेदीयशाकल्यसंहिताया मण्डलाध्यायसूक्तमन्त्रादीनां संख्या वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालये वर्तमाने देवीपुराणे २१४ पत्रे निरूपितास्ति । अपरोऽपि तन्निरूपकोऽनुवाकानुक्रमनामा ऋग्वेदीयग्रन्थो वर्तते । यत्राध्याय—मण्डल-वर्ग—सूक्त—ऋक्—पदाक्षराणां संख्यैव प्रकाशिता । यथा

"अध्यायानां चतुःषष्टि६४र्मण्डलानि दशैव १० तु ।
वर्गाणां तु सहस्रे द्वे संख्याते च षडुत्तरे २००६ ॥
सहस्रमेतत्सूक्तानां निश्चितं खैलिकैर्विना ।
दश सप्त च पठ्यन्ते संख्यातं वै पदक्रमम् १०१७ (?) ॥
एकर्चं एकवर्गः स्यादेकश्च नवकस्तथा ।
द्वौ वर्गौ तु द्व्यृचौ ज्ञेयौ ऽयूनं त्र्यृचशतं स्मृतम् ॥
चतुष्कं शतमेकं च चत्वारः सप्ततिस्तथा ।
पञ्चकानां सहस्रं तु द्वे च सप्तोत्तरे शते ॥
त्रीणि शतानि षट्कानां चत्वारिंशत् षट् च वर्गकाः ।
शतमूनविंशतिभिः सप्तकानामूनाष्टिरष्टकानाम् ॥
ऋचां दश सहस्राणि ऋचां पञ्च शतानि च ।
ऋचामशीतिः पादश्च १०५८० । पारायणं सम्प्रकीर्तितम् ।
अर्द्धर्चानां सहस्राणामेकविंशतिकं तथा ।
शतद्वयं तु द्वात्रिंशत्सपादं २१२३२ । मुनिभिः पुरा ॥
शाकल्यदृष्टे पदलक्षमेकं
सार्द्धं च वेदे त्रिसहस्रयुक्तम् ।
शतानि चाष्टौ दशकं द्वयं च १५३८१२
पदानि चर्चां दश चर्चितानि ॥
एकं च शतसहस्रं च दश च सहस्राणि सप्त शतानि ।
चर्चापदानि ज्ञेयानि पदानि चान्यानि चत्वारि ॥
चत्वारि शतसहस्राणि द्वात्रिंशच्चाक्षरसहस्राणि ४३२००० ॥"

इति ।

एवं यजुर्वेद-सामवेद-अथर्ववेदीयसंहिताग्रन्थानां मन्त्रादिसंख्या वायुपुराणे पूर्वार्द्धे ५९ । ६० । ६१ आध्यायेषु निरूपिता ।

माधवाचार्येण पराशरमाधवाख्ये पराशरस्मृतिभाष्ये ५९२ स्मृतीनां संख्या कृता। यथा

"पराशरस्मृतावस्यां ग्रन्थक्लृप्तिर्विविच्यते।
द्वे काण्डे द्वादशाध्यायाः श्लोका अष्टोनषट्शतम्॥"

एवं महाभारते आदिपर्वणि संपूर्णस्य महाभारतस्य पर्वावान्तरपर्वाध्यायश्लोकानां संख्या कृता।

तथा मार्कण्डेयपुराणान्तर्गतचण्डीसप्तशतीस्तोत्रस्य टीकायामन्ते नागेशभट्टेन कात्यायनीयतन्त्रानुसारेण प्रत्येकाध्यायस्य प्रत्येकमन्त्राणामक्षराणां संख्यां प्रदर्श्य "अथायं गोप्यविधि"रित्यादिना संख्या लिखिता। यथा

मार्कण्डेय उवाच ५ वैश्य उवाच २ राजोवाच [illegible] ऋषिरुवाच २७ भगवानुवाच १ ब्रह्मोवाच १ देव्युवाच १२ देवा ऊचुः ३ दूत उवाच २ अर्द्धश्लोकाः ४० पादमन्त्राः २३ पादार्द्धमन्त्राः २२ सार्द्धपादार्द्धश्लोकमन्त्राः २२ श्लोकमन्त्राः ५३६ इत्थं सप्तशतमन्त्राः ७०० श्लोकसंख्या ५७८ ग्रन्थसंख्या ६०२ अक्षरसंख्या १९२७२।

अपि च महाभाष्यानुसारी पाणिनिसूत्रपाठो भिन्नः काशिकावृत्त्यनुसारी च भिन्न इति नागेशभट्टेनैव।

त्रीणि सूत्रसहस्राणि नव सूत्रशतानि च।
चतुःषष्टि च सूत्राणि कृतवान् पाणिनिः स्वयम्॥

महाभाष्यानुसारिपाणिनिव्याकरणसूत्रसंख्यानिर्णयः कृत इति।

काशिकासम्मतश्चायं सूत्रपाठ इति प्रदर्श्य।

"त्रीणि सूत्रसहस्राणि तथा नव शतानि च।
चतुर्णवतिसूत्राणि पाणिनिः कृतवान् स्वयम्॥"

इत्युक्तम्। इदं पुस्तकद्वयमस्मत्निकटे वर्तते।

एवं शारीरकमीमांसासूत्रपाठनिर्णयेऽपि

"सूत्रं तु पञ्चपञ्चाशदुत्तरं शतपञ्चकम्"।

५५५ सूत्राणि इति वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकालये वर्तमाने शारीरकसूत्रसारार्थचन्द्रिकापुस्तके निरूपितम्।

ग्रन्थं रचितवान्। यत्र न केवलं न्यायदर्शनाध्यायाह्निकप्रकरणसूत्राणां संख्या निर्धारिता किन्तु पदानामक्षराणामपि संख्या निर्धारिता। एवमुदयनाचार्या न्यायपरिशिष्टाख्यां(१) बोधसिद्धिर्बोधशुद्धिर्वेत्यपरनामधेयां न्यायसूत्रवृत्तिमेवं महानैयायिकश्रीगङ्गेशोपाध्यायात्मजवर्द्धमानोपाध्याया अपि अन्वीक्षानयतत्त्वबोधाख्यां न्यायसूत्रवृत्तिं निर्मितवन्त(२) इति।

अपरोऽपि वाचस्पतिमिश्रो न्यायतत्त्वालोकाख्यां न्यायसूत्रवृत्तिं रचितवान् तत्त्वचिन्तामणिप्रकाशाख्यां तत्त्वचिन्तामणिव्याख्यामपि, तेनैव

"श्रीवाचस्पतिमिश्रेण मिथिलेश्वरसूरिणा(३)।
लिख्यते मुनिमूर्धन्यश्रीगोतममतं महत्॥"

(१) अस्य ग्रन्थस्य खण्डितमेकं जीर्णं पुस्तकं ममान्तिके वर्त्तते। तट्टीकापि न्यायपरिशिष्टप्रकाशाख्या वर्द्धमानोपाध्यायकृता वर्त्तते।

(२) सूत्रपाठनिर्णयार्थं तत्सारार्थनिरूपणार्थमेव वा उदयनाचार्यवर्द्धमानोपाध्यायादिभिर्वृत्तिग्रन्थो रचितो नो चेत् तात्पर्यपरिशुद्धिग्रन्थेन तट्टीकया न्यायनिबन्धप्रकाशाभिधया च सर्वांशस्य व्याख्यातत्वात् किमपरमवशिष्टं यदर्थं वृत्तिग्रन्थः पार्थक्येन रचित इति।

(३) "श्रीभैरवेन्द्रधरणीपतिधर्मपत्नी
राजाधिराजपुरुषोत्तमदेवमाता।
वाचस्पतिं निखिलतन्त्रविदं नियुज्य
द्वैते विनिर्णयविधिं विधिवत् तनोति"॥

इति द्वैतनिर्णये।

अस्य वाचस्पतिमिश्रस्य जीवनचरितमाचार्यवाचस्पतिमिश्रजीवनचरितप्रकरणे प्रपञ्चयिष्यते।

इत्यादिना न्यायसूत्रोद्धारनामा ग्रन्थो(१) रचितः किं तु तत्र सूत्रपाठ एव न त्वपरः कश्चिल्लेखः सूत्राणां निर्णायक इति ।

न्याय–वैशेषिक–सांख्य–योग–कर्ममीमांसा—भक्तिमीमांसा–ब्रह्ममीमांसाशास्त्रसूत्राणामार्षत्वादाप्तोक्तत्वाद्वा समानं प्रामाण्यमित्यत्र सन्देह एव नास्ति । इदं तु व्याख्याकाराणां व्याख्यानकौशलं यत स्वशास्त्रोत्कर्षस्थापनायेतरमतखण्डनेन स्वमतव्यवस्थापनम् । सर्वाण्येव शास्त्राणि अनेकात्मप्रतिपादकानि ब्रह्ममीमांसाशास्त्रे (वेदान्ते) विवादो व्याख्याकारमूलक एवेति नैव तिरोहितमस्ति दार्शनिकानाम् । तर्काप्रतिष्ठानादित्यादिना सूत्रेण २ । १ । ११ एतेन शिष्टापरिग्रहा अपि व्याख्याता २ । १ । १२ इत्यादिसूत्रेण च नास्तिकानामुपनिषदुक्तानां निराकरणं न तु न्यायादिदर्शनानां तत्र आर्षोक्तत्वात् शिष्टपरिग्रहात् । किं तु शङ्कराचार्यादिभिर्हठादेव तथा व्याख्यातं सूत्रेषु तदभावादिति । यत्तु एतेन योगः प्रत्युक्त इत्याद्युक्तं तत्राप्यर्थान्तरसंभवादपि व्याख्यानमपेक्षत इति ।

यत्तु स्कन्दपुराणीयकालिकाखण्डे १५–१८ अध्यायेषु वेदादिविद्यानामितिहासो विस्तरेण निरूपितस्तत्रैव १७ अध्याये ।

"आश्वलायननामासौ शौनकात् प्राप्य चाखिलम् ।
संगृह्यापि च वैतानं सूत्रं होतुर्विनिर्ममे ॥
आपस्तम्बो भरद्वाजः सत्याषाढो(२) महामुनिः ।
कात्यायनोऽथ वि–नास्तथा(!) बोधायनो मुनिः ॥
तत्त्राध्वर्युसूत्राणि निर्ममुर्यजुषां तथा ।

(१) अयं न्यायसूत्रोद्धारग्रन्थो विजयनगरसंस्कृतसीरीज़मुद्रितेन न्यायभाष्येण सार्कं मुद्रितोऽस्ति ।

(२) सत्याषाढो हिरण्यकेश एव इति सम्प्रदायविदः ।

जैमिनिः सामसूत्राणि निर्ममे छन्दसां ततः ॥
सर्वेषां प्रत्ययैः कर्म यज्ञीयं समभूत् तदा ।
गोतमः स्वेन तर्केण खण्डयन् तत्रतत्र हि ॥
शप्तोऽथ मुनिभिस्तत्र शार्गालीं योनिमृच्छति ।
पुनश्चानुगृहीतोऽसौ श्रुतिसिद्धान्ततर्कतः ।
सर्वलोकोपकाराय तव शास्त्रं भविष्यति ॥" इत्युक्तम् ।

तत्तु शापानुग्रहाभ्यां समन्वयनीयम् ॥

प्राणतोषिणीतन्त्रे तु अष्टादशविद्यानिरूपणप्रस्तावे "गोतमेन तथा न्याय"मित्यादिवचनानि गन्धर्वतन्त्रनाम्ना समुद्धृत्य न्यायनिन्दाप्रशंसासमन्वयः कृतस्तथाहि "गन्धर्वतन्त्रे" ।

"गोतमप्रोक्तशास्त्रार्थनिरताः सर्व एव हि ।
शार्गालीं योनिमापन्नाः सन्दिग्धाः सर्वकर्मसु ॥

अत एव महाभारते मोक्षधर्मे काश्यपेन्द्रसंवादे ।

अहमासं पण्डितको हैतुको वेदनिन्दकः ।
आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थकाम् ॥ इति प्रस्तुत्य
आक्रोष्टा चातिवक्ता च ब्रह्मयज्ञेषु वै द्विजान् ।
यस्येयं फलनिष्पत्तिः शृगालत्वं मम द्विज ॥

इति ब्राह्मणं प्रति शृगालवाक्यम् ।

नन्वा'न्वीक्षिकी दण्डनीतिस्त्रयी त्रिदिवसुन्दरीति' कालीकुलसर्वस्वीयवचनेन आद्यानामसहस्रान्तर्गतत्वेनान्वीक्षिक्याः श्रीमद्दक्षिणकालिकास्वरूपाया अध्ययनरूपोपासनया यदि शृगालत्वं स्यात् तदा चतुर्वर्गफलं कुतो लब्धव्यमिति चेत् सत्यम् आन्वीक्षिक्यध्यात्मविद्येति ब्रूमः सा च दत्तात्रेयप्रणीता न गोतमोक्ता तथा च भागवते प्रथमस्कन्धे ।

'षष्ठे ऽत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया ।
आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान् ॥' इति ।

अत्रिणा वृतः सन् तस्यापत्यत्वं प्राप्तः कथमित्याह अनसूयया मामेवापत्यं वृतवान् इति दोषदृष्टिमकुर्वाणेत्यर्थः । शेषं सुगमम् । "आन्वीक्षिकीमात्मविद्यामिति" श्रीधरस्वामिना व्याख्यातं न गोतमोक्तविद्या सा तु तर्काद्वयत्वेन प्रसिद्धेति चेन्नैवम् तथात्वे आन्वीक्षिकीं तर्कविद्यामिति मोक्षधर्मश्लोके तर्कविद्येति विशेषणम् आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोरित्यमरसिंहोक्तं न सङ्गच्छते तस्मात् तयोर्द्वयोरेवान्वीक्षिकीति नामधेयम् । अथ तदुक्तदोषस्तदवस्थ इति सत्यम् गन्धर्वतन्त्राभिप्रायमनालोच्य दोषमाशङ्कसे तथाहि निष्ठाया अतीतार्थाभिधायित्वाच्छार्गाली योनिमापन्नाः प्राप्ताः शृगालयोनिकाः सर्व एव गोतमप्रोक्तशास्त्रार्थनिरताः केवलं तर्कशास्त्रनिपुणाः सन्तः सर्वकर्मसु सन्दिग्धा भवन्तीति वचनस्य निर्गलितार्थः । शास्त्रान्तरव्यावृत्तिस्तु निपातेन व्यज्यते । अत एव

'आम्नायार्थविवादेन न्यायचिन्तां करोति यः ।
तेन निःश्रेयसं प्राप्यं शार्गाली योनिमन्यथा ॥'

इति पठन्ति । मोक्षधर्मश्लोकार्थस्तु तर्कविद्यामान्वीक्षिकीमनुरक्तोऽहं द्विजानाक्रोष्टातिवक्ता च यस्य आक्षेपं प्रत्याक्रोशस्य अतिवादस्य च फलनिष्पत्तिर्मम शृगालत्वमिति । युक्तं चैतद् वाचिकपापस्य मनुना तथात्वस्य प्रतिपादितत्वात् तथा च मनुः

'शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ।
वाचिकैः पक्षितां याति मानसैरन्त्यजातिताम् ॥' इति ।

मानसपापं तु न शूद्रस्यानामित्यग्रे वक्ष्यते। कलीतरपरं वा। तथा च भागवते प्रथमस्कन्धे

'नानुद्वेष्टि कलिं सम्राट् सारङ्ग इव सारभुक्।
कुशलान्याशु सिध्यन्ति नेतराणि कृतानि यत्॥'

सारङ्गोभ्रमर इव सारग्राही संम्राट् राजा कलिं नानुद्वेष्टीत्यन्वयः। कुशलानि पुण्यानि आशु सङ्कल्पेन सिद्ध्यन्ति फलन्ति। इतराणि पापानि नाशु सिध्यन्ति यतस्तानि कृतान्येव सिद्ध्यन्ति न तु सङ्कल्पमात्रादित्यर्थः। सङ्कल्पः कर्म मानसमित्यमरः। यदि तु तर्कविद्यापाठेन शृगालत्वमुच्यते तदा तु मोक्षधर्मस्थाक्रोष्टेत्यादिश्लोकस्य वैयर्थ्यं स्यादिति सुधीभिर्विचार्यमिति।" इत्थं च प्राणतोषिणीकृद्व्यवस्थाया आक्रोशस्य अतिवादस्य च फलं शृगालत्वं न त्वान्वीक्षिक्यनुरागस्येति निष्कर्षः।

यत्तु सांख्यप्रवचनभाष्ये पराशरोपपुराणनाम्ना

"अक्षपादप्रणीते च काणादे सांख्ययोगयोः।
त्याज्यः श्रुतिविरुद्धोंऽशः श्रुत्येकशरणैर्नृभिः॥
जैमिनीये च वैयासे विरुद्धांशो न कश्चन।
श्रुत्या वेदार्थविज्ञाने श्रुतिपारं गतौ हि तौ॥"

इति वचनं समुद्धृतं तत्सर्वं पूर्वोक्तन्यायप्रशंसाप्रतिपादकश्रुतिस्मृतिपुराणेतिहासादिविरुद्धत्वादेकदेशीयत्वादुपपुराणोक्तत्वाच्चोपेक्षणीयम्।

तथाहि श्रुतिस्मृतिपुराणसदाचारबलाबलपरीक्षायाम् पूनानगरस्थानन्दाश्रमयन्त्रमुद्रितगौतमप्रणीतधर्मसूत्रे २ पृष्ठे "अथ यत्र द्वे विरुद्धे तुल्यबले प्रमाणे उपनिपततः, यथा "अतिरात्रे षोडशिनं गृह्णाति" "नातिरात्रे षोडशिनं गृह्णाति" "उदिते

जुहोति" "अनुदिते जुहोति" इतिश्रुत्योर्विरोधः, तथा "नित्य-मभोज्यं केशकीटावपन्नम्" इति गौतमः "पक्षिजग्धं गवाघ्रा-तमवधूतमवक्षुतम् । केशकीटावपन्नं च मृत्प्रक्षेपेण शुध्यति" इति मनुः । तत्र किं कर्त्तव्यम् तुल्यबलविरोधे विकल्पः । प्रकर्ष बोधने तु श्रुतिस्मृतिविरोधे स्मृत्यर्थो नादरणीयः अतुल्यबल त्वात्, अत एव जाबालिराह

"श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी ।
अविरोधे सदा कार्यं स्मार्त्तं वैदिकवत् सदा ॥"
आचारात्तु स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनम् ।
तेन ग्रन्तरितं तेषां प्रामाण्यं विप्रकृष्यते ॥
विस्तरस्तु तन्त्रवार्त्तिकायाकरग्रन्थतोऽवगन्तव्यः ॥

यत्तु विश्वनाथन्यायपञ्चाननेन न्यायसूत्रवृत्तौ पृ.५पं.१७ "निग्रहस्थानान्तःपातिनां हेत्वाभासानां पृथगभिधानप्रयोजनं जानाति भगवान् अक्षपाद एव" इत्युक्तम् ।

शङ्कराचार्येण बृहदारण्यकोपनिषद्भाष्ये ४ अध्यायस्य २ ब्राह्मणव्याख्याने ।

"अहोऽनुमानकौशलं दर्शितमपुच्छशृङ्गैस्तार्किकबलीवर्दै"रिति ।

विज्ञानभिक्षुणा विज्ञानामृताख्ये ब्रह्ममीमांसाभाष्ये अ-द्वैतसिद्धान्तखण्डनप्रसङ्गे "आधुनिकास्तु" "प्रच्छन्नबौद्धास्तु" इत्यादिवाक्यैः शङ्कराचार्या एव परिगृहीताः ।

प्रशस्तपादभाष्यटीकायां न्यायकन्दल्यां तदलं प्रकोपितैः श्रोत्रियवृद्धद्विजन्मभिरित्यादिवाक्यैर्जैमिनीया एव परिगृहीताः।

तत्सर्वं प्रस्थानभेदेन औद्धत्येन वा क्रमभेदं समन्वयनीयम् ॥

आधुनिकन्यायनयविदस्तु वदन्ति । एतानि न्यायदर्श-

नसूत्राणि खण्डितानि(१) पुरातनान्न्यायदर्शनाद् याथातथ्येनोपलब्धात् केनचित् समुद्धृतानि यतः परीक्षाप्रकरणे प्रमाणादीनां परीक्षां विहाय प्रथमतः संशयस्यैव परीक्षितत्वात् सकलपदार्थानां परीक्षाभावात् उद्देशक्रमपरीक्षाक्रमयोर्वैपरीत्याच्च । इदं वात्स्यायनीयं न्यायभाष्यमपि विहाय किमपि प्राचीनं न्यायभाष्यमासीत्(२) इदमुपलभ्यमानं वार्त्तिकमपि विहाय किमपि प्राचीनं वार्त्तिकमासीत्(३) हेत्वाभाससूत्रवार्त्तिके "वार्त्तिकं कुर्वाणेनोक्त"मित्याद्युक्तत्वात् ।

इदं सर्वं कुकल्पनामात्रं शास्त्रतात्पर्यानवबोधात् वाचस्पतिमिश्रोदयनाचार्यवर्द्धमानोपाध्यायादिभिरचर्चितत्वाच्च ॥

अभिनवदार्शनिकास्तु वदन्ति "यस्मिन् समये ऋग्वेदादिसंहिताग्रन्थानां(४) मन्वादिस्मृतीनां वायुपुराणादि-

---

(१) विजयनगरसंस्कृतसीरीजमुद्रिते न्यायदर्शनपुस्तके सिद्धान्तलक्षणसूत्रटिप्पण्यां द्रष्टव्यम् ।

(२) विजयनगरसंस्कृतसीरीजमुद्रिते न्यायदर्शनपुस्तके सिद्धान्तलक्षणसूत्रटिप्पण्यां द्रष्टव्यम् ।

(३) विजयनगरसंस्कृतसीरीजमुद्रिते न्यायदर्शनपुस्तके भूमिकायां २ पृष्ठे "सूत्रनिर्माणभाष्यनिर्मितिकालमध्ये कश्चन वार्त्तिकं निर्ममौ यन्नाम साम्प्रतं नोपलभ्यते यथा पाणिनीयव्याकरणे सूत्रभाष्ययोरन्तरा कात्यायन इति तर्कयतां पाश्चात्यानां मतेन वार्त्तिकवचनानीत्यादि ।"

विण्डिशमहाशयेनक्त पक्षार्थः प्रसाधितः । "Ueber Das Nyâyabhâshya", von Ernst Windisch, Leipzig,

(४) संहिताग्रन्थेषु पृथिव्यापस्तेजोवाय्वादीनामन्येषामपि स्तुतिपराणि वाक्यानि रचितानि तेषां समूहाः सूक्तानीत्युक्तानि भवन्ति तेषां समुदायः संहितापदवाच्य इति संहिताया अन्वर्थं नामेति तेषां सिद्धान्तः ।

पुराणानां च प्रणयनं तस्मिन् समये मूर्खबहुले संसारेऽध्यात्मविद्याया अभावात् कोऽपि पुरुषस्तद्विधप्रणयने न समर्थ आसीदिति पञ्चभिः पुरुषैरितस्ततः प्रकीर्णानि न्यायविद्यासम्बन्धीनि ५२८ लघुवाक्यानि कल्पितानि अत एव तान्यनवस्थितानि यतश्चतुर्ष्वध्यायेषु आधुनिकतार्किककल्पितोद्देशलक्षणपरीक्षानुसारेण याथातथ्येन शास्त्रसमाप्तिः कृता पञ्चमाध्यायस्तु व्यर्थ एव ॥

एवं शारीरकमीमांसासूत्राणि १२००० नारदेन प्रणीतानि तद्भाष्यमपि ६०००० श्लोकात्मकं महर्षिणा याज्ञ्यवल्क्येन(१) प्रणीतम् । उपलभ्यमानानि वेदव्यासकृतित्वेन प्रसिद्धानि शारीरकमीमांसासूत्राणि शाङ्करं तद्भाष्यमप्युपलभ्यमानं यवनराज्यप्राबल्यसमये सर्वगोपनार्थमद्वैतसिद्धान्तप्रचारार्थं केनचिन्महाधूर्तेन प्रणीतमिति ॥"

अत्र परीक्षकास्तत्त्वविदस्तु वदन्ति प्रमेयसिद्धिः प्रमाणाद्धीति अभिनवदार्शनिकैर्निरूपितेऽर्थे न किमपि प्रमाणं दर्शितं नापि बलवती युक्तिरभिहितेति तत्सर्वं खपुष्पशशविषाणनिरूपणायितमिति । सत्सिद्धान्तस्य परीक्षणेऽस्माकं वाक्यद्वयं स्फुरति ।

"घटं भिन्द्यात् पटं छिन्द्यात् कुर्याद् रासभरोहणम् ।
येन केन प्रकारेण प्रसिद्धः पुरुषो भवेत् ॥"
"मुग्धमस्तीति वक्तव्यं दशहस्ता हरीतकी ॥" इति ।

अपि च । प्रयागक्षेत्रे भूतपूर्वमदर्शिन्यायैकः सुदीर्घकायो लम्बग्रीवः सुपुष्टाङ्गो नातिवृद्धस्तिलकमालाधारी वैष्ण-

(१) "याज्ञ्यवल्क्य"इति तु निरुक्तग्रन्थनाम्ना नागेशभट्टेन मणुद्धृतं वैयाकरणसिद्धान्तमञ्जूषायाम् ।

वाभासः प्रदर्शनीयपुस्तकसंग्रहभवने मिलितो यत्रान्यत्रासुलभानि बहुमूल्यानि महाभारतादीनि पुस्तकानि स्थापितान्यासन् तेन महापुरुषेणोक्तम् "ममान्तिक एकमेवास्ति महत्पुस्तकम् यत्र भूतभविष्यद्वर्तमानानां समस्तजगतः पुस्तकानामन्तर्भावोऽस्ति यथा

वेदस्मृतिपुराणेषु तन्त्राङ्गोपाङ्गनीतिषु ।
कौमुदीनां सहस्राणि चन्द्रिकाणां तथैव च ॥
कौस्तुभानां तु लक्षाणि दर्पणानां तथैव च ।
मनोरमाणां लक्षाणि प्रकाशानां तथैव च ॥
चिन्तामणीनामयुतं प्रदीपानां सहस्रकम् ।
लघुभाष्यमहाभाष्यटीकानां टिप्पणस्य च ॥
विवरणानां च विवृतेर्लघुवृत्तेश्च दीधितेः ।
सुबोधिनीदीपिकानां प्रयुतान्यर्बुदानि च ॥
सारास्तेषां संगृहीता ग्रन्थे मार्तण्डमण्डले ।
तिस्रः कोटयोर्द्धकोटिश्च ग्रन्था मार्तण्डमण्डले॥"इत्यादि।

अत्र परीक्षका वदन्ति । सर्वैरपि निबन्धकारैरनिबन्धकारैश्च विद्वद्भिरदृष्टत्वादनुद्धृतत्वादस्य ग्रन्थस्य महत्त्वस्य चासम्भवदोषेण दूषितत्वात् स च शशविषाणायित इति ॥

पाश्चात्यानुयायिनस्तु "तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः" ( ४ अ. २ आ. ४६ सू. ) इति सूत्रव्याख्याने "योगशास्त्राच्चाध्यात्मविधिः प्रतिपत्तव्य इति भाष्यकारेणोक्तत्वात् योगशास्त्रस्य पतञ्जलिप्रणीतत्वात् पतञ्जलेश्च खीष्टाब्दारम्भात् १५० वर्षेभ्यः पूर्वं तदासन्नसमये वा वर्तमानत्वात् तत्पश्चात्काले न्यायसूत्राणां निर्माणं जातमिति वदन्ति । तन्मन्दम् । पातञ्जले व्याकरणमहाभा-

ष्ये(१) प्रथमाह्निक एव "सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वा-
रो वेदाः साङ्गाः सरहस्या(२) बहुधा भिन्ना एकशत-

(१) योगेन चित्तस्य पदेन वाचां
मलं शरीरस्य तु वैद्यकेन ।
योपाकरोत् तं प्रवरं मुनीनां
पतञ्जलिं प्राञ्जलिरानतोऽस्मि ॥

चरक एव पतञ्जलिरिति भावप्रकाशे आयुर्वेदोत्पत्तिप्रकरणे विस्तरेण निरूपितम् ।

(२) केचित्तु "रहस्यमुपनिषद् मन्वादिस्मृतयो वा" इति महाभाष्यप्रदीपोद्द्योते नागेशभट्टेनोक्तत्वादुपनिषदर्थप्रतिपादकत्वान्न्यायमीमांसाधर्मशास्त्राणां तत्र गतार्थत्वात् तेषामुपादानस्य पौनरुक्त्यमुद्भाव्य तत्पाठस्य प्रक्षिप्तत्वं कल्पयन्ति तथात्वेऽपि इतिहासः पुराणमिति पाठस्य मुद्रितामुद्रितसर्वसाधारणेषु महाभाष्यपुस्तकेषु वर्तमानत्वात् पुराणेषु च न्यायस्य निरूपणात् योगापेक्षया न्यायस्यातिपुराणत्वं दुर्वारमेव । यथा च पुराणेषु न्यायनिरूपणं तथा प्रतिपादितमधस्तात् । यद्वा "वाको वाक्यं तर्कशास्त्र"मिति छान्दोग्योपनिषद्भाष्ये ७ प्रपाठके १ खण्डे शङ्कराचार्येणोक्तत्वात् वाको वाक्यमितिप्रतिपादकव्याकरणभाष्यापेक्षया न्यायस्य प्राचीनत्वमित्याहुः ।

यद्वा । छान्दोग्योपनिषदि ३ प्रपाठके १७ खण्डे "तद्धैतद् घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच" इति । श्रीकृष्णेन तु भगवद्गीतायाम् ५ अध्याये ।

"सांख्ययोगौ पृथग् बालाः प्रवदन्ति न पण्डिताः ।"
"एकं सांख्यं च योगं च यः पश्यति स पश्यति॥" इति ।

४ अध्याये ।

"इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवे ऽब्रवीत् ॥ १ ॥
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परन्तप ॥ २ ॥
स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ॥ ७ ॥"

ध्वर्युशाखाः सहस्रवर्त्मा सामवेदः एकविंशतिधा बाह्वृच्यं नवधाऽथर्वणो वेदः वाको वाक्यमितिहासः पुराणं न्यायो मीमांसा धर्मशास्त्राणि वैद्यकमित्येतावान् शब्दस्य प्रयोगविषयः" इत्याद्युक्तत्वात् योगापेक्षया न्यायस्य प्राचीनत्वसिद्धेः॥

एके निरूपयन्ति "ख्रीष्टाब्दारम्भात् परं पष्ठशताब्द्यामन्ते सप्तमशताब्द्यामारम्भे वा बौद्धो दिङ्नागाचार्यः प्रादुरभूत् तन्मतखण्डनात् न्यायवार्त्तिककार उद्द्योतकराचार्यो दिङ्नागादर्वाचीनः वार्त्तिककारात् वर्षशतकात् पूर्वं भाष्यकारो वात्स्यायनः भाष्यकारात् वर्षशतकात् पूर्वं वर्षशतकद्वयाद्वा पूर्वं न्यायसूत्रप्रणेता गौतमः बुद्धोऽपि गौतमः

---

अपि च श्वेताश्वतरोपनिषदि ६ अध्याये

"तत्कारणं सांख्ययोगाधिगम्यं
ज्ञात्वा देवं मुच्यते सर्वपापैः॥ १३॥"

अत्रेदं न भ्रमितव्यं यत् तदानीं कापिलं सांख्य नासीदेव ५ अध्याये ऽत्रैवोपनिषदि "ऋषिं प्रसूतं कपिलं यस्तमग्रे" इत्याद्युक्तत्वात्। देवकीपुत्रेण श्रीकृष्णेन भगवद्गीतायां १० अध्याये

"सिद्धानां कपिलो मुनिः॥ २६॥"

इत्युक्तत्वाच्च।

अत्रान्वेषकंमन्याः स्वाभिप्रायसिद्धये छान्दोग्योपनिषदुक्ता देवकी भिन्ना तत्पुत्रः कृष्णोऽपि भिन्नः महाभारतभागवताद्युक्ता देवकी भिन्ना तत्पुत्रः कृष्णोऽपि भिन्नः सांख्यकर्ता कपिलो भिन्नः उपनिषदुक्तः कपिलस्तत्कृतं सांख्यं च भिन्नमित्यादि प्रलपन्ति। तन्नूपहासास्पदम् तथोक्तभिन्नत्वे तेषुतेषु ग्रन्थेषु देवकीकृष्णोक्त्या ऽऽनन्त्यप्रसङ्गात उपस्थितं परित्यज्यानुपस्थितकल्पने मानाभावात् तत्तुल्ययुक्त्या सूर्यचन्द्रादीनामपि प्रत्यहमुदयास्तत्वात् स्थानान्तरे दर्शनात् परिमाणन्यूनाधिक्यदर्शनादेषामप्यानन्त्यकल्पनापत्तेरित्यलं पल्लवितेन॥

जैनोऽपि गौतम आसीत् तन्नामभेदज्ञापनाय सूत्रकारस्य गौतमस्य गोतम इति नाम कल्पितम् ।" इत्यादि ।

अत्र समालोचयामः । महादिङ्नागादिभेदेनानेके दिङ्नागाः सञ्जाता(१) वार्त्तिककारेण कस्य दिङ्नागस्य मतं खण्डितं ? यदि प्रमाणसमुच्चयग्रन्थकर्तुर्दिङ्नागस्य ग्रहणं तदा यथाकथञ्चित् आख्यायिकालापादिश्रवणेन तत्समयनिर्णयेऽपि तत्पश्चात्कालवर्त्तित्वं वार्त्तिककारस्य कथमपि भवितुं नार्हति प्रमाणग्रन्थं विहायापि प्रमेयादिग्रन्थेष्वपि दिङ्नागमतखण्डनदर्शनात् सम्पूर्णन्यायग्रन्थसमालोचकदिङ्नागान्तरसम्भवात् ।

अपि च "वार्त्तिककारात् वर्षशतकात् पूर्वं भाष्यकारो वात्स्यायनः भाष्यकारात् वर्षशतकात् पूर्वं वर्षशतद्वयाद्वा पूर्वं न्यायसूत्रप्रणेता गौतमः" इति यदुक्तं तत्तु "मुखमस्तीति वक्तव्यं दशहस्ता हरीतकी"तिवत्, तत् कस्मात् प्रमाणादवगतं महाशयेनेति ? नावगम्यते। यदि सूत्रभाष्यवार्त्तिककाराणां पूर्वाप-

(१) एको दिङ्नागः सङ्घभद्रस्य प्रशिष्यः खीष्टाब्दारम्भात् परं षष्ठशताब्द्यां जातः "India, what can it teach us", pp 305–307

अपरो विक्रमादित्यसभासदा कालिदासेनोक्तः विक्रमादित्यसमयश्च १९७३ वर्षेभ्यः पूर्वमिति हालसप्तशत्या निश्चीयते । महादिङ्नागादयोऽत्रैव ६१ पृष्ठे निरूपिता इत्यादिर्दिङ्नागभेदाः ।

अत्रैव पुस्तके इदमपि निरूपितं तावत् खीष्टाब्दारम्भात् परं षष्ठशताब्द्यां मध्ये कालिदासोऽभूत् एवं चेत् षष्ठशताब्द्यामन्ते सप्तमशताब्द्यामारम्भे वा आविर्भूतं दिङ्नागं कालिदासो "दिङ्नागानां पथि परिहरन्" इत्यादिना मेघदूते कथं लिखेदिति परतो व्याघातः ।

रभावे नियम एवैतादृशस्तदा माधवाचार्येण १३१३ शकाब्दे(१) वर्तमानेन वेदधर्मशास्त्रमीमांसाशास्त्रादयो व्याख्याता इति वेदधर्मशास्त्रादिकर्तुरपि वर्त्तमानसमयात् पूर्वं षष्ठशताब्द्यां सप्तमशताब्द्यामेव स्थितिः स्यादिति(२)।

यत्तु "न्यायसूत्रप्रणेता गौतमः बुद्धोऽपि गौतमः जैनोऽपि गौतम आसीत् तन्नामभेदज्ञापनाय सूत्रकारस्य गौतमस्य गोतम इति नाम कल्पित"मित्युक्तं तस्माद् बहुज्ञत्वं रहस्यज्ञत्वमपि प्रकाशितं भवति। किं तु शतपथब्राह्मणमत्स्यपुराणादि तु दूरे स्थितं महाशयेन नैषधचरितमपि न पठितं येन "गोतमं तमवेत्यैवेति"(३) पठित्वापि गोतम एव तन्नाम इति निश्चितं स्यादिति।

यत्तु गोतमचरितनिरूपणप्रसङ्गात् "वैशेषिकशास्त्रप्रणेता काणादः स च काकमांसभक्षीति" इत्यादिना एकेनैव यन्त्रेण कणादमपि पेषितवाँस्तन्महदाश्चर्यम्।

त्रिकाण्डशेष-मेदिनीकोशप्रामाण्यात् काणः काकस्तमत्तीति काणादः काकमांसभक्षीति यावत्(४)।

उलूका एव काकमांसं भक्षन्तीति अन्वर्थं तस्य वै-

---

(१) आनन्दाश्रमसंस्कृतसीरीजनं० २ विज्ञापने ३ पृष्ठे द्रष्टव्यम्।

(२) अन्वेषकमन्यास्तु निर्धारितवन्तः प्रथमं संहिताग्रन्थनिर्माणं ततो ब्राह्मणग्रन्थानां ततश्च सूत्र-भाष्यग्रन्थानां निर्माणं जातमिति। तदपि काल्पनिकमेव आश्वलायनसूत्र एव "सूत्रकारभाष्यकारमितिहासपुराणकार"मित्याद्युक्तत्वात्।

(३) नैषधचरिते १७ सर्गे ७५ श्लोकः।

(४) History of Indian Literature, p. 246

शेषिकशास्त्रकर्त्तुः काणादस्य उलूक इति नाम(१)। पक्ष्यात्मकत्वात् कौशिकगोत्र इति आहुण(२)इति नामान्तरं तस्य इत्यादिजैनप्रलापान् हृदि निधाय आर्षशास्त्रेतिवृत्तं सिद्धान्तयन्ति केचित्।

तत्तु सर्वान् वेदान् शास्त्राणि च मिथ्यात्वेन प्रलपतः कस्यचिज्जैनस्य लेखमेव(३)मूर्ध्नि स्थाप्य कणादस्य महर्षे-

---

(१) न्यायकन्दलीभूमिकोक्तप्रमाणेन कणभुग् वा कणादो वा तस्य महर्षेर्नाम तस्मादागतं शास्त्रं काणादम्। तथैव उलूकादागतं शास्त्रमेव औलूक्यमिति औलूक्यदर्शननाम्ना माधवाचार्येण वैशेषिकदर्शनं समुद्धृतं सर्वदर्शनसङ्ग्रहे।

(२) न्यायदर्शनप्रणेता राहूगणो गोतम इतीतिहासं केनचित् श्रुत्वा वैशेषिकशास्त्रतत्कर्तृकणादनिन्दासमये ईर्ष्यानिपीडितचेतसा कणाद एव आहुणनाम्ना प्रलपितः। यथा च राहूगणो गोतमो न्यायप्रणेता तथा प्रतिपादितमधस्तात्।

(३) तीर्थकल्पग्रन्थे

"मुनीनां कोटिविंशत्या कुन्त्या च सह निर्वृताः।
कृतार्हत्प्रतिमोद्धारा अत्र ते पञ्च पाण्डवाः॥" इति।

अर्हत्पूजका यदि पाण्डवास्तर्हि धर्मराजो युधिष्ठिर इन्द्रोऽर्जुनो वायुर्भीमोऽश्विनीकुमारौ नकुलसहदेवाविति भारतायुक्तिः कुत्र गच्छेदिति। भगवतो विष्णोरवतारं सर्वविद्यानिधानं वेदव्यासं चकुक्षित्वेन भगवन्तं पाणिनिं शालातुरीयत्वेन भगवन्तं महर्षिं शाकटायनं शाकटाङ्गजत्वेन सर्वान् श्रोत्रियान् ब्राह्मणान् मिथ्यादृष्टित्वेन गणरत्नमहोदध्यादौ प्रलपन्ति स्म जैनाः तत् किं वस्तुतत्त्वनिर्णायकमितिवृत्तनिर्धारकं वा मन्तव्यं भविष्यति?। पुराणेषु पादपूरणार्थकचकारोपन्यासात् वेदव्यासश्चकुक्षिः चकारपूर्णो कुक्षिर्यस्येति व्युत्पत्त्याऽवगम इति शालातुरो ग्रामस्तत्रभवः पाणिनिर्ग्राम्यः शाकटाङ्गजो भारवाहकः शाकटायन इति तेषां हृदयम्।

बुद्धजातके रामलक्ष्मणभरतशत्रुघ्ना भ्रातरः सीता च तेषां भ-

नाम प्रसह्य काणाद इति कल्पयित्वा काणशब्दं कस्मिँश्चित्कोशे काकवाचकं दृष्ट्वा काकमांसभक्षीति निर्धारितवानित्ययुक्तम् ।

वस्तुतस्तु "कणादः काश्यपः समाविति" त्रिकाण्डशेषकोशात् "काश्यपोऽब्रवीदिति प्रशस्तपादभाष्याच्च कश्यपस्य महर्षेः पुत्रः कणाद इति" कणाद इति तस्य कापोतीं वृत्तिमनुतिष्ठतो रथ्यानिपतिताँस्तण्डुलकणानादाय प्रत्यहं कृताहारनिमित्ता सञ्ज्ञा" । "स्वयमीश्वरः उलूकरूपधारी प्रत्यक्षीभूय द्रव्यगुणकर्मसामान्यविशेषसमवायलक्षणं पदार्थषट्कमुपदिदेश" इत्यादिपौराणिकीं कथामजानन्तः ।

"योगाचारविभूत्या यस्तोषयित्वा महेश्वरम् ।
चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नमः ॥"

इतिप्रशस्तपादभाष्यप्रघट्टकाय अपरिचितनिन्दास्तुतिविषया अज्ञातसिद्धान्तपूर्वपक्षास्ते व्यामोहयन्ति श्रोत्रियद्विजबालकान् । विस्तरस्तु न्यायकन्दलीभूमिकायां ६ । ११ पृष्ठे द्रष्टव्यः ।

केचिद्वदन्ति "शतपथब्राह्मणायुक्तो गोतमः शाक्यसिंहो बुद्धो गौतमः इन्द्रभूतिर्जैनगौतमश्च एते ख्रीष्टाब्दारम्भात् ६०० वर्षेभ्यः पूर्वं वर्तमाना एककालावस्थायिन(१)

---

[नीति भगिन्या सह विवाहो जात इति वाल्मीकिरामायणा- त्मरामायणादि सर्वं मिथ्यैवेति ।

एवं सति एकधर्मावलम्बिनिरूपितापरधर्मिकेतिहासादिना वस्तुस्थितिर्नावगन्तव्या यथा च आचार्य- वाचस्पतिमिश्रेण सांख्यतत्त्वकौमुद्याम् "पुरुषापसदैर्विंगानैः पशुप्रायै"रित्यादिना बौद्धा जैनाश्च परिगृहीताः ।

(१) यास्कासुरायणयोः शिष्यो जातूकर्ण्य इत्यत्र शतपथब्राह्मणं प्रमाणं प्रदर्श्य यास्कासुरायणयोः ख्रीष्टाब्दारम्भात् पूर्वं षष्ठशताब्द्यां स्थितिर्निर्णीता । अत्र गुरुपरम्पराबोधकं दिव्यावदानीय ३३ अध्यायस्थं वचनं "ब्रह्मा देवानां परमतापसः इन्द्र-

आसन् परं गोतमेन तस्मिन् समये न्यायसूत्राणि प्रणीतानि न वेति ? प्रणीतानि वा पञ्चाध्यायात्मकानि प्रणीतानि न वेति सन्देहः। मम तु मतं प्रथमाध्याय एव प्रणीतो द्वितीय-तृतीय-चतुर्थाध्यायाः येषु वैशेषिक-योग-मीमांसा-वेदान्त-बौद्धदर्शनानां समालोचनानि तेऽन्येन केनचिद्ग्रन्थकारेण भिन्ने समये रचिताः। एष्वध्यायेषु अनेकत्र लङ्कावतारसूत्रेभ्यो नागार्जुनकृतमाध्यमिकसूत्रेभ्यः आर्यदेवकृतशतकाच्च अक्षरशो विषयाः समुद्धृताः। एते च ग्रन्थाः खीष्टाब्दारम्भसमयनिकटवर्त्तिन इति।"

अत्र समालोचयामः। शतपथब्राह्मणाद्युक्तो गौतम इत्यत्रादिशब्देन ऋग्वेदसंहिता-अथर्ववेदसंहिता च गृहीता। तथा सति न्यायसूत्रकर्ता गौतमो बुद्धगौतमो जैनगौतमश्च एककालावस्थायिन इति ऋग्वेदसंहितादिषु गौतमोक्त्या बुद्धजैनगौतमात् पश्चात्कालभाविनस्ते ग्रन्था इति निष्पन्नम्। बुद्धात् पूर्वम् ऋग्वेदसंहिताद्यो ग्रन्था नासन्नेवेति हृदयम्।

वेदधर्मशास्त्रपुराणतन्त्रादिषु यत्रयत्र गोतमशब्दाः यत्रयत्र

---

स्य कौशिकस्य वेदार्थान् वाचयति स्म। इन्द्रः कौशिकोऽरुणेर्गौतमे (?) वेदान् वाचयति। अरुणेर्गौतमो श्वेतकेतुं वेदान् वाचयतः। श्वेतकेतुः शुकं पण्डितं (?) वेदान् वाचयति।" इत्यादि प्रदर्शितम्। अत्र शिष्यात् पूर्वं गुरोः स्थितिस्तत्पूर्वशताब्द्यामिति क्रमेण निर्धारिते खीष्टाब्दारम्भात् पूर्वं गौतमस्य स्थितिः षष्ठशताब्द्यामन्ते सिद्ध्यति।

एवं चेत् परमगुरोर्ब्रह्मणः स्थितिः सप्तमशताब्द्यां सम्भवति तथा च ब्रह्मविष्णुमहेश्वराणामेककालावस्थायित्वादेतेषां स्थितिर्मरणादिकं च खीष्टाब्दारम्भात् सप्तमशताब्द्यां भवेदिति केन वारणीयम् ?

या गौतमशब्दास्तेषां वाचक एक एव पुरुषस्तेनैव न्यायशास्त्रं तेनैव धर्मशास्त्रं तेनैव पितृमेधसूत्रं तेनैव यत् कर्तव्यं तत् सर्वं कृतम्(१) अत्र गौतमीयं तन्त्रं कस्माद्विस्मृतमिति न बुध्यामहे ? किन्तु प्रमेयसिद्धिः प्रमाणाद्भवतीति "इदं मया बुध्यते" "इदं मया न बुध्यते" इति कथनादेव कथं परमतिपत्तिर्भविष्यतीत्यपि न बुध्यामहे । प्राधान्येन प्रमाणनिरूपणपरस्य न्यायशास्त्रस्य माहात्म्यं यथा वेदधर्मशास्त्रपुराणादिषु दृश्यते तथा नैव तिरोहितमस्ति विदुषाम् । एवं स्थिते न्यायशास्त्रस्य प्रामाण्याप्रामाण्यपरीक्षकस्य कियती सामर्थ्यपेक्षितेति पूर्वोक्तवचनान्येव बलवत्यो युक्तय इति महदाश्चर्यम् ।

अत्र त्रयाणां गोतमादीनामेककालावस्थापित्वमुक्त्यैव न सम्भवति प्रमाणाभावादिति प्रथमः । बुद्धगौतमजैनगौतमयोर्यथाकथञ्चित् बौद्धजैनपट्टावल्यादिदर्शनात् समयनिर्णयेऽपि शतपथब्राह्मण-(२)ऋग्वेदसंहिताथर्ववेदसंहितोक्तगो-

(१) अत्र वैयासिकलेख एव प्रमाणम् । शास्त्रत्रयस्य कर्ता एक एव गौतमः अत्र प्रमाणं स एव जानाति । अस्माभिर्यदुक्तं योग-व्याकरण-वैद्यककर्ता एक एव पतञ्जलिस्तत्र प्रमाणं स्कन्दपुराणीयागस्त्यसंहितास्थं पतञ्जल्याविर्भावप्रकरणम् ।

(२) नव्यास्तु इतिहासेन-युक्त्या कल्पनया वा वेदानां समयनिर्णयं तु कृतवन्त एव परं नक्षत्रग्रहगणितेन दुरुच्छेद्येन प्रकारेणापि कृतवन्त इति अल्पज्ञानां व्यामोहनमात्रम् । वेदानां प्रणयने देशस्य ज्ञानाभावाद् ग्रहादीनां गणितमकिञ्चित्करं देशनिर्णयेऽपि ग्रहाणां गतिरपि पुनः पुनरपि तथैव भवतीति अव्यवहितपूर्वगतिसमय एव वेदाः प्रणीता इत्यपि स्थिरीकर्तुमशक्यमिति नैव तिरोहितमस्ति विदुषाम् । विस्तरस्तु महामहोपाध्यायश्रीसु-

तमस्यातिचिरन्तनस्य समयानिर्णयस्तु इदानींपर्यन्तं न जात इति द्वितीयः। त्रयाणां समानकालिकत्वे वेदानामपि तत्पश्चाद्भावित्वे बुद्धदेवेन वेदास्तर्कादीनि शास्त्राणि कथं पर्यालोचितानीति बुद्धदेवसमानकालिकेन जैनगौतमेनापि वेदधर्मशास्त्रपुराणतर्कादीनि शास्त्राणि कथं मिथ्याशास्त्रत्वेन(१) प्रति

---

धारूराष्ट्रविवेचितात् यमारसमेडिकल्हालयन्त्रे मुद्रिताद् द्रिड्मीमांसाग्रन्थाद्‌घगन्तव्य इति नेह पिष्टपेषणभिया प्रपञ्चितमस्माभि ।

(१) "Encyclopaedia of Religion and Ethics" Vol VII p 467, *article on "Jainism" by H Jacobi*

श्वेताम्बरजैनास्त्वेव वदन्ति २४ तीर्थङ्करो महावीरस्वामी स्वशिष्याय गौतमाय इन्द्रभूतये चतुर्दशपूर्वसञ्ज्ञकान् एकादशाङ्गसञ्ज्ञकान् सिद्धान्तानुपदिदेश ते चैकादशाङ्गसञ्ज्ञका ४१ भागेषु विभक्ता यथा ११ अङ्गानि १ आचाराङ्गम् २ सूत्रकृदङ्गम् ३ स्थानाङ्गम् ४ समवायाङ्गम् ५ भगवतीसूत्रमित्यादिना। तत्र ४० नन्दिसूत्रम ४१ अनुयोगद्वारसूत्रमस्ति। तत्रानुयोगद्वारसूत्रे "ज इम अन्नाणीहिं मिच्छादिट्ठीहिं सच्छन्दबुद्धिमइ विगप्पियं त जहा भारह रामायण भीमासुरुक्क कोडल्लय घोडयसुय (घोडयमुह) सगडभद्दियाउ कप्पासिय नागसुहुम कणगसत्तरीवेसिय वइसेसिय बुद्धसासन काविल लोगायत सट्ठितत माढरपुराण वागरणनाडगाइ अहवा सावत्तरि कलाउ चत्तारिय वेया सङ्गोवङ्गा सेत लोइया आगमउ भावसुयम्"।

अत्र नन्दीसूत्र पाठान्तराणि 'कोडल्लय' कोडिल्लय। अपि च 'भागवय पाअजली पुस्सदेवय लेह गणिअ सउणरूप' एतावान् पाठोऽधिक ।

भगवतीसूत्रे च २।१।२० रिउव्वेय जजुव्वेय सामव्वेय अहव्वणव्वेय इतिहासपञ्चमाण निघण्टुछट्ठाण चउण्हवेयाण सगोवगाण सरहस्साण सारए वारए धारए पारए सडगवी सट्ठितविसारए सखाणे सिक्खा कप्पे वागरणे छन्दे निरुत्ते जोइसामयण अण्णेसुय वहूसु वभण्णएसु परिव्वायएसु नएसु

पादितानीति तृतीयः । यथा च बुद्धदेवेन वेदादयः पर्यालोचितास्तथा तेनैवोक्तं प्रदर्श्यते ।

ब्रह्मजालसुत्त १-३२

"इध भिक्खवे एकचो समणो वा ब्राह्मणो वा तक्की होति वीमंसी । सो तक्कपरियाहतं वीमंसानुचरितं सयं पटिभानं एवं आह ।" इत्यादि ।

अत्तनगलुवंमपुस्तके २२९ पृष्ठे "तक्कमत्थं" तर्कशास्त्रम् ।

ललितविस्तरेऽपि १२ अध्याये "निघण्टौ-निगमे-पुराणे-इतिहासे-वेदे-वैशेषिके-हेतुविद्यायां"(१)मित्यादि ।

---

ररिनिहिए यांविहोत्था* इति । भगवतीसूत्रविषयकनिबन्धे वेवरमहाशयकृते २ खण्डे २४८ पृष्ठे द्रष्टव्यम् ।

नन्वास्तुं उक्ता आगमा अतितयीनां खीष्टाब्दारम्भात् परमसुकशताब्यामसुकशताब्यां प्रणीता इति । इति तु श्रूयत एव महावीरस्वामिनः समये लेखनसम्प्रदायाभावात् गुरुपरम्परया श्रुताः शिष्यकण्ठे स्थिताः पश्चाच्च लेखनसम्प्रदायप्रचारेण पुस्तकरूपेण सम्पन्ना जाता इति । यदि च लेपशब्दस्य प्रणयनमेवार्थस्तदा विक्रमादित्यसंवत्सरारम्भात् ४७० वर्षेभ्य. पूर्वमेव निर्वाणं गतानां महावीरस्वामिनां गौतमस्य च संवादो लेखकेन कया रीत्या दृष्टः श्रुतो वेति महान् विप्लवो भवेदिति ।

अत्र लेखनसम्प्रदायाभावस्यायमेवार्थो यदन्यमतावलम्बिभिर्न पाठ्या न च श्राव्या आगमा इति, न च लेखने सूरीणां श्रद्धा वेति जैनवृद्धा वदन्ति ।

(१) हेतुविद्या तु गौतमप्रोक्तं न्यायशास्त्रमेवेति महाभारतात्स्फुटम् । तथाहि

"न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभि. ।
हेत्वागमसदाचारैर्यद्युक्तं तदुपास्यताम् ॥"

इति महाभारते शान्तिपर्वणि २१० अध्याये ।

---

*जैनप्रभाकरयन्त्रमुद्रिते सटीकभगवतीसूत्रपुस्तके १४९ पृष्ठे द्रष्टव्यम् ।

अपि च बुद्धदेवस्य न्यायप्रणेतुर्गोतमस्य च एककालावस्थायित्वं नैव सम्भवतीति चीनदेशीया जापानदेशीयाश्च सिद्धान्तयन्ति तथाहि–Sadajiro Sugiura नामकजापानदेशीयविद्वद्वरेण स्वरचिते "Hindu Logic as preserved in China and Japan" (Philadelphia, 1900; Publications of the University of Pensylvania Series in Philosophy, No 4 ग्रन्थे २० पृष्ठे निरूपितम् । "एकस्य मते खीष्टाब्दारम्भात् १०३० वर्षेभ्यः पूर्वं बुद्धदेवस्य जन्माभूत्, द्वितीयस्य मते १०१४ वर्षेभ्यः पूर्वं बुद्धदेवस्य जन्माभूत्, तृतीयस्य मते खीष्टाब्दारम्भात् ७८० वर्षेभ्यः पूर्वं चतुर्थस्य मते ७२३ वर्षेभ्यः पूर्वं पञ्चमस्य मते ७१५ वर्षेभ्यः पूर्वं षष्ठस्य मते ६८७ वर्षेभ्यः पूर्वं सप्तमस्य मते ४८७ वर्षेभ्यः पूर्वं बुद्धदेवस्य जन्माभुदिति ।"

अत्र चीनदेशीया बहवः सिद्धान्तयन्ति खलु महाटीकाग्रन्थे १ । २२ निरूपितमास्ति "भारतवर्षे आदौ न्यायशास्त्रप्रणेता "सक–मक" नामको ब्राह्मणोऽभूत् वस्तुतस्तन्नाम "मक–सक" इति । अत्र मकशब्दश्चक्षुर्वाचकः सकशब्दश्च पादवाचक इति गुणवशादेव अक्षपाद इति तेन नाम लब्धम् । वस्तुतः गोतमनाम्नैव सर्वत्र प्रसिद्धिः । अस्याक्षपादापरपर्यायस्य गोतमस्याविर्भावो बुद्धदेवाद् बहुवर्षशताब्दीभ्यः पूर्वमभूदिति ।

---

"अहमासं पण्डितको हैतुको वेदनिन्दकः । यं-
आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थकाम् ॥ स-
हेतुवादान् विवदता वक्ता संसत्सु हेतुमत् ॥" रुक्ते जो-
इत्यादि महाभारते शान्तिपर्वणि १८० अध्याये । रसु नपसु

"बुद्धदेवस्तु महादार्शनिको नाभूत् किन्तु सामाजिको विषयसंशोधको दयालुश्च तेन पञ्च शुद्धाः सप्त अशुद्धा( पदार्थाः )श्चिन्तिताः(१) अर्थात् हेतवो हेत्वाभासाश्चेति सर्वं न्यायदर्शनरहस्यमनुगतम् ।"

"ख्रीष्टाविर्भावाद् द्वितीयशताब्द्यां युर्जुनामकमहाजानिकबौद्धपण्डितेन स्वग्रन्थे समालोचितम् ।"

"Hindu Logic as preserved in China and Japan" नामके ग्रन्थे ३२ पृष्ठे महादिङ्नागस्य चरिते प्रतिपादितम् Kwei-Ke नामकग्रन्थस्य भूमिकायाम् वसुबन्धुसमयात् *परं रंकी—रंशिकीनामकयोस्तर्कग्रन्थयोर्निर्माता बोधिसत्त्व*-दिङ्नागः प्रादुरभूत् स च सहस्रबुद्धान्तर्गतः पर्वते वसन् स्वकीयां ध्यानशक्तिमवर्धयत् यस्मिन् समये गम्भीरतत्त्वप्रतिपादकस्य तस्य ग्रन्थस्य समाप्तिरभूत् तस्मिन् समये पर्वतस्य देवता तत्सन्मानार्थं भूमेरूर्ध्वं सप्तपष्टिहस्तपरिमितमुच्चैः समारुह्यावोचदिदं खलु शाक्यबुद्धात् पर(२)मनेनैव बुद्धेन प्रथमतो न्यायशास्त्रोपरि व्याख्यानं कृतं यदि शाक्यबुद्ध इदानीं वर्त्तमानश्चेत्तदा तस्याप्यादरणीयोऽयं भवेदिति ।" अनेनापीतिहासेनानुमितं भवति यत् शाक्यबुद्धात् पूर्वमपि गोतमप्रोक्तं न्यायशास्त्रमासीदेवेति ।

---

यच्चोक्तं "गोतमेन न्यायशास्त्रस्य प्रथमाध्याय एव प्रणीतः द्वितीय-तृतीय-चतुर्थाध्याया अन्येन प्रणीता बौद्धादिदर्शना-

(१) Kwai-Shin-mitz, Vol. V., p. 2 seq.

(२) अनेनानुमितं भवति शाक्यबुद्धेन गोतमप्रणीतं न्यायशास्त्रं ...घेतमिति ।

नां तत्र समालोचना"दित्यादि "एष्वध्यायेषु लङ्कावतार-सूत्र–नागार्जुनकृतमाध्यमिकसूत्र–आर्यदेवकृतशतकेभ्योऽक्षरशो विषयाः समुद्धृताः । तस्मात् । २ । ३ । ४ । अध्याया नवीना" इति ।

अत्र "पञ्चममध्यायमतिगहन"मित्युदयनाचार्योक्त्या आचार्यवाचस्पतिमिश्रादीनामप्यतिगहनत्वेन प्रतीयमानः पञ्चमाध्यायोऽस्ति किं पुनर्मादृशानामल्पल्पज्ञानामिति जिज्ञासुरूपेणान्वेषकेण मया पञ्चमाध्यायविषये नवीनतार्किकसमालोचनं किमपि न दृश्यते । यच्चेदं लिखितं प्रथमाध्यायेन पञ्चमाध्यायस्य सम्बन्ध एव नास्ति तन्न सम्यक् "तद्विकल्पाज्जातिनिग्रहस्थानबहुत्व"मिति प्रथमाध्यायान्तिमसूत्रेण सूचितत्वात्तद्बहुत्वनिरूपणावश्यकत्वादिति । अनुमीयते कदाचिच्चतुरध्यायात्मकमेव यथाकथञ्चिन्न्यायशास्त्रं तेषां मते भवितुमर्हति । २ । ३ । ४ । अध्यायेषु बौद्धादिदर्शनानां समालोचनादन्येनैव नवीनेन केनचिद्रचिताः प्रथमाध्याय एव गोतमेन रचित इति । परन्तु तेष्वध्यायेषु योगं विहाय कस्यापि दर्शनशास्त्रस्य नामापि न वर्तते इति कस्माज्ज्ञातं यदिदं बौद्धस्यैव मतं मीमांसकस्यैव मतमित्यादि ? यदि च संवादात् तर्हि सूत्रेषु ये विकल्पा दृश्यन्ते तेषामाधुनिकब्राह्म–आर्ष–परमार्थदर्शनादिग्रन्थेषु संवादादभिनवमेवेदं न्यायशास्त्रं कथं न कल्पनीयम् ? । यदि च भाष्यकाराद्यनुमतव्याख्यानेन शास्त्रान्तरसमालोचनान्नवीनत्वनिष्कर्षस्तदा "आप्तोपदेशः शब्दः" १ अध्याये १ आह्निके ७ सूत्रव्याख्याने भाष्यकारेण "स द्विविधो दृष्टादृष्टार्थत्वा"दिति १ अ० १ आ० ८ सूत्रव्याख्याने वार्त्तिककारेण च "तदेतल्लक्षणमृष्यार्यम्लेच्छानां समा-

न"मिति व्याख्यातत्वात् प्रथमाध्यायोऽपि गोतमहस्तान्निपतितश्चतुरध्याय्यात्मकमपि न कृतं गोतमेनेति निष्पन्नं भवति ।

वस्तुतस्तु न्यायसूत्रपाठे उद्द्योतकर–वाचस्पति–उदयनाचार्यादीनामपि क्वचित् सन्देह आसीदिति तत्रतत्र सुव्यक्तमेव, विश्वनाथपञ्चाननेन तु न्यायसूत्रवृत्तिग्रन्थे सुस्पष्टतया "नेदं सूत्रं किन्तु भाष्य"मित्याद्युक्तमेव । नवीनतार्किकैस्तु मुद्रितपुस्तके स्थूलाक्षरैर्विन्यस्तानां सूत्राणामेव सूत्रत्वं समधिगम्य तत्र सन्देहमपि विहाय सम्पूर्णा अध्याया एव गलहस्तिता इति महदाश्चर्यम् ।

यदि च २ । ३ ४ । अध्याया असम्बद्धा एवेति तदा उद्देशो लक्षणं परीक्षा चेति अनुबन्धत्रयसम्बद्धं शास्त्रं भवतीति महर्षीणां सम्प्रदायविच्छेदादाचार्यैरपि अनुबन्धत्रयसमन्वयार्थं कृत: प्रयासो अरण्यरुदितं स्यादिति २ । ३ । ४ अध्यायात्मकं परीक्षाभागं विहाय कोऽनुमन्येत प्रथमाध्याय एव प्रणीत इति ।

अत्रावशिष्टा प्रबला युक्तिर्बौद्धशास्त्रसमालोचनं लङ्कावतारसूत्र–नागार्जुनकृतमाध्यमिकसूत्र—आर्यदेवकृतशतकेभ्यः अक्षरशो विषयाणां समुद्धरणं च । यदि चात्र शङ्कासमाधिपरिशीलनेनैव तत्तत्सूत्राणां मूले प्रक्षिप्तत्वमेव शङ्क्येत तदपि कथञ्चित् सङ्गतं भवेत् किमपराद्धमध्यायत्रयेणेति न बुद्ध्यामहे ? । कस्माज्ज्ञातं यच्छाक्यसिंहबुद्धस्यैव मतं ? यस्य च समयस्य स्थैर्ये बहवोऽस्थिराः पण्डिताः । अपि च हीनयानिकानां बौद्धानां मते(१)शाक्यसिंहश्च पञ्चविंशो बुद्धः अस्मात् पूर्वमनेके बुद्धाः सञ्जाता परमप्यनेके भविष्यन्तीति नैत-

(१) Buddha Vamsa (Pali Text Society–1882)
Travels of Hiouen Thsang and Fa Hien.

त् सिद्धं भवति यद्बौद्धनाम्नैव शाक्यसिंहमतमिदं, बौद्धनाम्नैव इदं शाक्यसिंहात् पश्चाद्भावीत्यादिनिश्चयावसर इति ।

यत्रयत्र बौद्धमतसंवादस्तत्रतत्र कस्माद् ज्ञातं बौद्धस्य शाक्यसिंहस्यैव मतं ? मूले तन्नामोल्लेखाभावाद् । उपनिषत्स्वपि तद्दर्शनात् ।

तथाहि बृहदारण्यकोपनिषदि तृतीयाध्यायस्य द्वितीय ब्राह्मणे "नैवेह किञ्चनाग्र आसीत् मृत्युनैवेदमावृतमासी"(१) दित्याद्युपनिषद्व्याख्याने शङ्कराचार्येण तट्टीकायामानन्दज्ञानेनापि शून्यवादि–क्षणिकवादि–बौद्धमतोद्भावनं कृतं तच्च तत्तत्सम्प्रदायधूरवहत्वेन तत्तन्नाम्ना व्यक्तीकृतं तत्सम्प्रदायनिराकरणार्थम् । यतस्तथाविधाः शङ्कासमाधयोऽनादिकालप्रवृत्ताः । यदि च बुद्धात्परमेव उपनिषदोऽभूवन् तर्हि बुद्धदेवेन तत्समानकालिकेन महावीरस्वामिना वा वेदाः समालोचिता इति ते कुत्र निष्ठेयुरिति ? शङ्कितपथस्तात् ।

अल्पज्ञानां व्यामोहनिवृत्त्यर्थं व्याख्याकाराणामेषा रीतिरेव यत्प्राचीनग्रन्थमाहात्म्याविष्कारपूर्वकं नवीनमतखण्डनप्रदर्शनेन व्याख्यानम् यथा तत्रतत्र विशिष्टाद्वैतमतखण्डने "त्रिदण्डिवेदान्तिमतं खण्डयतीत्यत्र" "रामानुजमतं खण्डयतीति" अन्यथा रामानुजाचार्यादपि पूर्वकालवर्तिना शङ्कराचार्यसमानकालिकेन सुरेश्वराचार्येण बृहदारण्यकवार्त्तिके ५ ब्राह्मणे ३ अध्याये त्रिदण्डिमतखण्डनात् रामानुजाचार्यात् परं सुरेश्वराचार्याः स्युः अपि च ब्रह्ममीमांसाभाष्ये "वैधर्म्याच्च न स्वप्नादिवत्" २ अ० २ पा० २९ सूत्रव्याख्याने भास्कराचार्येण शाङ्करमतखण्डने "ये तु बौद्ध-

(१) पाणिनिआफिसोसाइटीबङ्गालमुद्रितपुस्तके पृ. २७ द्रष्टव्यम् ।

मतावलम्बिनो मायावादिनस्तेऽप्यनेन न्यायेन सूत्रकारेणैव निरस्ता" इति भाष्यात् पश्चात् सूत्राणि रचितानि स्युरिति महान् विप्लवो भवेदिति।

---

बहुज्ञत्वाद् यत्र न्यायशास्त्रस्य निन्दास्तुतिविषयको महर्षेर्गोतमस्य च निवासविषयकः समन्वयः कृतः सोऽप्याश्चर्यजनक एव। तथाहि—"वैदिकसंहिताब्राह्मणग्रन्थयोर्न्यायशास्त्रस्य च पूर्वं सम्बन्ध एव नासीत् शुष्कन्यायविद्या तदानीं पृथगेवासीत् तस्माद् ब्राह्मणैरनादृता पश्चात् शनैः शनैर्विपुलसमादरः सञ्जात इति।"

यदि च वैदिकग्रन्थस्य सम्बन्ध एव नासीत् तदा विश्वनाथन्यायपञ्चाननादिभिरुक्ता न्यायो मीमांसा धर्मशास्त्राणीत्युपाङ्गानि इत्यादिश्रुतयश्च कुत्र तिष्ठेयुः अथ च न्यायप्रणेतुर्गोतमस्य ऋग्वेदादिसंहिताग्रन्थेषु शतपथब्राह्मणे च निरुक्तरीत्या चर्चायां सत्यां पूर्वं गोतमः काष्ठवत् स्थितः पश्चाद्बहुकालानन्तरं न्यायशास्त्रं प्रणीतवान् इति निष्पन्नं भवति।

अथ च "आन्वीक्षिकी विद्या न्यायशास्त्रं वा अध्यात्मविद्या वा क्षत्रियेष्वासीन्न ब्राह्मणेषु इत्यादि" तत्र प्रमाणं छान्दोग्योपनिषद् ५—३ "मा त्वं गौतमावदो यथेयं न प्राक् त्वत्तः पुरा विद्या ब्राह्मणान् गच्छति तस्मात् सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदि"त्यादि(१)।

तत्र मनुस्मृतौ १ अध्याये ३४। ३५ श्लो.

"अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम्।
पतीन् प्रजानामसृजं महर्षीनादितो दश॥

---

(१) न्याये प्रशासनप्रकारस्याभावात् धर्मसूत्रकर्तुर्गौतमस्यात्र ग्रहणम्।

मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
प्राचेतसं वसिष्ठं च भृगुं नारदमेव च ॥"

इत्युक्त्वा अङ्गिरा ब्रह्मणः पुत्रस्तद्वंश्यो गोत्रप्रवर्तको गोतमः । छान्दोग्ये च मनोः प्रशंसा वर्तत एव । तर्हि गोतमात् पूर्वं कोसौ क्षत्रियः आसीद् यत्र न्यायविद्याध्यात्मविद्या वा वर्तमाना तत्र विद्याशब्दोप्यान्वीक्षिकीवाचक एव ? इति वर्णनीयम् ।

अपि च

"विद्या ह वै ब्राह्मणमाजगाम
गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवे ऽयताय
न मा ब्रूया वीर्यवती तथा स्याम् ॥"

इत्यादिसंहितोपनिषद्ब्राह्मणश्रुतीनां माधवाचार्येण ऋक्संहिताभाष्यमुखबन्ध उदाहृतानां का गतिः ॥

गोतमस्थानविषयकसमन्वये च वाल्मीकिरामायणेन तु गोतमस्थानं मिथिलामण्डले आसीदिति सिद्धं किं तु "अक्षपादः कणादश्च उलूको वत्स एव च"त्यादिवायुपुराणात् प्रभासक्षेत्रे ऽपि स्थानं सम्भवति । अस्य समन्वयार्थं गोतमासम्बद्धां श्रीमद्भागवतीय ११ स्कन्धीय ६ अध्यायस्थां ३५ "प्रभासं सुमहत्पुण्यं यास्यामोऽद्यैव माचिर"मितिश्लोकसम्बद्धां श्रीमद्भागवतीय ११ स्कन्धीय ३० अध्यायस्था ६ श्लोकसम्बद्धां 'वयं प्रभासं यास्यामो यत्र प्रत्यक् सरस्वती"त्यादिश्रीकृष्णवचोमुदृत्य गोतमस्य प्रभासगमनं साधयति । अत्र मिथिलादेशे स्वाश्रमे स्थित एव गोतमो ऽपवर्गनिरूपकं न्याय-

शास्त्रं प्रणीतवान् ततः परं किमपरमवशिष्टं यदर्थमन्ते प्रभासक्षेत्रे गत्वा सोमशर्मणो ब्राह्मणस्य शिष्यतां गत इति स मन्वयकर्ता एव जानाति ।

यच्च लङ्कावतारसूत्र–नागार्जुनकृतमाध्यमिकसूत्र–आर्यदेवकृतशतकेभ्यो विषयाः समुद्धृता इति अत्र ते विषया उक्तग्रन्थेष्वेव निरूपिता नान्यत्रेत्यत्र किं बीजं किं प्रमाणं कस्माच्चावगतम् ? इति वक्तव्यं भवति । तानि वाक्यानि प्रायः शङ्कासमाधिलक्षणाक्रान्तानीति चिरकालादेव विचारगर्भाणीति विज्ञायते । मम तु मतमेते विषया ऋग्वेदसंहितायामुपनिषत्स्वपि निरूपिताः अतोऽनादिकालादेवास्तिकनास्तिकशङ्कासमाध्योर्वर्तमानत्वादुक्तरीत्या तत्तत्सूत्राणां नवीनत्वकल्पनया २ । ३ । ४ अध्यायानां नवीनत्वकल्पनमयुक्तमेवेति । तथाहि–

गोतमसूत्रम् ४ । १ । ३९

"न स्वभावसिद्धिरापेक्षिकत्वात् ।"

माध्यमिकसूत्रम्

"न सम्भवः स्वभावस्य युक्तः प्रत्ययहेतुभिः ।
स्वभावः कृतको नाम भविष्यति पुनः कथम् ॥"

श्वेताश्वतरोपनिषदि २

"कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् ।" तथा श्वेताश्वतरोप ६ । १ "स्वभावमेके कवयो वदन्ति कालं तथान्ये परिमुह्यमानाः ।"

गोतमसूत्रम् ४ । १ ४९

"नासन्न सन्न सदसदसत्सतोर्वैधर्म्यात् ।"

माध्यमिकसूत्रम्

"सतश्च तावदुत्पत्तिरसतश्च न युज्यते ।
न सतश्चासतश्चेति पूर्वमेवोपपादितम् ॥
नैवासतो नैव सतः प्रत्ययार्थस्य युज्यते ।
न सन्नासन्न सदसद् धर्मो निर्वर्तते सदा ॥"
"सदसत् सदसच्चेति यस्य पक्षो न विद्यते ।
उपालम्भश्चिरेणापि तस्य वक्तुं न शक्यते ॥"
सुबालोपनिषदि १ । ११
"सहोवाच न सन्नासन्न सदसत् ।" तत्रैव ३ खण्डे
"असद्वा इदमग्र आसीत् ।"
ऋग्वेदसंहितायामपि १० म० १२९ सू० १ मन्त्रे द्रष्टव्यम्
गोतमसूत्रम् ४ । २ । ३१–३२
"स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः ।"
"मायागन्धर्वनगरमृगतृष्णिकावद्वा ।"
माध्यमिकसूत्रम् ।
"यथा माया यथा स्वप्नो गन्धर्वनगरं यथा ।
तथोत्पादस्तथा स्थानं तथा भङ्ग उदाहृतम् ॥"
मैत्र्युपनिषदि ४ प्रपाठके
"इन्द्रजालमिव मायामयं स्वप्न इव मिथ्यादर्शन" मित्यादि ।

---

अन्ये तु "उपलभ्यमानन्यायसूत्राणामतिसावधानतया पाठेन समालोचनेन च निष्पन्नं भवति तावद् योगवेदान्तादिशास्त्रनिरूपितविषयोपनिपातात् जैनदर्शने प्रमेयेषु छलस्य पारिगणनाद् अत्र च न्यायशास्त्रे प्रमेयेषु तदभावात् जातिनिरूपणे प्रथमाध्यायपञ्चमाध्याययो-

विरोधात् तत्र महान् विप्लवो जातः । अपि च द्वितीय-तृतीय-चतुर्थाध्यायेषु षोडशपदार्थानां परीक्षाया अभावात् नेदं पूर्णं शास्त्रमिति । अन्यच्च हिन्दूशास्त्रेषु न्यायशास्त्रस्य निन्दाया दर्शनात् बौद्धशास्त्रेण संश्लिष्टमिदं शास्त्रं जातम् । यत्तु खीष्टाब्दारम्भसमयात् ३०० वर्षेभ्यः परं वर्तमानाद्वात्स्यायनात् प्रभृति इदानींतनपर्यन्तैष्टीकाकारैः स्वव्याख्यानेन समाहितं संयोजितं ते ऽपि नापारयँस्तत्त्वतो व्यवस्थापयितुं तत्त्वार्थानित्यादि" निरूपयन्ति । इयं हि तेषामुक्तार्थसंसिद्धौ प्रबला युक्तिर्यद् "वाचस्पतिमिश्रेण न्यायसूत्रोद्धारः न्यायसूचीनिबन्धश्च रचितः अनयोः संवादेन समालोचनेन च महान् विप्लवो दृश्यत" इति ।

अत्र समालोचनम् । अत्र महान् विशेषोऽस्ति यत् न्यायशास्त्रस्येतिवृत्तमितिहासः समयनिर्णयादिकमपि बहुभिः कृतम् तन्निरूपितप्रमेयादिपदार्थसमालोचनं तैर्न कृतमन्येनैव कृतमिति हर्षविषयोऽयम् । अयं तु अननुभूतमहाहर्षविषयो "यद्वात्स्यायनप्रभृतीदानींतनपर्यन्तं टीकाकारा नापारयँस्तत्त्वतो व्यवस्थापयितुं पदार्थान्" इदं तु तथ्यमेव गङ्गेशोपाध्यायैः श्लोकद्वादशसाहस्र्यात्मकेन तत्त्वचिन्तामणिग्रन्थेन "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी"तिपञ्चदशाक्षरात्मकमेव गौतमसूत्रं व्याख्यातं ततः परं व्याख्यानुव्याख्यानैः श्लोकानां लक्षाणामष्टाविंशत्या उपबृंहितमपि(१) इदानींपर्यन्तं क्रोडपत्रविवेचनादयो न समाप्तिं गता नापि विश्रान्ता इत्ये-

(१) चौखंबासंस्कृतसीरीजमुद्रिते क्रोडपत्रसंग्रहे भूमिकायां विस्तरेण निरूपितमिदमस्माभिः ।

पां तत्त्वज्ञा महाशया एव । परं तु कुत्र किं वा स्खलनं जात-
मितिनिरूपितवन्तश्चेत् सिद्धं नः समीहितं भवेत् तस्य चर्चैव
न कृतेति खेदास्पदम् । परं तु वैद्यकविद्यावद् गणितविद्यादि-
वन्नास्य न्यायशास्त्रस्य लौकिकार्थसिद्धिः प्रयोजनं किं तु "त-
त्त्वज्ञानान्निःश्रेयसाधिगम" इति प्रथमसूत्र एव प्रयोजनं दर्शितं
सूत्रकारेण तत्तु निःशेषन्यायशास्त्रपरीक्षणात् महाशया एव जा-
नन्ति तत्त्वज्ञानान्निःश्रेयसाधिगमो भवति न भवति वेति ? ।
बौद्धाद्यागमविषये वाचस्पतिमिश्रेण ५ कारिकाव्याख्यायां सां-
ख्यतत्त्वकौमुद्यामुक्तमेव "विगानात् छिन्नमूलत्वात् म्लेच्छादिभिः
पुरुषापसदैः पशुप्रायैरित्यादि" तस्माच्छिष्टापरिगृहीतास्ते आग-
मा एवेति तर्हि न्यायोक्तद्वादशविधेषु प्रमेयेषु सुखस्य गणनाभावे
जैनागमेषु तत्परिगणनात् न्यायशास्त्रस्य न्यूनतेति कथङ्कस्यैव न्यू-
नता । यद् आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुः-
खापवर्गास्तु प्रमेयमिति सूत्रोक्तद्वादशविधेषु प्रमेयेषु परिगणितं दुः-
खमेकविंशतिप्रकारकमिति तत्र सुखस्य वार्त्तिककारेण ग्रन्थारम्भ
एव सम्यक्परिगणितस्य ज्ञानाभावाद्वा तिरस्कृतत्वात् ।

जातिनिरूपणे प्रथमपञ्चमाध्याययोः को विरोध इति तु
"सुखमस्तीति वक्तव्यं कुन्तीपुत्रो विनायक इतिवत्" विरो-
धस्यादर्शितत्वात्(१) ।

यदि च अन्यशास्त्रोक्तपदार्थानां तदन्यत्रोपनिपातेनैव
शास्त्रस्य व्यर्थता तदा सर्वेष्वेव शास्त्रेषु(२) अन्यदीयशास्त्रविष-
योपनिपातात् सर्वाणि शास्त्राणि व्यर्थान्येवेति किमपि नाध्येत-

(१) प्रथमाध्यायपञ्चमाध्याययोः सम्बन्धश्च ६२ पृष्ठे ऽनैव प्रद-
र्शितो मया ।

(२) अस्यामेव भूमिकायां पृष्ठे ५० द्रष्टव्यम् ।

च्यम् । उपनिषत्स्वपि सांख्यशास्त्रस्य प्रशंसा सांख्ये तु न वयं षट्पदार्थवादिनो वैशेषिकादिवत्(१) इति सूत्रेणैवोक्तत्वाद्व्यर्थमेव तत् ।

अपि च २ । ३ । ४ अध्यायेषु सकलपदार्थपरीक्षाया अभावान्नेदं पूर्णं शास्त्रं तदपि न सम्यक् येषां पदार्थानां परीक्षा न कृता तत्कारणानि च तत्र तत्रोक्तान्येवेति । न्यायनिन्दाप्रशंसासमन्वयश्च आचार्यैः कृत एव अस्माभिरपि प्रतिपादित एवाधस्तादिति हिन्दूशास्त्रज्ञानां(२) नात्र कथनावकाशः ।

यत्तु खीष्टाब्दारम्भात् ३०० वर्षेभ्यः परं वात्स्यायनस्य वर्तमानत्वमुक्तं तदपि लेखमात्रेणैव सिद्धं न भवतीति । अयमर्थः परीक्षणीयोऽग्रे वात्स्यायनचरिते ऽस्माभिरिति ॥

इयं हि तेषामुक्तार्थसंसिद्धौ प्रबला युक्तिर्यद्वाचस्पति-

(१) सांख्यप्रवचनषडध्याय्यां १ अध्याये २५ सूत्रम् ।

(२) वेदान्तिब्रुवाणस्तु "न्यायो मीमांसा धर्मशास्त्राणीति" श्रुतिः । "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।" "पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश" इत्यादिस्मृतिः । "मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं परा"मिति महाभारतम् । एषु वचनेषु जन्मान्धस्वापारं विधाय "यदक्षपादः प्रवरो मुनीनां शमाय शास्त्रं जगतो जगाद" इत्यादिवाक्येषु न्यायपक्षपातित्वं प्रलपन्तः अक्षपादप्रणीते च काणादे सांख्ययोगयोः । त्याज्यः श्रुतिविरुद्धांशः" इत्यादिवचनानामेकमेवाद्वितीयं ब्रह्मेति श्रुतिर्ब्रह्मपरा जीवेषु नोपयुज्यत इति नैयायिकार्थमजानन्तो न्यायनिन्दापरायणा वेदान्तिब्रुवगुरुवचनान्येव प्रमाणयन्तो न्यायस्यार्षत्वेऽपि तदप्रामाण्ये बार्हस्पत्यं चार्वाकमतमुदाहरन्ति यथा गौतमं शास्त्रमार्षं तथा बार्हस्पत्यमिति । तदत्यन्तमसत् तत्र बार्हस्पत्यशास्त्रप्रामाण्ये श्रुत्यादिप्रमाणानुपलम्भात् ।

मिश्रेण न्यायसूत्रोद्धारः न्यायसूचीनिबन्धश्च रचितः(१) अनयोः संवादेन समालोचनेन महान् विप्लवो दृश्यत" इति(२)। इदमुपलभ्यमानं न्यायशास्त्रं सर्वथानवस्थितं पठनपाठनानुपयुक्तमिति तेषां हृदयम्।

---

इदं सर्वं न चित्रं नाप्यपूर्वार्थनिर्द्धारणं जैनागमे सुयगडसूत्रे त्रिषष्ट्यधिकानि त्रीणि शतानि मतानि(३) प्रदर्शितानि भारतवर्षीयोपासकसम्प्रदायाख्यपुस्तके ऽपि सुबहूनि मतानि निरूपितानि तानि च स्वमते सर्वथैवानुभवसिद्धानि परमते तु स्वमतं विहाय सर्वत्रैवानुभवापलाप इति सर्वेषां साधुत्वे यत्समाधानं तदेव केषामप्येषां शङ्कायाः समाधानं भवितुमर्हतीति । अपि च पूर्वाचार्यैः कृतानामेतादृशीनां शङ्कानां समाधानं तु उदयनाचार्येण किरणावल्यां श्रीहर्षेण खण्डनखण्डखाद्ये साहित्याचार्यैरपि तत्रतत्र कृतमेव । अधिकं तु मया न्यायदर्शनभाष्यकर्त्तुर्वात्स्यायनस्य चरिते भाष्यवर्णने यथा यथं परीक्षिष्यते ॥

---

(१) एकेनैव वाचस्पतिमिश्रेण ग्रन्थद्वयं रचितं विभिन्नेन वा कुत्र को वा विप्लव इति तैः समालोचितं न वेति बहूनां सन्देहो भवति स्वय तीर्णः परान् तारयतीति लौकिकाभाणकेन तत्प्रदर्शनस्यात्यन्तावश्यकत्वात् । मया तु किञ्चिद्वर्णितमधस्तात् परिशिष्टे वाचस्पतिमिश्रचरिते निरूपयिष्यते ।

(२) कुत्र विप्लवः को वा विप्लव इति अवश्यनिरूपणीयं भवति तदभावादकिञ्चित्करमिदम् ।

(३) मलयगिरिकृतायां द्वितीयोपाङ्गटीकायां गुप्तग्रन्थे द्रष्टव्यम् । Indian Antiquary 1888, p. 344.

अथ

## न्यायदर्शनभाष्यकर्तुर्महामुनेर्वात्स्यायनस्य चरितम् ।

तत्र तावन्न्यायदर्शनभाष्यकर्ता भगवान् वात्स्यायनः कस्मिन् देशे कस्मिन् काले आविर्भूत इति निर्णयस्तु दूरे गतस्तन्नाम्न्येव मतभेदा दृश्यन्ते एकत्र वात्स्यायनोऽपरत्र पक्षिलस्वामी अन्यत्र पक्षिलमुनिः पक्षिल इति वा ।

किन्तु न्यायभाष्यान्ते ।

"योऽक्षपादमृषिं न्यायः प्रत्यभाद्वदतां वरम् ॥

तस्य वात्स्यायन इदं भाष्यजातमवर्तयत्" ॥(१) इति । न्यायवार्त्तिकसमाप्तौ च ।

"यदक्षपादप्रतिभो(२) भाष्यं वात्स्यायनो जगौ ।

अकारि महतस्तस्य भारद्वाजेन वार्त्तिकम् ॥"

इति दर्शनात् निर्णीतं भवति तस्य मुख्यं नाम वात्स्यायन इति । अक्षपादप्रतिभ इति वार्त्तिककारोक्त्या अक्षपादतुल्यो महर्षिर्भाष्यकार इति सिद्धम् ।

न्यायवार्त्तिकतात्पर्यटीकायामारम्भे आचार्यवाचस्पतिमिश्रेण ।

"अथ भगवता अक्षपादेन निःश्रेयसहेतौ शास्त्रे प्रणीते

---

(१) पद्यमिदं विजयनगरसंस्कृतसीरीजमुद्रिते न्यायदर्शनपुस्तकेऽन्येष्वपि प्राचीनेषु लिखितपुस्तकेषु तथा अस्मन्निकटे वर्त्तमाने महानैयायिकैः प्रामाणिकत्वेनावधृते प्रायः शुद्धे पुण्यग्रामे ( पूनानगरे ) लिखिते प्राचीने पुस्तकेऽपि वर्त्तते ।

(२) यदक्षपादप्रतिम इत्यपि क्वचित् ।

व्याख्याते च भगवता पक्षिलस्वामिना किमपरमवशिष्यते यदर्थं वार्त्तिकारम्भ" इत्युक्तत्वात् पक्षिलस्वामी इत्यपि निष्पन्नं भवति ।

वेदादिभाष्यकर्त्रा माधवाचार्येणापि सर्वदर्शनसंग्रहे ऽक्षपाददर्शने(१) "पक्षिलस्वामिना च सेयमान्वीक्षिकी विद्या प्रमाणादिभिः पदार्थैः प्रविभज्यमाने"त्याद्युक्तम् ।

तार्किकरक्षाटीकायां चादावेव "पक्षिलमुनि(२)प्रभृतय"- इत्युक्तम् ।

तथा च वात्स्यायनस्य नामान्तरं पक्षिलमुनिः पक्षिलस्वामी इति च सिद्धम् ।

शतपथब्राह्मणे बृहदारण्यकोपनिषदि समाप्तौ "अथ-वंशः" इत्युपक्रम्य "वात्स्याद्वात्स्यः"(३)इत्युक्तम् । तस्माद् वत्सस्य युवा अपत्यं वात्स्यायन इति ।

वात्स्यायनस्य चर्चा पद्मपुराणीयरामाश्वमेधे १ अध्यायेऽपि वर्तते ।

---

(१) वङ्गदेशीय-एशियाटिक्सोसाइटीद्वारा मुद्रितपुस्तके १५ पृष्ठे द्रष्टव्यम् ।

(२) केचित्तु अत्र मुनिशब्दस्तत्त्वप्रदीपिकाकारचित्सुखमुनिवद् बोध्य इति तन्न न्यायवार्त्तिकारम्भे "यदक्षपादप्रवरो मुनीनां" वाचस्पतिमिश्रकृतखण्डनोद्धारे "यदक्षपादस्य महामुनेर्मत"मित्याद्युक्त्या अत्रापि तथास्यात् । पक्षयति तत्त्वज्ञानं परिगृह्णातीति पक्षिलः । पक्ष+बाहुलकादिलच् । यद्वा पक्षिणो दयया लाति आदत्ते गृह्णातीति पक्षिलः । ला आदाने इति पाणिनिः । पक्षिलचर्चापि मत्स्यपुराणे ५२ अध्याये द्रष्टव्या ।

(३) वत्सस्य युवा गोत्रापत्यं वात्स्यायनः वत्स+यञ् ततो यूनि फक् जीवति वत्से युवापत्यं वात्स्यायन इति यावत् ।

व्यास उवाच।

"ततः परं धराधारं पृष्टवान् भुजगेश्वरम्।
वात्स्यायनो मुनिवरः कथामेतां सुनिर्मलाम्॥" इत्यादि।

इत्थं च पुराणादौ वात्स्यायनस्य चर्चाया दर्शनात् तस्य चिरन्तनत्वं सिद्धमेव।

एवं तत्कृतन्यायदर्शनभाष्येऽपि न कोऽपि हेतुर्दृश्यते येनार्वाचीनत्वं सिद्ध्येत्।

यदि च वक्ष्यमाणात्मवाद्यनात्मवाद्यास्तिकनास्तिकसांख्ययोगक्षणिकवादिभूतचैतनिकदशावयववादिनां मतोपन्यासेनार्वाचीनत्वं कल्प्येत तदा उपनिषदादिष्वपि तद्दर्शनात् तेषामप्यर्वाचीनत्वं भवेत् किं पुनर्वात्स्यायनस्य तत्प्रणीतभाष्यस्य चेति। यथा तद्भाष्ये २९ पृष्ठे(१) "अनात्मवादिनः।"

३८ पृ० "इति सांख्यानाम्। इति योगानाम्।"

३९ पृ० "दशावयवानेके नैयायिका वाक्ये संचक्षते। जिज्ञासा संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदास इति॥"

६० पृ०"अथवास्त्यात्मेत्येके।नास्त्यात्मेत्यपरे मन्यन्ते"इति।

१०४ पृ० "आकाशगुणः शब्दो विभुर्नित्योऽभिव्यक्तिधर्मक इत्येके"।

"गन्धादिसहवृत्तिर्द्रव्येषु सन्निविष्टो गन्धादिवदवस्थितोऽभिव्यक्तिधर्मक इत्यपरे।"

"आकाशगुणः शब्द उत्पत्तिनिरोधधर्मको बुद्धिवदित्यपरे"।

"महाभूतसंक्षोभजः शब्दोऽनाश्रित उत्पत्तिधर्मको निरोधधर्मक इत्यन्ये"।

(१) अत्र पृष्ठाङ्का विजयनगरसंस्कृतसीरीजमुद्रितन्यायदर्शनभाष्यपुस्तकानुसारेण बोध्याः।

१५९ पृ० "एवं हि पश्यन्तः प्रवदन्ति सांख्याः पुरुषस्यान्तःकरणभूता नित्या बुद्धिरिति"।

। १६३ पृ० "क्षणिकवाद्याह ।"

१७४ पृ० "भूतचैतनिक आह ।"

१८७ पृ० "अत्र नास्तिक आह ।"

२२१ पृ० "याज्ञवल्क्यो मैत्रेयीमिति होवाच । कात्यायन्या सहान्तं करवाणीति"।

२२२ पृ० "चातुराश्रम्यविधानाच्चेतिहासपुराणधर्मशास्त्रेष्वैकाश्रम्यानुपपत्तिः ।"

इत्याद्युक्तं तेनापि नार्वाचीनत्वं सिद्ध्यति ॥

तथाहि तद्भाष्ये २९ पृष्ठे(१) अनात्मवादिनः । नैरात्म्यवादस्तु मैत्रायण्युपनिषदि ७ । ८ "नैरात्म्यवादकुहकै"रिति । इदं चार्वाकमतमपि सम्भवति । यथा महाभारते शान्तिपर्वणि मोक्षधर्मे १८६ अध्याये ।

"यदि प्राणयते वायुर्वायुरेव विचेष्टते ।

श्वसित्याभाषते नित्यं तस्माज्जीवो निरर्थकः ॥" इत्यादि

३८ पृष्ठे "इति सांख्यानाम् । इति योगानाम् ।" योगस्य चर्चा कठोपनिषदि ६ वल्ल्याम् । श्वेताश्वतरोपनिषदि ६ अध्याये सांख्ययोगौ समुद्धृतौ । अपि च छान्दोग्योपनिषदि ६ प्रपाठके १७ खण्डे "तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच" श्रीकृष्णेन भगवद्गीतायाम् ।

"एकं सांख्यं च योगं च यः पश्यति स पश्यति।" इत्युक्तम् ।

३९ पृष्ठे "दशावयवानेके नैयायिका वाक्ये सञ्चक्षते ।

---

(१) अत्र पृष्ठाङ्का विजयनगरसंस्कृतसीरीजमुद्रितपुस्तकानुसारेण योज्याः ।

जिज्ञासा संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदास इति ।" नैयायिकानामनेकत्वं यथैवात्र प्रदर्शितमान्वीक्षिकीविद्यानिरूपणप्रकरणे । यथा महाभारते ।

"नैयायिकानां मुख्येन वरुणस्यात्मजेन च ।
पराजितो यत्र वन्दी विवादेन महात्मना ॥

इत्थं चान्वीक्षिक्यैक्येऽपि न नैयायिकैक्यम् अन्यथा इदानींतनेषु न्यायग्रन्थेषु "इति प्राञ्चः" "इति नव्याः" "इत्यस्मत्पितृचरणाः" "इत्यस्मद्गुरुचरणा" इति मतभेदानुपपत्तेः ।

केचित्तु दशावयववादित्वेन बौद्धं कल्पयन्ति तन्निर्मूलम् यदि स बौद्धो भवेत् तदा भाष्यकारैर्नैयायिकनाम्ना कदापि गृहीतो न भवेदपि तु नास्तिकादिनाम्नेति ।

६० पृष्ठे अथवास्त्यात्मेत्येके नास्त्यात्मेत्यपरे मन्यन्त इति । मैत्रायण्युपनिषदि ७ प्रपाठके ८ खण्डे ।

"नैरात्म्यवादकुहकैर्मिथ्यादृष्टान्तहेतुभिः ।
भ्राम्यल्लोको न जानाति वेदविद्यान्तरं तु यत् ॥"

१०४ पृष्ठे आकाशगुणः शब्दो विभुर्नित्योऽभिव्यक्तिधर्मक इत्येके ।

१०४ पृ० गन्धादिसहवृत्तिर्द्रव्येषु सन्निविष्टो गन्धादिवदवस्थितोऽभिव्यक्तिधर्मक इत्यपरे ।

१०४ पृ० आकाशगुणः शब्द उत्पत्तिनिरोधधर्मको बुद्धिवदित्यपरे ।

१०४ पृ० महाभूतसङ्क्षोभजः शब्दोऽनाश्रित उत्पत्तिधर्मको निरोधधर्मक इत्यन्ये । अत्र "अन्ये" इत्यनेनाधुनिका बौद्धं कल्पयन्ति तदनुयायिनस्तु खीष्टाब्दारम्भात् ४८७ वर्षेभ्यः पूर्वं बुद्धदेवस्थितिं निश्चिन्वन्तस्ततपूर्वं न्यायभाष्यमिदं नासीदेवे-

ति समुद्घोषयन्ति ।

तदसत् । वेदधर्मशास्त्रपुराणेषु आस्तिकनास्तिकभेदेनानेकानि मतानि निरूपितानि भाष्यकारेण बौद्धनामानुल्लिखितत्वात् तदिदं मतं कस्मादवगतं बौद्धस्यैवेति यदि च तत्तद्ग्रन्थसंवादात् तदाऽऽधुनिकमतसंवादादपि तत्पश्चाद्भावित्वात् अभिनवमेव वात्स्यायनीयं भाष्यं कथं न कल्प्येत ? । बौद्धग्रन्थेष्वपि हीनयानिकैरतीतानागता अनेके बुद्धा निरूपिता इति कस्य बुद्धस्येदं मतमित्यपि निरूपणीयमेव यदि च गौतमस्य शाक्यसिंहस्य बुद्धदेवस्य मतं तदपि निरूपणीयमेव कस्मिन् ग्रन्थे तत् प्रतिपादितमिति ? ।

ऐतिहासिकवृत्तशोधने निपुणमन्या आधुनिकास्तु ईस्वीयवर्षारम्भत् ४८७ वर्षेभ्यः पूर्वम् ।

"सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः ।
समन्तभद्रो भगवान् मारजिल्लोकजिज्जिनः ॥
षडभिज्ञो दशबलोऽद्वयवादी विनायकः ।
मुनीन्द्रः श्रीघनः शास्ता मुनिः शाक्यमुनिश्च सः ॥
स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः ।
गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः ॥

इत्यन्वर्थनामविशिष्टो बुद्धो निर्वाणं गत इति वदन्ति तत्र वक्ष्यमाणानि दुरुच्छेद्यानि वलवन्ति प्रमाणान्युपन्यस्तानि ।

"प्रोफेसर बुलरमहाशयाः (Bühler) तथा डाक्टर फ्लीट ( Fleet ) महाशयाः पाषाणस्तम्भे लिखितेऽशोकराजस्य शासने २५६ संख्यां दृष्ट्वा कल्पयन्ति बुद्धमरणाशोकजीवनसमययोरेतावद्वर्षपरिमितमन्तरम्"

"अपि च परमार्थनामकेन बौद्धेन वसुबन्धुचरितपुस्तकं

निर्मितं तत्र लिखितमस्ति बुद्धदेवनिर्वाणानन्तरं १००० वर्षेभ्यः पश्चात् स्थितौ "दृश्यपं" "विन्ध्यवस" नामकौ बौद्धौ। तावेतौ खीष्टाब्दारम्भात् परं पञ्चमशताब्द्यां वर्तमानाविति उपात्तसमय एव बुद्धनिर्वाणस्य।"

"अन्यच्च चीनदेशीयकांटननामके नगरे संख्यावोधकरेखाबिन्द्वादिवत्–चिह्नविशेषाङ्किनलेखाः ४८९ वर्षपर्यन्तं स्थापयन्ति स्मेति स्थितिः तत्र ९७५ चिह्नान्यासन् तत्र ४८९ संख्या न्यूनीकृता सती स एव निर्दिष्टसमयो बुद्धनिर्वाणस्य भवति।"

यद्येतादृशान्येव प्रमाणानि व्यक्ताव्यक्तसाधारणानि वस्तुतत्त्वनिर्णये प्रभवन्ति तदा किमपराद्धं वेदधर्मशास्त्रपुराणै(१)र्भारतरामायणादीतिहासैर्महापण्डितैः सहृदयैरवगम्यैरिति न बुद्ध्यामहे।

यदि च बुद्धात्परमेव सर्वमिति निर्णीयते तदा इसवीयवर्षारम्भात् ५२७ वर्षेभ्यः पूर्वं निर्वाणपदव्यां गतानां जैनचतुर्विंशतीर्थङ्करमहावीरस्वामिनां चतुर्णां वेदानां भारतरामायणादीनां मिथ्याशास्त्रत्वनिरुक्तिः(२) कुत्र तिष्ठेद्वेदादयो वा कुत्र तिष्ठेयुरिति ? ॥

१६३ पृ. "क्षणिकवाद्याह"। क्षणिकवादश्च बृहदारण्यकोपनिषदि ३ अध्याये २ ब्राह्मणे छान्दोग्ये ७ प्रपाठके ७। ८ खण्डयोः कठोपनिषदि ६ वल्ल्याम्।

१७४ पृ० "भूतचैतनिक आह"। भूतचैतनिकदेहात्मवा-

(१) यथा च पुराणानां सामञ्जस्यं तथाग्रे वक्ष्यते।

(२) अयमर्थो निपुणतरमधस्तादुपपादितमग्रे उपपादयिष्यते च इत्यास्तां तावदिति।

दनिरासश्च छान्दोग्ये ८ प्रपाठके ९–१२ खण्डेषु वर्तत इति।

अन्ये आधुनिकतार्किकास्तु स्वेन तर्केण तर्कयन्ति खलु हेमचन्द्रकृताभिधानचिन्तामणेर्मर्त्यकाण्डस्य ५१७ श्लोकस्य अर्द्धम् अर्द्धञ्च ५१८ श्लोकस्य

"वात्स्यायने मल्लनागः कौटिल्यश्चणकात्मजः।
द्रामिलः पक्षिलस्वामी विष्णुगुप्तोऽङ्गुलश्च सः॥"(१)

इति दृष्ट्वा उक्तवचनानुसारि यत्र कुत्रचिद्व्याख्यानमपि श्रुत्वा उक्तवचने चाणक्यस्याविकलं नाम हठात् सन्निवेश्य चाणक्यस्य विष्णुपुराण–वायुपुराण–मत्स्यपुराणाद्युक्तस्यापि चन्द्रगुप्तस्य राज्ञो मन्त्रिणः समयनिर्णायकं ग्रीक–चीन–देशीयानां कमपि लेखं वा शिलाशासनस्थं वा वक्ष्यमाणप्रकारकलेखं यत्र चाणक्यस्य चर्चापि नास्ति तमेव मूर्ध्नि संस्थाप्य समुद्घोषयन्ति तावन्न्यायदर्शनभाष्यं चाणक्यवात्स्यायनकृतं खीष्टाब्दारम्भात् पूर्वं ३२१ वर्षेभ्यः(२) पुरातनं कथमपि भवितुं

---

(१) अत्र श्लोके उक्तानि कानिचिन्नामान्येवासाधूनि। स च प्रमादो ग्रन्थकारस्य लेखकस्य वेति न बुध्यामहे। यथा वात्स्यायनीयकामसूत्रटीकायामारम्भे महापण्डितेन यशोधरेण "मल्लिनाग" इत्युक्तम्। मुद्राराक्षसनाटकटीकायां "कौटिल्यः कुटिलमतिश्चाणक्य" इत्युक्तम्। चाणक्यनीतावथ च मुद्राराक्षसे चाणक्य इति मुख्य तन्नाम प्रतिपदं गृह्यते। हेमचन्द्रेण कोशकृता तद् गृहीतमेव नास्ति। पुराणेतिहासादौ च चाणक्य एव चन्द्रगुप्तस्य मन्त्रीति। अभिधानचिन्तामणिटीकाकारेण केनचिज्जैनेन कौटिल्यशब्दार्थमजानता "कौटल्य" इति कृतं "कुटः मृत्पात्रं तत्र धान्यानि लाति आदत्ते संगृह्णातीति यावत् कुटलः तस्य भावः कौटल्य" (?) इति व्युत्पादितम्। "अंगुल" इत्यस्य स्थाने "अङ्गुल" इत्यपि कृतम्।

(२) आधुनिकेतिहासतत्त्वविदस्तु अयमेव समयश्चन्द्रगुप्त-

नार्हतीति ।

अत्र नैयायिका वदन्ति

पुरुषोत्तमदेवकृतत्रिकाण्डशेषकोशे(१) ब्रह्मवर्गे

"विष्णुगुप्तस्तु कौण्डिन्यश्चाणक्यो द्रामिलोंऽशुलः ।
वात्स्यायनो मल्लिनागपक्षिलस्वामिनावपि(२) ॥"

अपि च त्रिकाण्डशेषकोशारम्भ एव

"अलौकिकत्वादमरः स्वकोशे
न यानि नामानि समुल्लिलेख ।

---

राज्याभिषेकस्येति निर्णीतं सोऽपि परीक्षणीयोऽग्रे मयेति ।

(१) कोशकारेण वेद-धर्मशास्त्र-पुराणेषु न्यायदर्शनादिषु च ये शब्दा येषु अर्थेषु प्रयुक्ता नानास्थानेषु वितता एकत्र संकलय्य कोशे कथिता अत एव अमरसिंहः

"समाहृत्यान्यतन्त्राणि संक्षिप्तैः प्रतिसंस्कृतैः ।
सम्पूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम् ॥ २ ॥"

अमरानुयायी पुरुषोत्तमदेवोऽपि ।

"परिभाषादिकं सर्वमत्राप्यमरकोशवत् । "इत्युक्तवान्

अमरपरिशिष्टाख्योऽपि महान् कोशो ऽतीवोपयुक्तो वर्तते तद्दर्शनाच्च तत्परिशिष्टापेक्षा भवतीति ।

इत्थं च "पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥"

इतिवत् कोशानां नाज्ञासिद्धत्वं नाप्यैतिहासिकवृत्तक्रमव्यवस्थापकत्वम् । तथा च अनेकार्थध्वनिमञ्जर्याख्यकोशे २ हरिशब्दो विष्णु-सूर्य-वानरादीनां वाचकत्वेनैकत्र लिखितः न तस्माद्विष्णु-सूर्य-वानराणामैक्यं नाप्येकदेशैककालावस्थायित्वं इति सिद्धम् ।

(२) पाठोऽयं प्राचीने लिखिते पुस्तके वर्तते । मुद्रिते पुस्तके तु "द्रोमिणः" "मल्लिनाग" अत्र "मन्दनागः"इति दृश्यते । अत्र विसर्गः शोधकप्रमादाद्बोध्यः पक्षिलस्वामिनावपीति द्विवचनानुपपत्तेः ।

विलोक्य तैरप्यधुना प्रचार-
मयं प्रयत्नः पुरुषोत्तमस्य ॥"
"परिभाषादिकं सर्वमत्राप्यमरकोशवत् ।"

इति लिखितम् अमरकोशे तु "त्वन्ताथादि न पूर्वभाक्" इति लिखितम् । अत एव त्रिकाण्डशेषकोशटीकायां बुधमनोहरायां "विष्णुगुप्तस्तु कौण्डिन्यः कौटिल्यो वा चाणक्यो द्रामिलः अंगुलः इति पञ्चनामानि चाणक्यस्य । वात्स्यायनः मल्लिनागः पक्षिलस्वामी पक्षिलमुनिर्वा इति त्रीणि नामानि वात्स्यायनमुने"रिति व्याख्यातम्(१) । कलिकातानगरमुद्रिते अमर-त्रिकाण्डशेष-हारावली-मेदिनीतिकोशचतुष्टयपुस्तके(२) सूचीपत्रेऽपि अष्टौ नामानि न चाणक्यस्येति प्रदर्शितम् । एवं स्थिते चाणक्यो भिन्नो वात्स्यायनश्च भिन्न इति प्रतिभाति ।

यदि च अष्टौ नामानि वात्स्यायनस्यैव । पञ्च चाणक्यस्य त्रीणि वात्स्यायनस्येति तु टीकाकारसूचीपत्रकारयोः प्रमादः तदापि "मल्लिनागपक्षिलस्वामिनावपीत्यत्र" स-

(१) दृश्यते च न्यायवार्त्तिकतात्पर्यटीकायां सर्वदर्शनसङ्ग्रहे तार्किकरक्षाटीकायामपि पक्षिलस्वामी पक्षिलमुनिर्वा । यशोधरकृतकामसूत्रटीकायां मल्लिनाग इत्युक्तम् । न्यायग्रन्थेषु नैयायिकत्वेन वात्स्यायनं विहाय चाणक्योऽन्यो वा नाभिहितः इति त्रिकाण्डशेषटीकाकारस्य मतं नायुक्तमिति । *

(२) श्रीमदमरकृतकोशः पुरुषोत्तमकृतत्रिकाण्डशेषश्च ।
हारावल्यभिधानं मेदिनीकारस्य नानार्थः ।
नगरे कलिकाताख्ये कोलब्रुक्साहबाज्ञया ।
श्रीविद्याकरमिश्रेण कृतसूचीसमन्वितः ॥
वेदर्त्वष्टकलानाथसम्मिते विक्रमाब्दके ।
मुद्राक्षरेण यत्नेन चाबूरामेण लेखित ॥

मुच्चयार्थकेनापिशब्देन(१) मल्लिनागपक्षिलस्वामिनोः समुच्चयेन ग्रहणाद्व्यक्तिभेदः सिद्ध्यति वात्स्यायनशब्दवाच्यौ मल्लिनागपक्षिलस्वामिनावपि भवत इति यावत्। अतः विष्णुगुप्तादिनामविशिष्टश्चाणक्य एको वात्स्यायनः, मल्लिनागः पक्षिलस्वामी च भिन्नो भिन्नो वात्स्यायनः(२)। नात्र किमपि चित्रम् न वात्स्यायना एव भिन्ना अपि तु वत्सोऽपि भिन्नो भिन्नः। यथाह आश्वलायनश्रौतसूत्रे उत्तरषट्के ६ अध्याये(३) "जामदग्ना वत्सास्तेषां पञ्चार्षेयो भार्गवच्यावनाप्नवानौर्वजामदग्नेति ॥ ६ ॥ "द्विविधाः वत्साः जामदग्ना अजामदग्नाश्च। तत्र ये जामदग्नाः वत्साः वयमिति स्मरन्ति तेषां पञ्चार्षेयः प्रवरो भवति भार्गवच्यावनाप्नवानौर्वजामदग्नेति" इति तद्वृत्तिकृतः।

"अथ ह्यजामदग्नानां भार्गवच्यावनाप्नवानेति ॥ ७ ॥ "ये तु वयमजामदग्ना वत्सा इति स्मरन्ति तेषां त्र्यार्षेयः प्रवरो" भवति।

"द्विप्रकाराणां वत्सानां परस्परमविवाहः।" इति तद्वृत्तिकृतः।

पुरुषोत्तमदेवस्तु वेद–धर्मशास्त्र–पुराणादीनि सम्यगालोच्य "अलौकिकत्वादमरः स्वकोशे" इत्यादि उक्त्वा त्रिकाण्डशेषाभिधं कोशं रचितवान् इत्येतस्य प्रामाणिकत्वम्। हे-

(१) १।४।९६ पाणिनिसूत्रेण अपिशब्दः समुच्चयवाचकः।

(२) चाणक्य—विष्णुगुप्त—कौटिल्यादयो वात्स्यायनगोत्रजा इत्याश्वलायनीयश्रौतसूत्रे प्रवराध्याये।

(३) एशिआटिक्सोसाइटीबंगालद्वारा मुद्रिते पुस्तके ८७५ पृष्ठे द्रष्टव्यम्

मचन्द्रस्तु न जाने कस्मात् साङ्कर्यं विधाय अष्टौ नामानि वात्स्यायनस्येति सर्वं विप्लावितवान् इति तत्र मूलं मृग्यमेवेति वदन्ति ॥

अपरे तु यदाधुनिकतार्किकाः हेमचन्द्रोक्तेषु वात्स्यायनस्याष्टसु नामसु चाणक्यशब्दाभावेऽपि प्रसह्य चाणक्यं तेषु सन्निवेश्य ग्रीकदेशनिवासिनो मेगास्थिनीसस्य पुस्तके(१) निरूपितं भारतवर्षीयं कमपि "सेन्द्राकोत्तस" नामकं(२) तदानींतनं राजानं विज्ञाय "सेन्द्राकोत्तस"शब्देन चन्द्रगुप्तं परिकल्प्य चन्द्रगुप्तचाणक्ययोश्च मुद्राराक्षसादिभ्य एककालावस्थायित्वं ब्रुवन्तश्चन्द्रगुप्तस्य राज्याभिषेकसमयं खीष्टाब्दारम्भात् ३२१ वर्षेभ्यः पूर्वं निश्चिन्वन्तः तस्मिन्नेव समये वात्स्यायनीयं न्यायभाष्यं रचितमिति सिद्धान्तयन्ति तन्न सम्यक् ।

यतो वात्स्यायन इत्यनेनैव चणकात्मजात् चाणक्याद्भेदसिद्धिः न व्यक्तिश्यम् वत्सस्य गोत्रापत्यं वात्स्यः वत्स्यस्य युवा गोत्रापत्यं वा वात्स्यायनः(३) एवं सति वात्स्यायनः

(१) एन् सेंट इण्डिया (See Mc Crindle's Ancient India)

(२) Justini Hist Philipp. Lib XV. cap IV ) जस्टिन् महाशयास्तु "सेन्द्राकोमस" इति वदन्ति । Diodorus Siculus XVII 93 डियोडोरस, ( Quintus Curtius ) IX. 2 क्विंटसकार्टियस महाशयास्तु "जन्द्रमस" इति वदन्ति । Strabo XV I. 36 स्ट्रेबो महाशयास्तु "सेन्द्रकोतस" इति । Sir William Jones सर विलियम् जोन्स महाशयास्तु सेन्द्राकोतस चन्द्रगुप्तश्चैक एवेति ।

(३) गर्गादिभ्यो यञ् ४ अध्याये १ पादे १०५ पाणिनीयसूत्रेण जुगुप्सा–पूजयोर्यञ्विधानात् । अत्र गर्गादिगणे वत्सः पठितः चणकोऽपि पृथक् पठितोऽस्ति अतः पार्थक्यं निश्चितमेव अ-

चणकात्मजश्चाणक्यः कथमपि भवितुं नार्हति । यदि च वत्सगोत्रीयश्चाणक्य एव न्यायभाष्यकर्ता तर्हि वत्सपुत्रस्य वात्स्यस्य पुत्र एव कथं न सः अपि च गोतम-कणाद-कपिल-पतञ्जलिप्रभृतयोऽपि कथं स्वनामोल्लेखं तत्रतत्र कृतवन्तः कथं स्वगोत्राण्येव न लिखेयुरिति सम्प्रदायविरोधः । अपि च कोशकारेण विष्णुगुप्तादिषु नामसु सप्त व्यक्तिनामानि एकं नाम तु गोत्रस्य तदा कोशकारेण अन्येऽपि सर्वे वात्स्यायना ये वत्सगोत्राः गोत्रप्रवरग्रन्थे पठितास्ते कथं नोपात्तास्तस्मान्न्यायभाष्यकर्त्ता वात्स्यायनो व्यक्तिविशेष एवेति न तु चणकात्मजो नापि कोशोपात्ताः सर्वे शब्दा एकव्यक्तिवाचका इति । तस्माद् य एव वात्स्यायनः स एव पक्षिलस्वामी पक्षिलमुनिर्वेति(१) मन्तव्यम् । वाचस्पतिमिश्रादिभिस्तात्पर्यटीकादिग्रन्थेषूक्तत्वादिति । यथा कात्यायन एव पारस्काराचार्यो हिरण्यकेश एव सत्याषाढः कृष्णद्वैपायन एव वेदव्यास इत्यादय इत्याहुः ।

वस्तुतस्तु मेगास्थिनीसप्तकविषयेऽनेके वदन्ति यत् खलु तल्लिखितं संपूर्णं पुस्तकमेव नोपलब्धं केनापि इतस्ततः प्रकीर्णानि पत्राण्येवोपलब्धानि तेभ्य एकं पुस्तकं समाकलय्य भाषान्तरेष्वनूदितमिति(२) तत्र "सेन्द्राकोत्त-

न्यथा व्याघ्रपात्—प्राचीनयोग-पुलस्ति—अग्निवेश—शङ्ख-धनञ्जय-विश्वावसु—मनु—कश्च—अनुह्रद-याज्ञवल्क्य—रहूगण—मुद्गल-जमदग्नि—पराशरादीनामपिपाठात् सर्वेषामैक्यापत्तेः ।

(१) योऽक्षपादमृषिं न्यायः प्रत्यभाद्वदतां वरम् ।
तस्य वात्स्यायन इद भाष्यजातमवर्तयत् ॥ इति न्यायभाष्यान्ते वर्तते ।

(२) बङ्किमचन्द्रचट्टोपाध्यायेर ग्रन्थावली, कृष्णचरित्र १३१४

स" "सेन्द्राकोतस" "जन्द्रमस" शब्देन चन्द्रगुप्तस्य ग्रहणमाधुनिकतार्किकाणामेव बुद्धिकौशलं तत्सन्तानानां शिष्याणामेवाहो पाण्डित्यमहो कौशलमिति घण्टाघोषपूर्वकं तत्प्रशंसनं न तु तत्त्वविदाम् यतो "मात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः" "एक विन्दु के लघु भये कुन्ती कुत्ती होइ" विन्द्वाकारस्य नकारावयवस्य स्पष्टत्वे "कुन्ती" इति पठ्यते तस्यैवास्पष्टत्वे "कुत्ती" (शुनी) इति पठ्यते । उच्चारणापाटवे तु शकलं सकलं सकृच्छकृद्भवतीति ।

अत्र केचित् उच्चारणापाटवेन चन्द्रगुप्तस्यैव नाम सेन्द्राकोत्तसादिशब्देभ्य उपात्तमिति समादधति अस्तु तदेव परं तु यत्र भूमेश्चित्रे भारतवर्षस्य चतुष्कोणत्वं तेन निरूपितमपि च भारतवर्षीयमनुष्याणां जातिरूपेण सप्तधा भेदं प्रदर्श्य "एकजातीया मनुष्या एतादृशा वर्तन्ते येषां मुखं नास्त्येव ते खलु धूममाघ्राय फलस्य सौरभं गन्धमाघ्राय जीवन्ती"त्यादि प्रलपितम् अन्येषां मनुष्याणां प्रत्येकहस्तेषु अष्टावष्टावङ्गुल्यो भवन्त्येवमनेके विषया निरूपिताः एवं च यत्र सेन्द्राकोत्तसराजा निरूपितस्तत्र चाणक्यस्य चर्चापि नास्ति तदपि उच्चारणापाटवेन अनु-

---

यङ्गलासन् मुद्रित "मिगास्थेनिस् खीष्टपूर्व ३ वा चतुर्थशताब्दीर लोक । मिगास्थेनिसेर भारतसम्बन्धीय ग्रन्थ विद्यमान नाई, केवल अन्यान्य ग्रन्थकारं ताहा हईते ये सकल अंश ताहादिगेर निज-निज पुस्तके उद्धृतकरिया छिलेन ताहाई संकलन पूर्वक डाक्तर श्वान्वेक नामक एक जन आधुनिक पण्डित एकखानि ग्रन्थ प्रस्तुत करियाछेन ताहाई एखन मेगास्थेनिसकृत भारतवृत्तान्त बलिया प्रचलित ।"

मानेन बुद्धपादेन वेति केनचिदेव समञ्जसनीयं न तत्त्वविद्भिरिति ।

मित्रगोष्ठीमासिकसंस्कृतपत्रिकायां चतुर्थवर्षीयषष्ठसप्तमसंख्ययोः ( १८२९ शाकाब्दीयाश्विनकार्त्तिकमासयोः ) १५६—१५७ पृष्ठे उद्धृतोऽस्ति । "ग्रीसदेशीयमेगास्थिनीसनामकराजदूतेन स्वनिर्मित–इण्डिकानामकग्रन्थे भारतदेशस्याकारश्चतुष्कोणक्षेत्रसमानो वर्णितः । अन्येन ग्रीसदेशीयेन "टलेमी"नामकेन भारतदेशीयमानचित्रं–( map ) मुद्रितं तत्रापि भारतदेशश्चतुष्कोण एव वर्णित" । इति ।

ज्यौतिषसिद्धान्तेषु भूगोलवर्णनप्रस्तावे भारतभूमेराकारस्त्रिकोणकल्प एव यथाह सिद्धान्तशिरोमणौ गोलाध्याये भास्कराचार्यः

लङ्कादेशाद्धिमगिरिरुदग्घेमकूटोऽथ तस्मात्
तस्माच्चान्यो निषध इति ते सिन्धुपर्यन्तदैर्घ्याः ।
एवं सिद्धादुदगपि पुराच्छृङ्गवच्छुक्लनीलाः
वर्षाण्येषां जगुरिह बुधा अन्तरे द्रोणिदेशान् ॥ २६ ॥

आधुनिकैरपि भूमेश्चित्रेषु त्रिकोणकल्प एव निरूपितस्तदा ग्रीसदेशीयानामुक्तनिरूपणं तु सर्वथैवाप्रामाणिकमेव । तस्मान्मेगास्थिनीसनामकस्य तत्सदृशस्य वा लेखोऽश्रद्धेयः ।

अपि च साङ्गोपाङ्गं विना चन्द्रगुप्तादिनाममात्रेणैव समयनिर्णये(१) सति राजतरङ्गिणीग्रन्थे १ तरङ्गे काश्मीरदेशे रा-

(१) यदि च प्राचीनपाषाणादिपाठकबलेन सेन्द्राकोचसशब्देन चन्द्रगुप्त एव भवेत् तत्सम्बन्धबलेन तन्मन्त्री चाणक्योऽपि तत्राऽगच्छेत् पूर्वोक्तहेमचन्द्रकोशबलेन स एव विष्णुगुप्तः स एव वात्स्यायनः स एव न्यायभाष्यकर्ता भवेत् तदा ५२० शाका-

वणकुम्भकर्णविभीषणनामका राजानः सञ्जाता इति लेखदर्शनात् रामलक्ष्मणादीनामाधुनिकत्वापत्तेः एवं महाभारतेऽनुशासनपर्वणि ७० अध्याये नृगोपाख्यानं श्रीमद्भागवतेऽपि नृगोपाख्यानं वर्तते ।

वाचस्पतिमिश्रेण भामत्यामन्ते

"नरेश्वरा यच्चरितानुकार-
मिच्छन्ति कर्त्तुं न च पारयन्ति ।
तस्मिन् महीपे महनीयकीर्तौ
श्रीमन्नृगेऽकारि मया निबन्धः ॥"

इत्युक्तत्वान्महाभारताद् भागवताच्च पूर्वं वाचस्पतिमिश्रस्य स्थित्यापत्तेः ।

अन्यच्च नृसिंहनामसहस्र-रामनामसहस्र-कृष्णनामसहस्रादिपुस्तकदर्शनाद्विज्ञातं भवति यानि नामानि नृसिंहस्य तान्येव बाहुल्येन रामस्य कृष्णस्य तथा बहूनां मनुष्याणामपीत्यमाधारणहेतून् विना नाममात्रादेव कालनिर्णये रामादीनामप्याधुनिकत्वमाधुनिकमनुष्याणामपि त्रेतायुगावस्थायित्वं स्यादिति महान् विप्लवः ।

यदि च सेन्द्राकोत्तमशब्देन चन्द्रगुप्त एव सिद्ध्येत् तत्सम्बन्धबलेन तन्मन्त्री चाणक्योऽपि तदानीं प्रसह्य तत्र प्रविशेत् हेमचन्द्रकोशप्रामाण्यात् किन्तु तेन चाणक्य एव वात्स्यायनः

ऽब्दात्पञ्चमना त्रिंशद्वर्षवयस्केन ब्रह्मगुप्तेन ब्रह्मस्फुटसिद्धान्तो विरचितः अस्य पिता जिष्णुगुप्तः पितामहश्च विष्णुगुप्तः अयं च पुत्रपरम्परया सुप्रसिद्धग्रन्थकारो महापण्डितः अयमेव न्यायभाष्यकर्ता कथं न कल्प्येत इति न बुध्यामहे । ब्रह्मस्फुटसिद्धान्तश्च महामहोपाध्यायश्रीसुधाकरद्विवेदिना मुद्रापितः ।

मल्लनागः चणकात्मजः द्रामिलः पक्षिलस्वामी विष्णुगुप्तः अङ्गुलः स एव कौटिल्यश्च एकस्यैव पुरुषस्य सर्वाणि नामानि तदा कौटिल्यप्रणीतस्यार्थशास्त्रस्य जैनचतुर्विंशतीर्थङ्करेण महावीरस्वामिना जैनसिद्धान्तेषु मिथ्याशास्त्रत्वेन(१) निरूपितत्वात् महावीरस्वामिनश्च विक्रमीयवर्षारम्भात् ४७० वर्षेभ्यः पूर्वं खीष्टाब्दारम्भात् ५२७ वर्षेभ्यः पूर्वं निर्वा-

---

(१) श्वेताम्बरजैनास्त्वेवं वदन्ति २४ तीर्थङ्करो महावीरस्वामी स्वशिष्याय गौतमाय इन्द्रभूतये चतुर्दशपूर्वसञ्ज्ञकान् एकादशाङ्गसञ्ज्ञकान् सिद्धान्तानुपादिदेश ते चैकादशाङ्गसञ्ज्ञका ४२ भागेषु विभक्ता यथा ११ अङ्गानि १ आचाराङ्गम् २ सूत्रकृदङ्गम् ३ स्थानाङ्गम् ४ समवायाङ्गम् ५ भगवतीसूत्रमित्यादिना तत्र ४० नन्दिसूत्रम् ४१ अनुयोगद्वारसूत्रमस्ति । तत्रानुयोगद्वारसूत्रे "ज इम अन्नाणीहिं मिच्छादिट्ठीहिं सच्छन्दबुद्धिमइ विगप्पियं तं जहा भारहं रामायणं भीमासुरुक्कं कोडल्लयं घोडयमुहं सगडभद्दियाउ कप्पासियं नागसुहुमं कणगसत्तरी वेसियं वइसेसियं बुद्धसासणं काविलं लोगायतं सट्ठितंतं माढरपुराणं वागरणनाडगाइं अहवा बावत्तरि कलाओ चत्तारिय वेया संगोवंगा सेत्तं लोइयं नो आगमओ भावसुयम्"।

अत्र नन्दीसूत्रे पाठान्तराणि (कोडल्लय) कोडिल्लियं अपि च 'भागवयं पायञ्जली पुस्सदेवयं लेहं गणिअं सउणरुअं, एतावान् पाठोऽधिकः ।

भगवतीसूत्रे च २।१।२० 'रिउवेद जजुवेद सामवेद अथव्वणवेद इतिहासपञ्चमाण निघण्टुछट्ठान चउण्हं वदाण संगोवंगाण सरहस्साण सारए वारए धारए पारए सडंगवी सट्ठितंतविसारए संखाणे सिक्खा कप्पे वागरणे छन्दे निरुत्ते जोतिसामयने अण्णेसुय बहूसु बम्भण्णएसु परिव्वायएसु नयेसु परिनिट्ठिए यावि होत्था" इति भगवतीसूत्रविषयकनिबन्धे वेबरमहाशयस्य २ खण्ड २४८ पृष्ठे द्रष्टव्यम् ।

णपदं गतत्वात्(१) ततोऽपि पूर्वं स्थितः कौटिल्यः मेगास्थिनीसोक्तसेन्द्राकोत्तससमये खीष्टाब्दारम्भात् पूर्वं ३२१ वर्षेऽपि स्थित इत्यस्य सामञ्जस्यमाधुनिकतार्किकैरेव कर्तव्यं न तत्त्वविद्भिरिति ।

मम तु मते भारतवर्षस्य चतुष्कोणाकारत्वनिरूपणवत् तत्रत्यमनुष्याणां मुखहीनत्वनिरूपणादिवञ्च सेन्द्राकोत्तमशब्देन कश्चिदन्य एव राजा भवेत् चन्द्रगुप्तस्याग्रहे तु कश्चिदन्यश्चन्द्रगुप्तः ? तरङ्गराजतरङ्गिण्यादिनिरूपितकाश्मीरराजरावणादिवदिति न तु विष्णुपुराणाद्युक्तश्चन्द्रगुप्तश्चाणक्यसचिव इति प्रतिभाति ।

एवं सति विक्रमादित्यवर्षारम्भात् ४७० वर्षेभ्यः पूर्वं निर्वाणत्वं गतस्य महावीरस्वामिनः २४ तीर्थङ्करस्य जीवनसमयात् पूर्वं शास्त्रत्वेन वर्तमानस्य कौटिल्यशास्त्रस्य तत्कर्तुः कौटिल्यस्य बहुपूर्वकालावस्थायित्वं सिद्ध्यति ।

अत एव भागवते १२ । १ । ७

"नव नन्दान् द्विजः कश्चित्(२) प्रपन्नानुद्धरिष्यति ।
तेषामभावे जगतीं मौर्या(३) भोक्ष्यन्ति वै कलौ ॥

(१) आपामरप्रसिद्धोऽयं विषयो जैनपट्टावल्यां द्रष्टव्यः ।

(२) द्विजः कश्चित् चाणक्य इति श्रीधरस्वामी भागवतटीकायाम् ।

(३) भारतवर्षीयेतिहासपुस्तकानि महाभारतादीनि महापुराणानि विष्णु—मत्स्य—वायुपुराणादीनि च सर्वाणि मुराया राजपत्न्या अपत्यानि मौर्या इति वदन्ति व्युत्पत्तिवलल्भ्यानि मौर्या इति नामान्यन्वर्थान्यपि भवन्ति । परं तु रघुवंशे "नवे तस्मिन् महीपाले सर्वं नवमिवाभवत्" अपि च लौकिकाभाणकेऽपि "कवयः किं न कल्पन्ते किं न भक्षन्ति वायसाः" इदानीं

स एव चन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति ॥" इति ।
स्कन्दपुराणेऽपि ।

"ततोऽपि द्विसहस्रेषु दशाधिकशतत्रये ।
भविष्यं नन्दराज्यं च चाणक्यो यान् हनिष्यति ॥"

इत्युक्त्या अस्मिन् १९७२ विक्रमाब्दे १८३७ शाकाब्दे २७०६ सौरवर्षेभ्यः पूर्वं चाणक्यस्य स्थितिरासीदिति निष्पन्नं भवति ।

एवं स्थिते शिलादिशासनस्थानां सन्देहपूर्णानां जीर्णत्वाद्विलुप्तकल्पाक्षराणामर्थानुसन्धानेन संयोजितवर्णानां वाक्यानामेकैकप्रकारेणान्येनान्यप्रकारेण(१)ऽनुमानेनार्थानुसन्धानेन पाठकानां ख्रीष्टपूर्वे चतुर्थशताब्धां चाणक्यस्थितिस्थापकानां कुत्र स्थितिर्भविष्यतीति आधुनिकतार्किकैरेव समञ्जसनीयम् ।

यदि चाणक्यश्चेदर्वाचीनस्तदा विष्णुपुराणे वायुपुराणे मत्स्यपुराणे च चाणक्यस्य कथाया निरूपणात् विष्णुपुराणादिकर्त्ता द्वापरयुगे वर्तमानो वेदव्यासः कुत्र तिष्ठेत् तानि पुराणा-

---

श्रूयते पारशीकदेशे मुरानामिका काचिन्नगरी तदुत्पन्नो मौर्यश्चन्द्रगुप्तः पारशीक इति । "किं किं न साधयति कल्पलतेव विद्या ॥"

(१) यथा दिल्लीनगरस्थस्तम्भस्थलेख कोलब्रुक्महाशयेन एकेन प्रकारेण फ्यानिङ्ह्ममहाशयेनान्येन प्रकारेण पठं वाराणसीस्थराजकीयपाठालये वर्तमाने पाषाणस्तम्भे लिखितं पद्यं पठित्वा केचित् युधिष्ठिरस्य स्तम्भोऽयमिति कल्पयन्ति । अन्ये तु तत्र 'पाल' शब्दपाठात् पालवंशीयस्य कस्यचिद्राज्ञः । अपरे तु गुप्ताक्षरेषु लेखात् गुप्तवंशस्येत्यादयः कल्पनाविशेषाः ।

आचार्यश्रीसत्यव्रतसामश्रमिणस्तु ताम्रशासनमेव पठित्वा वेदभाष्यकर्त्तुर्महीधरस्य पुरातनत्वं वदन्तीति प्रतिपादितमधस्तात् ।

न्यपि कुत्र तिष्ठेयुरिति । तथाहि विष्णुपुराणे ३ अंशे ३ । ४ । ५ । ६ अध्यायेषु

"द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने ।
वेदमेकं स बहुधा कुरुते जगतो हितः ॥"
"यया स कुरुते तन्वा वेदमेकं पृथक् प्रभुः ।
वेदव्यासाभिधानात् तु सा मूर्त्तिर्मधुविद्विषः ॥"
"अष्टाविंशतिकृत्वो वै वेदा व्यस्ता महर्षिभिः ।
वैवस्वतेन्तरे तस्मिन् द्वापरेषु पुनः पुनः ॥"
"चतुर्धा यैः कृतो वेदो द्वापरेषु पुनः पुनः ॥
ऋग्वेदश्रावकं पैलं जग्राह स महामुनिः ।
वैशम्पायननामानं यजुर्वेदस्य चाग्रहीत् ॥
जैमिनिं सामवेदस्य तथैवाथर्ववेदवित् ।
सुमन्तुस्तस्य शिष्योऽभूद्वेदव्यासस्य धीमतः ॥
रोमहर्षणनामानं महाबुद्धिं महामुनिम् ।
सूतं जग्राह शिष्यं स इतिहासपुराणयोः ॥"
"कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
कोन्यो हि भुवि मैत्रेय महाभारतकृद्भवेत् ॥"
"आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः ।
पुराणसंहितां चक्रे पुराणार्थविशारदः ॥
आद्यं सर्वपुराणानां पुराणं ब्राह्ममुच्यते ।
अष्टादशपुराणानि पुराणज्ञाः प्रचक्षते ॥
ब्राह्मं पाद्मं वैष्णवं च शैवं(१) भागवतं तथा ।

---

(१) मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम् ।
अनापलिङ्गकूस्कानि पुराणानि पृथक् पृथक् ॥
इति देवीभागवते । अत्र मद्वयेन मत्स्यपुराणम् मार्कण्डे-

अथान्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ॥
आग्नेयमष्टमं चैव भविष्यं नवमं तथा ।
दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम् ॥
वाराहं द्वादशं चैव स्कान्दं चात्र त्रयोदशम् ।
चतुर्दशं वामनं च कौर्मं पञ्चदशं स्मृतम् ॥
मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम् ।
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ॥
सर्वेष्वेतेषु कथ्यन्ते वंशानुचरितं च यत् ।" इति

इत्थमष्टादशविद्या वेदाना शाखाभेदाश्च तत्संख्या तत्पाठकानां महर्षीणां नामानि च ३–६ अध्यायेषु निरूपितानि ।

एवं ४ अंशे ४ । ५ अध्याययोः सूर्यवंशकथनप्रसङ्गेन रामायणकथां ६–२० अध्यायेषु सोमवंशकथामुपक्रम्य यदुवंशकथाप्रसङ्गे कृष्णावतारकथां भारतकथां च संक्षिप्य मूलकालिकत्वेन वर्तमानत्वेन वा निरूपितवान् । ततश्च २१–२४ अध्यायेषु कलियुगे भविष्यत्त्वेन च राजवंशा निरूपिता यथा

पुराण च गृह्यन । मत्स्येन भागवत भविष्य च । त्रयेण ब्रह्मपुराण ब्रह्मवैवर्तं ब्रह्माण्ड च । वचतुष्टयन विष्णुपुराणं वायुपुराण वाराहपुराण वामनपुराण च । अ–ना–प–लि–ग–कू–स्का–नोत्पन्न आग्निपुराण नारदपुराण पद्मपुराण लिङ्गपुराण गरुडपुराण कूर्मपुराण स्कन्दपुराण च । एषु शिवपुराणानुक्त्या वायुरूपेण शिवेन प्रोक्तत्वाच्छैवापरनामधेय वायवीय पुराणमिति तत्र तत्र लेखदर्शना द्विरोधपरिहारेऽपि पुराणत्रय तु जातमेव । अत एव वृहन्नारदपञ्चरात्रे पुराणसमन्वये षड्विंशतिमहापुराणानीति प्रदर्श्य कल्पभेदेन एकस्मिन् कल्पे एतानि अन्यस्मिन् कल्पे कानिचिद्भिन्नानि परन्तु षड्विंशतेर्नाधिकानीति निरूपितम् । तत. परम ष्टादशोपपुराणानि अष्टादशोपोपपुराणानि अष्टादशेतिहासाश्च वर्तन्ते इत्यल पल्लवितेन ।

"अर्जुनस्याप्युलूप्यां नागकन्यायामिरावान् नाम पुत्रोऽभूत् । मणिपूरपतिपुत्र्यां च पुत्रिकाधर्मेण बभ्रुवाहनं नाम पुत्रमर्जुनोऽजीजनत् । सुभद्रायां चार्भकत्वेऽपि योसावतिबलपराक्रमः समस्तारातिरथविजेता सोऽभिमन्युरजायत । अभिमन्योरुत्तरायां परिक्षीणेषु कुरुषु अश्वत्थामप्रयुक्तब्रह्मास्त्रेण गर्भ एव भस्मीकृतो भगवतः सकलसुरासुरवन्दितचरणयुगलस्यात्मेच्छाकारणमानुषरूपधारिणोनुभावात् पुनर्जीवितमवाप्य परिक्षित् जज्ञे । योऽयं साम्प्रतमेतद् भूमण्डलमखण्डितायतिधर्मेण पालयतीति ।" ततः परम्

"पराशर उवाच । अतः परं भविष्यानहं भूमिपालान् कीर्तयिष्ये योऽयं साम्प्रतमवनीपतिः परिक्षित् तस्यापि जनमेजयश्रुतसेनोग्रसेनभीमसेनाः पुत्राश्चत्वारो भविष्यन्ति ।" इत्युपक्रम्य

"ब्रह्मक्षत्रस्य यो योनिर्वंशो राजर्षिसत्कृतः ।
क्षेमकं प्राप्य राजानं स संस्थां प्राप्स्यते कलौ" ॥ इत्युक्तम्

ततः "मागधानां बार्हद्रथानां भविष्याणामनुक्रमं कथयामि । अत्र हि वंशे महाबला जरासन्धप्रधाना बभूवुः । जरासन्धसुताद् सहदेवात् सोमापिस्तस्याच्छ्रुतवान् " इत्युपक्रम्य "तस्यापि रिपुञ्जयः पुत्र इत्येते बार्हद्रथा भूपतयो वर्षसहस्रमेकं भविष्यन्ति । योयं रिपुञ्जयो नाम बार्हद्रथोऽन्त्यस्तस्य सुनिको नामामात्यो भविष्यति । स चैनं स्वामिनं हत्वा स्वपुत्रं प्रद्योतनामानमभिषेक्ष्यति तस्यापि पालकनामा पुत्रो भविता ततश्च विशाखयूपस्तत्पुत्रो जनकस्तस्य च नन्दिवर्धन इत्येतेऽष्टात्रिंशदुत्तरमब्दशतं पञ्च प्रद्योताः (प्रद्योतनामानः) पृथिवीं भोक्ष्यन्ति । ततश्च शिशु-

नागस्तत्पुत्रश्च काकवर्णो भविता तत्पुत्रः क्षेमधर्मा तस्यापि सतौजास्तत्पुत्रो बिम्बिसारस्ततश्चाजातशत्रुस्तस्माच्च दर्भको दर्भकाच्चोदयनस्तस्मादपि नन्दिवर्धनस्ततो महानन्दी इत्येते शैशुनागा दशभूमिपालास्त्रीणि वर्षशतानि द्विषष्ट्यधिकानि भविष्यन्ति । महानन्दिसुतः शूद्रागर्भोद्भवोऽतिलुब्धो महापद्मो नन्दः परशुराम इवापरोऽखिलक्षत्रान्तकारी भविता । ततः प्रभृति शूद्राः भूमिपाला भविष्यन्ति । स चैकच्छत्रामनुल्लङ्घितशासनो महापद्मः पृथिवीं भोक्ष्यति । तस्याप्यष्टौ सुताः सुमहल्याद्या भवितारः तस्य महापद्मस्यानु पृथिवीं भोक्ष्यन्ति । महापद्मस्तत्पुत्राश्च एकं वर्षशतमवनीपतयो भविष्यन्ति । नवैव तान् नन्दान् कौटिल्यो ब्राह्मणः समुद्धरिष्यति । तेषामभावे मौर्याश्च पृथिवीं भोक्ष्यन्ति कौटिल्य एव चन्द्रगुप्तं राज्येऽभिषेक्ष्यति ।

तस्यापि पुत्रो बिन्दुसारो भविष्यति तस्याप्यशोकवर्द्धनस्ततः सुयशास्ततो दशरथस्ततः सङ्गतस्ततः शालिशूकस्तस्मात् सोमशर्मा तस्माच्छतधन्वा तस्य तु बृहद्रथनामा भविता । एवं मौर्या दश भूपतयो भविष्यन्ति अब्दशतं सप्तत्रिंशदुत्तरं तेषामन्ते पृथिवीं शूद्रा भोक्ष्यन्ती”त्यादि निरूपितम् एवमेव वायुपुराणे उत्तरार्द्धे(१) ३७ अध्याये निरूपितम्(२) ।

(१) मुद्रितं तु वायुपुराणं पूर्वार्द्धमेव अस्योत्तरार्द्धं तु रेवाखण्डात्मक श्लोकद्वादशसाहस्र्यात्मकं वर्तते तेन सह वायुपुराणस्य २४००० संख्या भवति । केचित्तु प्रदर्शितशिवपुराणात्मकत्वमपि विहाय कल्पितपुस्तकं ब्रह्माण्डपुराणत्वेन वदन्ति तदसत् ब्रह्माण्डपुराणस्य १२००० श्लोकात्मकस्य लिखितस्य पुस्तकस्य वाराणसीस्थराजकीयसंस्कृतपाठशालायामप्युपलभ्यमानत्वात् ।

(२) सूत उवाच ।

यथा मे कीर्तितं सर्वं व्यासेनाद्भुतकर्मणा ।
माद्य कलियुगं चैव तथा मन्वन्तराणि तु ॥
अनागतानि सर्वाणि ब्रुवतो मे निबोधत ।
अत ऊर्ध्वं प्रवक्ष्यामि भविष्यन्ति नृपाश्च ये ॥" इत्युपक्रम्य

अधिसामकृष्णनामक राजानमारभ्य क्षेमकान्त पञ्चविंशतिराजानो भविष्या. । ततश्च बृहद्रथमारभ्य पुनरपि सञ्जयस्तत्पुत्र. शाक्य तत्पुत्र. शुद्धोदन इत्यादि. । ततश्च मागधा जरासन्धप्रभृतय ३२ राजान तेषां प्राधान्येन नामानि तथाहि जरासन्धस्य पुत्र सहदेव सहदेवस्य पुत्र. तोमापि ५८ वर्षाणि श्रुतश्रवा ६४ वर्षाणि अयुतायु २६ वर्षाणि निरामित्रो १०० सुकृत ५६ वर्षाणि बृहत्कर्मा सेनाजित २३ श्रुतञ्जयस्तु ४० महाबाहु महाबुद्धि महाभीमपराक्रमश्च ३५ शुचि ५८ क्षेम २८ सुव्रत सुयतो वा ६४ धर्मनेत्रो ५ नृपति ५८ पुन सुव्रत ३८ दृढसेन ५८ सुमति ३३ सुबल २२ सुनेत्र ४० सत्यजित् ८३ वीरजित् ३५ अरिञ्जय ५० एते राजानो भविष्यन्ति वर्षसङ्ख्याना योग कृते ९७४ वर्षाणि तत्र जरासन्धस्य सहदेवस्य च वर्षाणि नोल्लिखितानि तत्संयोजने १००० सम्भवन्ति । तत· पर पञ्च प्रद्योता भविष्यन्ति तथाहि मुनिक २३ वर्षाणि तत. पालक २४ विशाखयूप ४० अजको जनको वा ३१ नन्दिवर्द्धन २० एतेषा वर्षाणा संयोजने १३८ वर्षाणि भवन्ति । तत पर दश शैशुनागा भूपतयो भविष्यन्ति तथाहि शिशुनाग ४० वर्षाणि काकवर्ण शुकवर्णो वा ३६ क्षेमवर्मा २० अजातशत्रु २५ क्षतौजा वा क्षत्रौजा ४० विविसारो विम्बिसारो वा २८ दर्शको दर्भको वा २५ उदयो वा उदयन ३३ नन्दिवर्द्धन ४२ महानन्दी ४३ एतेषां योगे कृते ३३२ वर्षाणि भवन्ति । यत्र शिशुनागजन्मारभ्य गणनया ३६२ वर्षाणि सम्भवन्ति शैशुनागसमय एव विंशतिराजानो भविष्यन्ति । ततो महानन्दिसुनादयोऽपि वर्षशत १०० भविष्यन्ति । तान् समुद्धृत्य काटिल्यो ब्राह्मणश्चन्द्रगुप्त नृप राज्येऽभिषेक्ष्यति स च २४ वर्षाणि भोक्ष्यति । ततो भद्रसारो विन्दुसारो वा २५ वर्षाणि

आधुनिकतार्किकास्तु आधुनिकीं लोकयात्रामुदाहृत्य तावद् भविष्यद्वृत्तं केनाप्यवगन्तुं न शक्यत इति वदन्तः पुराणेषु च कथाभागं दृष्ट्वा तदुक्तपदार्थानां तत्पश्चात्कालभावित्वं निरूपयन्ति । तन्न सङ्गच्छते यतः पुराणेषु भूतकालिकीं कथां भूतत्वेन वर्तमानकालिकीं कथां वर्तमानत्वेन भविष्यत्कालिकं वृत्तं भविष्यत्त्वेन सुस्पष्टतया वर्णितम् । यदि सर्वं भूतकालिकमेव ततः परं पुराणादिनिर्माणं जातमिति तदा कलौ क्षीणे सन्ध्याशिष्टे कल्क्यवतारो भविष्यतीत्युक्त्या(१) तस्यापि भूतत्वापत्तेः । अन्येषामपि वर्तमानानां कलिधर्माणां येषां वर्षाणां पञ्च-

---

सतहनस्यापि पुत्राऽशोकवर्द्धनः २६ वर्षाणि राज्यं भोक्ष्यतीत्यादयोऽनेके राजानो निरूपिताः ।

( १ ) मत्स्यपुराणे ४८ अध्याये ।

" चतुर्विंशे युगे रामो वसिष्ठेन पुरोधसा ।
सप्तमे रावणस्यार्थे जज्ञे दशरथात्मजः ॥
अष्टमे द्वापरे विष्णुरष्टाविंशे पराशरात् ।
वेदव्यासस्ततो जज्ञे जातूकर्ण्यपुरःसरः ॥
कर्तुं धर्मव्यवस्थानमसुराणां प्रणाशनम् ।
बुद्धो नवमके यज्ञे तपसा पुष्करेक्षणः ॥
तस्मिन्नेव युगे क्षीणे सन्ध्याशिष्टे भविष्यति ।
कल्की विष्णुर्यथा नाम पाराशर्यपुरःसरः ॥"

इत्युपक्रम्य कालधर्माः संक्षेपेण निरूपिताः । निरुक्ते पुराणे ५२ अध्याये अष्टादशपुराणानां सारांशाः श्लोकसंख्या दानमाहात्म्यं द्वापरे द्वापरे वेदव्यासेन पुराणानां समुद्धरणं च सङ्क्षेपतया निरूपितम् । अत्राध्यायादिनिदर्शनं वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तकानुसारेण बोध्यम् ।

विष्णुपुराणे ३ अंशे २ अध्याये ।

प्रोक्तान्येतानि भवता सप्तमन्वन्तराणि वै ।
भविष्याण्यपि विप्रर्षे समाख्यातुं त्वमर्हसि ॥ १ ॥

शत्याः पूर्वं लिखितेषु पुस्तकेषु लेखोऽस्ति तेषां तथा भविष्य-स्सूर्यचन्द्रोपरागादीनामपि भूतकालिकत्वापत्तेश्च । अत एव गङ्गामाहात्म्यमधिकृत्य तदानीं गङ्गाया असत्त्वेऽपि तच्छ-ङ्कासमाधिप्रसङ्गे स्कन्दपुराणीयकाशीखण्डे उक्तम् ॥

पुराणसंहिता तात ब्रूते त्रैकालिकीं कथाम् ।

इत्यादि सङ्गच्छते । वस्तुतस्तु वेदव्यासेन गुरुपरम्परया पुराणानि प्राप्तानि तथा स्वशिष्याय प्रतिपादितानि न तु निर्मितानीति(१) ॥

---

(१) वायुपुराणे उत्तरार्द्धे ४१ अध्याये ।

ब्रह्मा ददौ शास्त्रमिदं पुराणं मातरिश्वने ॥ ५८ ॥
तस्माच्चोशनसा प्राप्तं तस्माच्चापि बृहस्पतिः ।
बृहस्पतिस्तु प्रोवाच सवित्रे तदनन्तरम् ॥ ५९ ॥
सविता मृत्यवे प्राह मृत्युश्चेन्द्राय वै पुनः ।
इन्द्रश्चापि वसिष्ठाय सोऽपि सारस्वताय च ॥ ६० ॥
सारस्वतस्त्रिधाम्ने च त्रिधामा च शरद्वते ।
शरद्वतस्त्रिविष्टाय सोऽन्तरिक्षाय दत्तवान् ॥ ६१ ॥
वर्षिणे चान्तरिक्षो वै सोऽपि त्रय्यारुणाय च ।
त्रय्यारुणो धनञ्जये स च प्रादात् कृतञ्जये ॥ ६२ ॥
कृतञ्जयात् तृणञ्जयो भरद्वाजाय सोऽप्यथ ।
गौतमाय भरद्वाजः सोऽपि निर्यन्तरे पुनः ॥ ६३ ॥
निर्यन्तरस्तु प्रोवाच तथा वाजश्रवाय च ।
स ददौ सोमशुष्माय स ददौ तृणविन्दवे ॥ ६४ ॥
तृणविन्दुस्तु दक्षाय दक्षः प्रोवाच शक्तये ।
शक्तेः पराशरश्चापि गर्भस्थः श्रुतवानिदम् ॥ ६५ ॥
पराशराज्जातुकर्णस्तस्माद् द्वैपायनः प्रभुः ।
द्वैपायनात् पुनश्चापि मया प्रोक्तं द्विजोत्तमाः ॥ ६६ ॥
वैशम्पायन उवाच ।
मया चैतत्पुनः प्रोक्तं पुत्रायामितवुद्धये ।
इत्येव वाचा ब्रह्मादिगुरुणा समुदाहृता ॥ ६७ ॥

यद्वा निर्णायकानां भूतभविष्यद्वर्त्तमानकालिकक्रियाविशेषविषयकं ज्ञानमेव नास्ति अथवा ते विष्णोरवतारं महर्षिमूर्धन्यस्य शुकदेवस्य पितरमष्टादशपुराणानां महाभारतेतिहासस्य पञ्चमवेदस्य च वक्तारं ऋग्यजुःसामाथर्ववेदानां विभक्तारं ब्रह्ममीमांसाप्रणेतारं(१) श्रीवेदव्यासं मिथ्याभाषित्वेन वञ्चकत्वेन पापिष्ठं कल्पयन्ति । अत्र पुराणेषु अन्यकर्तृत्वेन वेदव्यासकृतित्वे सन्देहश्चेत् तर्हि ममापि महान् सन्देहो भवति तत् किं ते सम्यग् विमृश्य वदन्ति त्वरया निपीडितचेतसा वा आग्रहेण अथवानवधृतमनसा वदन्तीत्यादिरित्यलमतिप्रसङ्गेन प्रकृतमनुसरामः ।

विष्णुपुराणे ४ अंशे २४ अध्याये कलिधर्मनिरूप-

---

(१) आनन्दतीर्थापरनामधेयेन मध्वाचार्येण ब्रह्ममीमांसाभाष्ये "तथा चोक्तं स्कान्दे ।

नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।
किञ्चित् तदन्यथा जातं त्रेतायां द्वापरेऽखिलम् ॥
गोतमस्य ऋषेः शापात् ज्ञाने त्वज्ञानतां गते ।
सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरःसराः ॥
शरण्यं शरणं जग्मुर्नारायणमनामयम् ।
तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ॥
अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम् ॥
चतुर्धा व्यभजत् तांश्च चतुर्विंशतिधा पुनः ।
शतधा चैकधा चैव तथैव च सहस्रधा ॥
कृष्णो द्वयष्टधा चैव पुनस्तस्यार्थवित्तये ।
चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ॥
कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
कोऽन्यो हि भुवि मैत्रेय महाभारतकृद्भवेत् ॥"इत्यादि ।

शत्याः पूर्वं लिखितेषु पुस्तकेषु लेखोऽस्ति तेषां तथा भविष्य-त्सूर्यचन्द्रोपरागादीनामपि भूतकालिकत्वापत्तेश्च । अत एव गङ्गामाहात्म्यमधिकृत्य तदानीं गङ्गाया असत्त्वेऽपि तच्छ-ङ्कासमाधिप्रसङ्गे स्कन्दपुराणीयकाशीखण्डे उक्तम् ॥

पुराणसंहिता तात ब्रूते त्रैकालिकीं कथाम् ।

इत्यादि सङ्गच्छते । वस्तुतस्तु वेदव्यासेन गुरुपरम्परया पुराणानि प्राप्तानि तथा स्वशिष्याय प्रतिपादितानि न तु निर्मितानीति(१) ॥

---

(१) वायुपुराणे उत्तरार्द्धे ४१ अध्याये ।
ब्रह्मा ददौ शास्त्रमिदं पुराणं मातरिश्वने ॥ ५८ ॥
तस्माच्चोशनसा प्राप्तं तस्माच्चापि बृहस्पतिः ।
बृहस्पतिस्तु प्रोवाच सवित्रे तदनन्तरम् ॥ ५९ ॥
सविता मृत्यवे प्राह मृत्युश्चेन्द्राय वै पुनः ।
इन्द्रश्चापि वसिष्ठाय सोऽपि सारस्वताय च ॥ ६० ॥
सारस्वतस्त्रिधाम्ने च त्रिधामा च शरद्वते ।
शरद्वतस्त्रिविष्टाय सोऽन्तरिक्षाय दत्तवान् ॥ ६१ ॥
वर्षिणे चान्तरिक्षो वै सोऽपि त्रय्यारुणाय च ।
त्रय्यारुणो धनञ्जये स च प्रादात् कृतञ्जये ॥ ६२ ॥
कृतञ्जयात् तृणञ्जयो भरद्वाजाय सोऽप्यथ ।
गौतमाय भरद्वाजः सोऽपि निर्य्यन्तरे पुनः ॥ ६३ ॥
निर्यन्तरस्तु प्रोवाच तथा वाजश्रवाय च ।
स ददौ सोमशुष्माय स ददौ तृणबिन्दवे ॥ ६४ ॥
तृणबिन्दुस्तु दक्षाय दक्षः प्रोवाच शक्तये ।
शक्तेः पराशरश्चापि गर्भस्थः श्रुतवानिदम् ॥ ६५ ॥
पराशराज्जातुकर्णस्तस्माद् द्वैपायनः प्रभुः ।
द्वैपायनात् पुनश्चापि मया प्रोक्तं द्विजोत्तमाः ॥ ६६ ॥
वैशम्पायन उवाच ।
मया चैतत्पुनः प्रोक्तं पुत्रायामितबुद्धये ।
इत्येव वाचा ब्रह्मादिगुरुणा समुदाहृता ॥ ६७ ॥

यदैव भगवद्विष्णोरंशो यातो दिवं द्विज ॥
वसुदेवकुलोद्भूतस्तदैव कलिरागतः ।
यावत् स पादपद्माभ्यां पस्पर्शेमां वसुन्धराम् ॥
तावत् पृथ्वीपरिष्वङ्गे समर्थो नाभवत् कलिः ।
गते सनातनस्यांशे विष्णोस्तत्र भुवो दिवम् ॥
तत्याज सानुजो राज्यं धर्मपुत्रो युधिष्ठिरः ।
विपरीतानि दृष्ट्वा च निमित्तानि स पाण्डवः ॥
याते कृष्णे चकाराथ सोऽभिषेकं परिक्षितः ।
प्रयास्यन्ति तदा(१) चैते पूर्वाषाढां महर्षयः(२) ॥

---

पेण वर्तमानः न स्वारब्ध इति फलितार्थः । तदा कर्तव्यपेक्षायामाह । यदैव भगवद्विष्णोरित्यादि । "कलिः पूर्वं सन्ध्यारूपेण वृत्तोऽपि स्वेन रूपेण सन्ध्यारूपमतिक्रम्य प्रवृत्तः प्रकर्षेण वृत्त इति । एतदेव स्पष्टयति । यदैवेति ।" इति विष्णुपुराणटीकायां रत्नगर्भभट्टाचार्याः ।

(१) यदा–इति मुद्रितपुस्तके पाठः ।

(२) कमलाकरेण ज्यौतिषसिद्धान्ततत्त्वविवेके लोके प्रसिद्धानां सप्तर्षीणां स्थिरत्वं प्रतिपादितम् । येषां सप्तर्षीणां पुराणादिषु चारो निरूपितस्ते तु धर्मानुष्ठानोपयोगिनोऽदृश्याः केचिदन्य एव । आधुनिका अपि सप्तर्षिचारविषये ऽनेकान् विकल्पानुद्भावयन्ति यथा "नक्षत्राणि राशिचक्रे स्थिरतानि सप्तर्षयस्तु तद्बहिः स्थिता कदाचिदपि मघासु न स्थास्यन्ति" इत्यादि । अत्रानुमीयते यथा यथा मनुष्यादयो यानादिकं समारुह्य गच्छन्ति तथा ग्रहा अपि गच्छन्तीति चारशब्दस्यार्थं इति उपर्यधःकल्पनया चरत्वं स्थिरत्वं नक्षत्रेषु स्थायित्वं कल्पयन्ति । वस्तुतस्तु नक्षत्रकक्षातः सप्तर्षिकक्षायाश्चातिदूरे वर्तमानत्वात् न केनाप्याधुनिकेनाभिनवयस्केन तन्निर्णेतुं शक्यम् एकस्मिन्नक्षत्रे यदि वर्षशतं तिष्ठन्ति यदि च गणकस्य वर्षशतद्वयमायुश्चेत्तदा स्थू

णानन्तरं पुनः कृतयुगाविर्भावप्रसङ्गे

"यावत् परिक्षितो जन्म यावन्नन्दाभिषेचनम् ।
तावद्वर्षसहस्रं तु ज्ञेयं पञ्चशतोत्तरम्(१) ॥
सप्तर्षीणां च यौ पूर्वौ दृश्येते उदितौ दिवि ।
तयोस्तु मध्यनक्षत्रं दृश्यते यत्समं निशि ॥
तेन सप्तर्षयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम् ।
ते तु यौधिष्ठिरे काले(२) मघास्वासन् द्विजोत्तम ॥
तदा प्रवृत्तश्च कलिर्द्वादशाब्दशतात्मकः(३) ।

(१) मुद्रितपुस्तके पञ्चदशोत्तरमिति पाठः । पञ्चदशोत्तरसहस्रवर्षपर्यन्त शुद्धः क्षत्रियवंश स्थास्यतीति टीकाकारैस्तदर्थोऽपि निरूपितः तत्र तच्छन्ने लेखकादिना मूले कृतस्य प्रमादस्य टीकाकारैरपि तथैवार्थस्य प्रदर्शितत्वात् । तथात्वे परिक्षिदारभ्य नन्दपर्यन्तानां मध्ये बार्हद्रथा वर्षसहस्रमेकं ततोऽष्टविंशदुत्तरमब्दशतं पञ्च प्रद्योताः तत. शैशुनागा दश भूमिपालास्त्रीणि वर्षशतानि द्विषष्ट्यधिकानि ततो महानन्दिसुतो नन्द इत्यधस्तादुक्ते विष्णुपुराणे १५०० वर्षाणि भवन्तीत्यस्योन्मत्तप्रलापापत्तेरिति ।

(२) ते [illegible] पारिक्षिते काले इति मुद्रितपुस्तके प्रामादिकः पाठः । "आसन् मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ" इत्यादिनिर्दिश्यमानवृहत्संहितावचनविरोधात् । "प्रयास्यन्ति यदा चैते पूर्वाषाढा" इत्यपि प्रामादिकमेव । अन्यथा युधिष्ठिरसमये परीक्षित्समयेऽपि मघासु सप्तर्षय स्थिता अथ नन्दसमये पूर्वाषाढायां गता पर तु परीक्षिदारभ्य नन्दपर्यन्तं १५०० वर्षाणि भवन्तीति मघा आरभ्य शतभिषक्पर्यन्त पञ्चदशनक्षत्राणि भवन्तीति शतभिषङ्नक्षत्रे सप्तर्षिस्थित्यापत्ते ।

(३) कलिप्रमाण ३६०००० मानुषवर्षाणि दिव्यवर्षाणि [illegible] शतानि सत पञ्च योजनया १२०० द्वादश शतानि इत्यग्रेऽस्मिन्नेव पुराणे निरूपितम् । तदा कलिः प्रवृत्तः प्रक-

यदैव भगवद्विष्णोरंशो यातो दिवं द्विज ॥
वसुदेवकुलोद्भूतस्तदैव कलिरागतः।
यावत् स पादपद्माभ्यां पस्पर्शेमां वसुन्धराम् ॥
तावत् पृथ्वीपरिष्वङ्गे समर्थो नाभवत् कलिः।
गते सनातनस्यांशे विष्णोस्तत्र भुवो दिवम् ॥
तत्याज सानुजो राज्यं धर्मपुत्रो युधिष्ठिरः।
विपरीतानि दृष्ट्वा च निमित्तानि स पाण्डवः ॥
याते कृष्णे चकाराथ सोऽभिषेकं परिक्षितः।
प्रयास्यन्ति तदा(१) चैते पूर्वाषाढां महर्षयः(२) ॥

---

र्पेण वर्तमानः न त्वारब्ध इति फलितार्थः। तदा कदेत्यपेक्षायामाह । यदैव भगवद्विष्णोरित्यादि । "कलिः पूर्वं सन्ध्यारूपेण वृत्तोऽपि स्वेन रूपेण सन्ध्यारूपमतिक्रम्य प्रवृत्तः प्रकर्षेण वृत्त इति । एतदेव स्पष्टयति। यदैवेति ।" इति विष्णुपुराणटीकायां रत्नगर्भभट्टाचार्याः ।

(१) यदा-इति मुद्रितपुस्तके पाठः।

(२) कमलाकरेण ज्योतिषसिद्धान्ततत्त्वविवेके लोके प्रसिद्धानां सप्तर्षीणां स्थिरत्वं प्रतिपादितम् । येषां सप्तर्षीणां पुराणादिषु चारो निरूपितस्ते तु धर्मानुष्ठानोपयोगिनोऽदृश्याः केचिदन्य एव । आधुनिका अपि सप्तर्षिचारविषये ऽनेकान् विकल्पानुद्भावयन्ति यथा "नक्षत्राणि राशिचक्रे स्थितानि सप्तर्षयस्तु तद्बहिः स्थिता कदाचिदपि मघासु न स्थास्यन्ति" इत्यादि। अत्रानुमीयते मया यथा मनुष्यादयो यानादिकं समारुह्य गच्छन्ति तथा ग्रहा अपि गच्छन्तीति चारशब्दस्यार्थ इति उपचाकल्पनया चरत्वं ,स्थिरत्वं नक्षत्रेषु स्थापयितुं कल्प्यतेऽ।' वस्तुतस्तु नक्षत्रकक्षातः सप्तर्षिकक्षायाश्चातिदूरे वर्तमानत्वात् न केनाप्याधुनिकेनाभिनववयस्केन तन्निर्णेतुं शक्यम् एकस्मिन्नक्षत्रे यदि वर्षशतं तिष्ठन्ति यदि च गणकस्य वर्षशतद्वयमायुश्चेत्तदा स्थू

तदा नन्दात् प्रभृत्येष कलिर्वृद्धिं गमिष्यति ।
यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदाहनि ॥
प्रतिपन्नं कलियुगं तस्य संख्यां निबोध मे ।
त्रीणि लक्षाणि वर्षाणां द्विज मानुषसंख्यया ॥
षष्टिं चैव सहस्राणि भविष्यत्येष वै कलिः ।
शतानि तानि दिव्यानि सप्त पञ्च च संख्यया ॥
निःशेषेण ततस्तस्मिन् भविष्यति पुनः कृतम् ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च द्विजसत्तम ॥
युगेयुगे महात्मानः समतीताः सहस्रशः ।
बहुत्वान्नामधेयानां परिसंख्या कुलेकुले ॥
पुनरुक्तबहुत्वात् तु न मया परिकीर्त्तिताः ॥" इति ॥

श्रीवराहमिहिराचार्येण वेद–धर्मशास्त्र–पुराणादीनि समालोच्य बृहत्संहितायां १३ अध्याये सप्तर्षिचारप्रकरणे उक्तम् ।

"आसन् मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ ।
षड्द्विकपञ्चद्वियुतः २५२६ शककालस्तस्य राज्यस्य ॥३॥

लगतिदर्शनगणितैक्यं भवितुमर्हति । एवमेव भास्कराचार्येण ग्रहगणिते भगणोपपत्तौ ग्रहाणां मन्दोच्चादिदृग्गणितैक्यपक्षे "नायमर्थः पुरुषसाध्य" इत्याद्युक्तम् । नवीनानामपि मते येषां तारागणानां सुमहतिदूरवर्तित्वादसत्त्वं पूर्वं निश्चितमासीत् तेषामिदानीं दूरदर्शकनवीनयन्त्राविर्भावेन सत्त्वमेव सुनिश्चितं जातम् । तस्माद्विष्णुपुराणटीकाकारादिप्रदर्शितरीत्या यन्नक्षत्रेण समं सप्तर्षीणामुदयो दृश्यते तस्मिन्नेव नक्षत्रे तदानीमवस्थानं वक्तव्यमिति । सप्तर्षीणां चाराभावेऽदृश्यत्वे च वृद्धगर्ग—कश्यप—वराहमिहिरादीनां तच्चारनिरूपणं धूमाच्छादिते किरणरहिते प्रत्येकर्षिदर्शने ऽशुभफलनिरूपणमुन्मत्तप्रलाप एवेत्यलं पल्लवितेन ।

वर्षसहस्रत्रितयं शतमेकं सप्ततिर्नवाग्रा ३१७९ च ।
शककालयातमिश्रं कलेर्गतं धर्मपुत्रात् तु(१) ॥ ५ ॥

(१) पाठोऽयं वाराणसीस्थराजकीयसंस्कृतपाठशालीयसरस्वतीभवनस्थे पुरातने पुस्तके वर्तते । मुद्रितपुस्तके च त्रुटितस्तथैव टीकापि त्रुटिता वर्त्तते । त्रुटितमूलपुस्तकानुसारेण भट्टोत्पलेन टीका कृता इति कथनं तु साहसमिवाभाति । मुद्रितटीकाप्रदर्शितरीत्या कृतया गणनया इदानीमुत्तराभाद्रपदासु सप्तर्षीणां स्थितिरायाति तत्तु दृग्गणितैक्यविरुद्धम् ।

आसन् मघास्वित्यादिना तत्र संयुक्ता इत्यन्तेन ग्रन्थेन वस्तुत्रयं प्रतिपादितम् युधिष्ठिरस्य राज्यकालः तस्य शककालानयनप्रकारः गतकलियुगाब्दानयनप्रकारश्च । तथाहि धर्मपुत्राद् युधिष्ठिरात् वर्षसहस्रत्रितयम् एकं शत नवाग्रा सप्ततिश्च ३१७९ एतद्वर्षवृन्दे शककालयातमिश्रे सति गतकलियुगाब्दाः समायान्ति । षड्द्विकपञ्चद्वियुतः २५२६ एतद्वर्षवृन्दे शककालयुक्ते सति राज्यान्तकालः समायाति । पृथ्वीं शासति युधिष्ठिरे अर्थात् राजसिंहासनाधिरूढे मघासु सप्तर्षयः आसन् इति । अत्र धर्मपुत्रयुधिष्ठिरसमयात् गतकलियुगाब्दानयनं प्रदर्शितमतः कलियुगारम्भात् पूर्वकालावस्थायित्वे द्वापरयुगावस्थायित्वं सुव्यक्तम् । अत एव सप्तर्षिचारप्रकरणे भट्टोत्पलेन बृहत्संहिताटीकायां "कलिद्वापरसन्धौ तु स्थितास्ते पितृदैवतम्"इत्युक्तवृद्धगर्गवचनं सङ्गच्छते । ते सप्तर्षय इति भावः ।

शककालस्तस्य राज्ञश्च राज्यस्येति वा पाठः तस्य युधिष्ठिरस्य शककालः अत्र शकशब्दः संवत्सरवाचकः पारिभाषिकः तथाह ज्योतिर्विदाभरणे १० अध्याये

"युधिष्ठिरो विक्रमशालिवाहनौ
नराधिनाथौ विजयाभिनन्दनः ।
इमेऽनु नागार्जुनमेदिनीविभु-
र्बलिः क्रमात् षट् शककारकाः कलौ ॥" इति ।

विस्तरस्तु वाचस्पत्ये बृहदभिधाने शकशब्दविवरणे द्रष्टव्यः ।

एकैकस्मिन्नृक्षे शतं शतं ते चरन्ति वर्षाणाम् ।
प्रागुदयतोऽप्यविवरादृजून्नयन्ति तत्र संयुक्ताः ॥ ५ ॥"

एतदनुसारेणास्मिन् १९७२ विक्रमाब्दे १८३७ शाकाब्दे १९१५ खीष्टाब्दे कलियुगस्य ५०१६ सौरवर्षाण्यतीतानीत्ययं बहूनां ज्योतिर्विदां सिद्धान्तः एतदेव स्पष्टयामि । तथाहि

युधिष्ठिरराज्यकाले मघानक्षत्रस्य कस्मिन् पादे वा सिंहराशौ कस्मिन्नंशे सप्तर्षयः स्थिता इति लेखाभावात् सूक्ष्मगणनायां व्यतीतवर्षसंख्यायां किञ्चिदन्तरं सम्भवतीति स्थूलगणनया प्रदर्श्यते । इदानीमपि आकाशे सप्तर्षयो मघास्वेव वर्तमाना दृश्यन्ते इति नैव तिरोहितमस्ति विदुषाम् तथा सति प्रथमावृत्तौ मघा आरभ्य म-

---

षड्द्विकपञ्चद्वि २५२६ युतः इदानीन्तनशककालः १८३७ युक्त्या ४३६३ एतावन्ति वर्षाणि व्यतीतानि तानि च तस्य राज्यत्यागकालात् स्वर्गारोहणकालाद्वा अवगन्तव्यानि । यतः प्रायो निर्वाणकालान्मरणकालाद्वा वर्षारम्भव्यवहारो भवति शालिवाहनशककालविषये सिद्धान्तशिरोमणौ गणिताध्याये भास्कराचार्यः ।

याताः षण्मनवो युगानि भमितान्यन्यद्युगाङ्घ्रित्रयं
नन्दाद्रीन्दुगुणास्तथा शकनृपस्यान्ते कलेर्वत्सराः ।
गोऽद्रीन्द्वद्रिकृताङ्कदस्रनगगोचन्द्राः१९७२९४७१७९शकाब्दान्विताः ।
सर्वे सङ्कलिताः पितामहदिने स्युर्वर्तमाने गताः ॥ २८ ॥

यथा च जैनानां महावीरस्वामिनिर्वाणकालात् संवत्सरारम्भः । एवं सति राजतरङ्गिण्युक्त ६५३ गतेषु कलिवर्षेषु युधिष्ठिरावस्थाने इदानींतन ४३६३ गतयुधिष्ठिराब्दयोगे ५०१६ कलिगताब्दाः समायान्तीति सर्वं समञ्जसम् ।

यापर्यन्तं २७०० सौरवर्षाणि नृणां वर्षाणि वा अतीतानि (१) पुनरपि द्वितीयावृत्तौ(२) तथैव २७०० वर्षाणि अतीता-

---

(१) वायुपुराणे उत्तरार्द्धे ३७ अध्याये

सप्तर्षयस्तदा प्राहुः प्रतीपे राज्ञि वै शतम् ।
सप्तविंशैः शतैर्भाव्या आन्ध्रान्तास्ते त्वया पुनः ॥ ४१२ ॥
सप्तविंशतिपर्यन्ते कृत्स्ने नक्षत्रमण्डले ।
सप्तर्षयस्तु तिष्ठन्ति पर्यायेण शतं शतम् ॥ ४१३ ॥ इति

(२) इदानींपर्यन्तमेकावृत्तिरेव कथं न मन्तव्या नथा सति

"ततोऽपि द्विसहस्रेषु दशाधिकशतत्रये ।
भविष्यं नन्दराज्यं च चाणक्यो यान् हनिष्यति ॥"

इति स्कन्दपुराणस्थं वचनं कुत्र समन्वयनीयम् ? ।

अपि च जनमेजयप्रदत्तं ताम्रशासनं कुत्र गच्छेत् ? तत्ताम्रशासनस्य प्रतिलिपिः सन् १८७५ नवेम्बरमासमुद्रिते इण्डियन् आंटिक्वेरी पुस्तके वर्तते तथाहि

"श्रीगणाधिपतये नमः पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः स्वस्ति श्रीजयाभ्युदये युधिष्ठिरशाके प्लवङ्गाख्ये एकोननवतितमवत्सरे सहस्यमासे अमावस्यायां सौम्यवासरे श्रीमन्महाराजाधिराजपरमेश्वरो वीरप्रतापशाली कुरुकुलोद्भवो वैयाघ्रपादगोत्रजः श्रीजन्मेजयभूपः किष्किन्धानगर्यां सिंहासनस्थः सकलवर्णाश्रमधर्मप्रतिपालकः पश्चिमदेशस्थसीतापुरवृकोदरक्षेत्रे तत्रस्थमुनिवृन्दमठस्य गरुडवाहनतीर्थश्रीमच्छिष्यश्रीकृष्णतीर्थैराराधितसीतारामस्य पूजार्थं कृतभूदानसाधनमस्मत्प्रपितामहयुधिष्ठिराधिष्ठितमुनिवृन्दक्षेत्रेऽस्य चतुःसीमापरिमितिक्रमः पूर्वभागे उत्तरवाहिन्याः तुङ्गभद्रायाः पश्चिमे दक्षिणभागे अगस्त्याश्रमसङ्गमादुत्तरे पश्चिमे भावाणप्रवाहः पूर्वे उत्तरभागे भिन्नमार्गाः दक्षिणे एतन्मध्यस्थमुनिवृन्दक्षेत्रं भवच्छिष्यपरंपरया आचन्द्रार्कपर्यन्तं निधिनिक्षेपजलपाषाणअक्षिणी(?) आगामिसिद्धसाध्यतेजःस्वाम्यसहितं स्वपुण्यानुकूलेन अस्मन्माता-

नि सङ्कलनया ५४०० वर्षाणि गतानि । युधिष्ठिरमहाराजस्य द्वापरयुगे वर्तमानत्वात् वर्षसहस्रात्मकमायुः सम्भवति(१)

---

पित्रोः विष्णुलोकप्राप्त्यर्थं हरिहरसन्निधौ उपरागसमये सहिरण्येन तुंगभद्राजलधारापूर्वकं क्षेत्रं यतिहस्ते दत्तवानस्मि एतद्धर्मसाधनस्य साक्षिणः आदित्यचन्द्रावनिलानलौ च द्यौर्भूमिरापो हृदयं यमश्च अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् दानपालनयोर्मध्ये दानाच्छ्रेयोऽनुपालनम् दानात्स्वर्गमवाप्नोति पालनादच्युतं पदं स्वदत्ताद् द्विगुणं पुण्यं परदत्तानुपालनं परदत्तापहारेण स्वदत्तं निष्फलं भवेत् स्वदत्ता पुत्रिका ज्ञेया पितृदत्ता सहोदरा अन्यदत्ता तु जननी दत्तभूमिं 'परित्यजेत् । अन्यैस्तु च्छर्दितं क्षुद्रैः श्वभिश्च च्छर्दितं न तु । ततः कष्टतरो नीचः स्वयंदत्तापहारकः स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत यः षष्टिवर्षसहस्राणि विष्ठायां जायते क्रिमिः ।" इति ॥

केचित्तु अनियतस्वरूपां लिपिं नियतस्वरूपां परिकल्प्य तत् ताम्रशासनं कृत्रिमं निरूपयन्ति ।

अन्ये तु तत्रोक्ताः प्लवङ्गसंवत्सरसहस्यमासकृष्णपक्षामावास्यासौम्यवासरोपरागादियोगा इतः पूर्वं त्रयोदशशताब्द्यां सम्भवन्तीति स एव समयो महाभारतस्येति वदन्ति ।

वाराणसीस्थराजकीयसंस्कृतपाठशालीयप्रधानगणिताध्यापकेन महामहोपाध्यायपदवीयापूर्वपदशालि—सी. आई. ई. महाशयेन तु पूर्वोक्तकुकल्पनानिरासपूर्वकं गणितेन तत्ताम्रशासनं तदुक्तकालिकमेव व्यवस्थापितमिति ।

(१) युधिष्ठिरस्य वर्षसहस्रपरिमितमायुरभूदित्यत्र ममाग्रहो नास्ति यदि महाभारतमत्स्यपुराणादिनिरूपितमायुर्द्वापरादियुगव्यवस्था निर्णेया तदा युधिष्ठिरोऽपि नाभूत् भारतीयं युद्धमपि नाभूत् सर्वं स्वकपोलकल्पितं काव्यं सर्वमनवस्थितमिति तदुदाहृत्याधुनिकैर्वस्तुतत्त्वव्यवस्थापने न किमपि वाच्यम् । किं जातं किं न जातमिति सर्वज्ञो भगवानेव वेद यथातु यया रीत्या शास्त्रनिर्माणं तयैव रीत्या सामञ्जस्यं कृतं तथैव निरूपयिष्यत इति ।

तथोक्तं मत्स्यपुराणे १३१ अध्याये द्वापरयुगे वेदव्यासेन वेदानां तच्छाखानां विभागप्रसङ्गे तच्छिष्याणां फलसूत्रतद्भाष्यरचनाप्रसङ्गे।

"द्वापरेष्वभिवर्तन्ते मतिभेदास्तथा नृणाम्" इत्युपक्रम्य।
पूर्णं वर्षसहस्रं तु(१)परमायुस्तदा नृणाम्।"इत्याद्युक्तम्।

(१) पाठोऽयं वाराणसीस्थराजकीयसंस्कृतपाठशालीयहस्तलिखितपुस्तके वर्तते मुद्रितपुस्तके तु पाठभेदोऽध्यायक्रमभेदश्च वर्तत इति।

चिरजीवित्वे प्रमाणं तु

"दश वर्षसहस्राणि दश वर्षशतानि च।
रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति॥"

इति वाल्मीकिरामायणादिकं वर्तत एव। जैनबौद्धग्रन्थेष्वपि बहूनां चिरजीवित्वं प्रतिपादितमेव। खीष्टीयानामपि ग्रन्थे बहूनां दीर्घजीवित्वं महम्मदीयानामपि पुस्तके बहूनां चिरजीवित्वं प्रतिपादितमिति बहूनामैक्याद् युधिष्ठिरस्य वर्षसहस्रजीवित्वे न किमपि चित्रं प्रतिभाति।

अपि च सम्बन्धाभिधेयप्रयोजनाधिकारीत्यनुबन्धचतुष्टयम् उद्देशो लक्षणं परीक्षा चेति निरूपणक्रमः सञ्ज्ञापरिभाषा चेति शास्त्रमुखम् इति यथा संज्ञया परिभाषया येन च क्रमेण पुराणानां प्रणयनं तथैव तेषां समालोचने न किमप्यसमञ्जसम्।

केचित्तु उत्तरायणे गते सूर्ये मरणमिच्छतो भीष्मस्य शरशय्यां गतवत आधुनिकरीत्याऽसमञ्जसं निरूपयन्तो गणितेन तत् संसाध्य महाभारतस्यातात्कालिकत्वमाहुस्तत्र वायस्कालं गणितेन शरशय्यायामवस्थानासिद्धेः।

कुबेरगुप्तां दिशमुष्णरश्मौ
गन्तुं प्रवृत्ते समयं विलङ्घ्य।
दिग् दक्षिणा गन्धवहं मुखेन
व्यलीकनिःश्वासमिवोत्ससर्ज॥

इति शिवपुराणमूलककुमारसम्भवानुपपत्तेश्च।

आधुनिकलोकयात्रामुदाहृत्य परीक्षणे तु आकाशस्थितानां बहूनां पदार्थानां भूमिस्थितानां च बहूनां पदार्थानामशेषविशेषरूपेण सर्वात्मना ज्ञानं न भवतीति कुतो युधिष्ठिरस्य विरायुष्ट्वं भीमस्य दस्तिसहस्रबलत्वं भीष्मपितामहस्य शरशय्याशयनं च सिध्येत् ? । इतः पूर्वं व्योमयानादीनामपि असम्भव एवासीत् दृश्यते चाद्यत्वे प्रत्यहं विज्ञानविद्यामाहिम्ना नवंनवं वस्तु आविर्भवतीति तत्सर्वं नासम्भवीति ।

वेदधर्मशास्त्रपुराणादीनां न्यायादिदर्शनानां च परस्परविरोधपरिहारार्थं मधुसूदनसरस्वत्याख्यभिक्षुणा प्रस्थानभेदग्रन्थे उदयनाचार्येण न्यायकुसुमाञ्जलौ ज्यौतिषपुराणयोरैकवाक्यतासम्पादनाय पण्डितवरश्रीरामचन्द्रेण अविरोधप्रकाशग्रन्थे च बहवः प्रयासाः कृताः । वस्तुतस्तु तेषामेकवाक्यतासम्पादनमैकमत्यं च न केनापि कर्तुं शक्यं तथात्वे विशिष्टाद्वैताद्वैतद्वैताद्वैतमतभेदो न स्यात् मम तु मते तदपि ब्रह्मानिर्वचनीयत्वसाधकमेव । आधुनिकास्तु मन्वादिप्रणीतधर्मशास्त्राणां पुराणानामपि न्यूनाधिकपाठदर्शनान्निबन्धेषूद्धृतानां वचनानां तदुपलब्धपुस्तकेष्वनुपलम्भान्महाविप्लवं वर्णयन्ति तदपि शास्त्रतात्पर्यानवबोधात् ।

यथा अस्यां लोकप्रसिद्धायां मनुस्मृतौ ११९६ संवत्सरलिखितेन तालपत्रपुस्तकेन संवादे कृते ७१ श्लोका अधिका दृश्यन्ते । अपरापि ६००० श्लोकात्मिका पद्धाहस्री वृद्धमनुस्मृतिर्वा बृहन्मनुस्मृतिः वाराणस्यां मिसिरपोखराख्यस्थले कान्यकुब्जस्य पं० विश्वेश्वरदत्तव्यासस्य गृहे वर्तमाना मया दृष्टा । अन्येऽपि मनुसंहिता-मनुसिद्धान्त-मनुदोष-नामका ग्रन्था वर्तन्ते ।

तथोक्तं नारदसंहितायामारम्भे

"ब्रह्माचार्यो वसिष्ठोत्रिर्मनुः पौलस्त्यलोमशौ ।
मरीचिरङ्गिराव्यासो नारदः शौनको भृगुः ॥
च्यवनद्यवनो गर्गः कश्यपोऽथ पराशरः ।
अष्टादशैते गम्भीरा ज्योति शास्त्रप्रवर्तकाः ॥
सिद्धान्त-संहिता-होरारूपस्कन्धत्रयात्मकम् ।

वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमिहोच्यते॥"(१) इत्यादि। मानवपुराणमप्युक्तम्(२) पराशरोपपुराणे १ अध्याये।
एवं मानवं श्रौतसूत्र(३) स्मार्तसूत्रं शुल्वसूत्रमित्यादयो ग्रन्था मनुप्रोक्ता वर्तन्ते एताननुविमृश्य केवलमुपलब्धां मनुस्मृतिं पठित्वा विप्लवं वर्णयन्तो निपुणतरं निराकरणीया इति।

पुराणेष्वपि श्रीमद्भागवतस्यैकं पुस्तकं ममान्तिके एवाऽस्ति उपलभ्यमानेन भागवतेन सवादे कृते श्लोकानां प्रायस्त्रीणि सहस्राणि अथ च १५ अध्यायास्तत्र न सन्ति किन्तु वोपदेवजन्मनः १५० वर्षेभ्यः पूर्वं लिखितं पुरातनं सम्पूर्णं तत् पुस्तकम् ।

एवं वाराणसीस्थराजकीयसंस्कृतपाठशालीयसरस्वतीभवने वर्तमानं भविष्यपुराणं १४५०० श्लोकात्मकं सम्पूर्णं वर्तते तत्र अकबर-जहाँगीर-शाहजहा इत्यादिराज्ञां चर्चापि नास्ति । यया आधुनिका भविष्यपुराणस्याधुनिकत्वं वदन्ति । भविष्यपुराणं भविष्योत्तरपुराणं भविष्योत्तरोत्तरपुराणं भविष्यपुराणपरिशिष्टं च वर्तते । महाभारतं वर्तते तस्य पूरको हरिवंशस्तस्यापि पूरकं भविष्यत् पर्व च वर्तत इत्यन्यदेतत्।

अत्रैव महारामायणापरनामधेयस्य योगवासिष्ठस्यैकं पुरातनं पुस्तकमस्ति तत्र प्रत्येकपुष्पिकायां "शतसाहस्र्यां संहितायां बालकाण्डे ( आदिकाण्डे )" एवं लिखितमस्ति । अस्यैवायोध्याकाण्डं वाराणस्यामेव रंगीलदासफाटकसंज्ञके प्रदेशे तमोलकरवाडानामके स्थले पं. गणेशरामव्यासस्य निकटे आ-

( १ ) अत्रोक्ता मनुग्रन्थाः कश्यप-पराशरादिभिः स्वेषु संहितादिग्रन्थेषु समुद्धृताः तत्सर्वं बनारस-संस्कृत-सीरीजमुद्रिते ज्यौतिषसिद्धान्तसंग्रहे भूमिकायां प्रदर्शितमस्माभिः ।

( २ ) अस्य पुराणस्यानेके अध्यायाः कैवल्यरत्नग्रन्थे समुद्धृतास्ते च वाराणस्यां पण्डितपत्रे मुद्रिता वर्तन्ते ।

( ३ ) भाष्यसहितं वाराणसीस्थराजकीयसंस्कृतपाठशालीयसरस्वतीभवने वर्तते। मूलं तु यूरोपदेशे मुद्रितमस्ति।

एवं सति कलिवर्षेषु ६५३ मितेषु गतेषु युधिष्ठिर-महाराजस्य वर्तमानत्वं निरूपयन्ती राजतरङ्गिणी अपि सङ्गच्छते।

"शतेषु षट्सु सार्द्धेषु त्र्यधिकेषु च भूतले।
कलेर्गतेषु वर्षाणामभवन् कुरुपाण्डवाः॥" इति।

एवं सति मघा आरभ्य पूर्वाषाढापर्यन्तं १० नक्षत्राणि भवन्तीति परीक्षिद्राज्याभिषेकसमये वर्षाणां दश शतानि १,००० अतीतानि। अयमेव परमार्थो विष्णुपुराणस्य ये सप्तर्षयो मघास्वासन् युधिष्ठिरसमय इति शेषः एते च तदा पूर्वाषाढां मघास्यान्ति तदैव भगवति वासुदेवे श्रीकृष्णे दिवं याते सति परीक्षितो राज्याभिषेकं कृत्वा सानुजो युधिष्ठिरो राज्यं तत्याज। एषः कलिः नन्दात् प्रभृति वृद्धिं गमिष्यतीति। असौ निष्पन्नं परिक्षिद्राज्याभिषेकसमये कलिवर्षाण्यतीतानि ६५३

| | |
|---|---|
| ततश्च बार्हद्रथा भूपतयः सहस्रवर्षपर्यन्तम्। | १,००० |
| ततश्च प्रद्योतनामानो भूपतयोऽष्टत्रिंशदुत्तरमब्दशतम्। | १,३८ |
| ततश्च शैशुनागास्त्रीणि वर्षशतानि द्विषष्ट्यधिकानि। | ३६२ |
| ततश्च महापद्मस्तत्पुत्राश्च एकशतम्। | १०० |
| | २२५३ |

सीदिदानीं तत्पुस्तकसंग्रहस्य विक्रयान्न जाने तत् कुत्र गतम्।

एवं तथाविधग्रन्थकारैरुद्धृतानां भारतवचनानामुपलभ्यमाने महाभारते क्वचिदनुपलम्भान्महाभारतस्यापि नवीनत्वं प्रक्षिप्तत्वमव्यवस्थितत्वादिकं प्रलपन्ति तदपि तात्पर्यानवबोधात् मन्त्रभारत-जैमिनिभारतादीनां विद्यमानत्वात्।

एवं सर्वमननुविमृश्य वक्तव्ये महान् विप्लवो भवेत्।

नवैव नन्दान् कौटिल्यो ब्राह्मणः समुद्धरिष्यति । तेषामभावे मौर्याश्च भोक्ष्यन्ति कौटिल्य एव चन्द्रगुप्तं राज्ये ऽभिषेक्ष्यतीति ।

इत्थं स्थूलगणनया विष्णुपुराणेन २२६३ कल्यब्देष्वतीतेषु ततः परं चन्द्रगुप्तस्य राज्याभिषेकसमयः समायाति ।

एवं सति

ततोऽपि द्विसहस्रेषु दशाधिकशतत्रये ।
भविष्यं नन्दराज्यं च चाणक्यो यान् हनिष्यति ॥

इति स्कन्दपुराणीयवचनमपि सङ्गच्छते । एवं च पूर्वोक्तं भागवतीयं वायुपुराणीयं मत्स्यपुराणीयं च वचनं सङ्गच्छत इति। अपि च विक्रमाब्दारम्भात् ४७० वर्षेभ्यः पूर्वं निर्वाणपदवीं गतानां जैन २४ तीर्थङ्कराणां महावीरस्वामिनां कौटिल्यशास्त्रस्य मिथ्याशास्त्रनिरुक्त्या उक्तसमयादनल्पपूर्वकालावस्थायित्वं कौटिल्यस्य सङ्गच्छत इति सर्वं समञ्जसम् ।

आधुनिकास्तु दूरदेशस्थैरत्युग्रबुद्धिभिर्महासामर्थ्यवद्भिश्चिरस्थैरपि दुरधिगमान् विषयान् तस्मिन् समयेऽल्पायासेनाल्पेन कालेन राजदूतेन येन केनचिन्मेगास्थेनीसनाम्ना याथातथ्येनाऽवगतान् समाकलय्य पुस्तकनिर्माणाभावेऽपि तन्नाम्ना पत्रादिना सङ्कलिते पुस्तके 'सेन्द्राकोत्तस' 'सेन्द्राकोतस' 'जन्द्रमस'इत्याकारकैः पदैः स्वविद्याबुद्धिमहिम्ना चन्द्रगुप्तं परिकल्प्य तत्प्रकरणे चाणक्यस्य चर्चाया अभावेऽपि बलात्कारेण चाणक्यं सन्निवेश्य अशोकवर्द्धनस्य चन्द्रगुप्तपौत्रस्य चर्चाया अभावेऽपि यं कञ्चिदशोकं सन्निवेश्य तज्जीवनचरितादिकं यथोक्तशिलाशासनादिभ्यो यथोक्तरीत्या परिकल्प्येदानीं महाभारतं विष्णुपुराणं वायुपुराणं मत्स्यपुराणं श्रीमद्भागवतं स्कन्दपुराणादिकं च समन्वेतुमिच्छन्ति यदि न पारयन्ति

तदा तान्येवाज्ञायोपहसन्ति "सर्वं गप्पं" "सर्वं गाँजा" इति वदन्तीति शोकस्थानम् ।

यदि च निरुक्तपुराणादिनिर्दिष्टचन्द्रगुप्ताशोकवर्द्धनादिभ्यो भिन्ना अर्वाचीनाश्चन्द्रगुप्ताशोकप्रभृतयस्तदा नासम्भवः तथाहि विष्णुपुराणे १ अंशे १५ अध्याये ।

"युगेयुगे भवन्त्येते दक्षाद्याः मुनिसत्तम ।
पुनश्चैव निरुध्यन्ते विद्वांस्तत्र न मुह्यति ॥ ६१ ॥"
विष्णुपुराणे ४ अंशे २४ अध्याये कलिधर्मे एव
"ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च द्विजसत्तम ।
युगेयुगे महात्मानः समतीताः सहस्रशः ॥
बहुत्वान्नामधेयानां परिसंख्या कुलेकुले ।
पुनरुक्तबहुत्वात् तु न मया परिकीर्तिताः ॥"
"एष तूद्देशतो वंशस्तत्रोक्तो भूभुजां मया ।
निखिलो गदितुं शक्यो नैव जन्मशतैरपि ॥" इति ।

युधिष्ठिरार्जुनभीमसेननकुलसहदेवाः पञ्च भ्रातरः पाण्डवा इति सार्वजनीनप्रसिद्धिः । विष्णुपुराणे ४ अंशे २१ अध्याये परिक्षितोऽपि जनमेजयश्रुतसेनोग्रसेनभीमसेनाश्चत्वारः पुत्रा भविष्यन्तीति । ततश्च शतानीकाद् द्वादशपुरुषानन्तरमपरः शतानीको भविष्यतीति । तत्रैव २२ अध्याये गुडाकेशस्ततो वत्सो वत्साद्वत्सव्यूहस्ततः प्रतिव्योमस्तस्यापि दिवाकरस्तस्मात् सहदेवः । ततश्च त्रयोदशपुरुषानन्तरं सञ्जयस्तस्माच्छाक्यः शाक्याच्छुद्धोदनः । ततः २३ अध्याये जरासन्धसुतात् सहदेवादित्यादि भविष्यत्त्वेन निरूपितम् ।

अत्रापरे इतिहासतत्त्वविदः "वात्स्यायने मल्लनागः कौटिल्यश्चणकात्मज" इति हेमचन्द्रस्य कोषे "विष्णु-

गुप्तस्तु (कौण्डिन्यः) कौटिल्यः चाणक्यो द्रामिलोंऽशुल" इति पुरुषोत्तमदेवस्य कोषं चावलम्ब्य वदन्ति यत् वात्स्यायनश्चाणक्य एव इति न्यायदर्शनभाष्यं चाणक्येनैव कृतं ते तु वदतो व्याघातेन दूरादेव निराकृता भवन्ति यतः कोशे कौटिल्यस्यापि पाठात् कौटिल्येन स्वनिर्मितेऽर्थशास्त्रे प्रथमे ऽधिकरणे द्वितीयेऽध्याये "सांख्यं योगो लोकायतं चेत्यान्वीक्षिकी"(१)त्युक्तत्वात् स च न्यायशास्त्रं जानात्येव नेति वात्स्यायनेन तु न्यायभाष्ये "सेयमान्वीक्षिकी न्यायविद्या

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आधारः सर्वधर्माणां विद्योद्देशे प्रकीर्त्तिता ॥"

---

(१) महिसूरस्थ-ओरिअण्टल् लाइब्रेरी सीरीजमुद्रिते पुस्तके ६ पृष्ठं द्रष्टव्यम् ।

केचित्तु सांख्ययोगयोरुपनिषत्सु अनेकत्र चर्चितत्वात् पुराणेष्वपि भागवतादिषु "पञ्चमः कपिलो नाम-प्रोवाचासुरये सांख्य"-मिति, मत्स्यपुराणे १५७ अध्याये वा० रा० सं० पाठशालीय-पुस्तके २७० पत्रे ।

"अथान्यद्रूपमास्थाय शम्भुं नारायणोऽव्ययः ।
आजगाम महातेजा योगाचार्यो महायशाः ॥
सांख्याचार्योतिमतिमान् कपिलो ब्राह्मणोऽपि वा ।
उभावपि महात्मानौ कूजन्तौ क्षेत्रतत्परौ ॥"इति ।

सांख्यं योगो लोकायतं चेत्यान्वीक्षिकीति सुष्ठूक्तं कौटिल्येनेति वदन्ति तदप्यल्पज्ञतामात्रं सांख्यसूत्रषडध्याय्यां "न वयं षट्पदार्थवादिनो वैशेषिकादिवत्" इत्युक्तत्वान्न्यायवैशेषिकयोरेकवाक्यतया सांख्यापेक्षयाऽपि न्यायस्य पूर्वकालिकत्वं महर्षीणां सम्मतमिति ।

सम्प्रदायविदस्तु यथोक्तश्रुति-स्मृति-पुराणेतिहासोक्तन्यायशास्त्रस्यैवान्वीक्षिकीपदवाच्यत्वादिदं कौटिल्यार्थशास्त्रं यत्र तत्र तद्विरुद्धार्थप्रतिपादकत्वात् कल्पितमिवाभातीत्युपेक्षणीयमित्याहुः ।

इत्युक्तत्वाद्व्यक्तिभेदः कर्तृभेदो बुद्धिभेदः सिद्धान्तभेदश्च सुव्यक्त एव ।

अत्र इतिहासतत्त्वविद्गुरवः केचिद्वदन्ति "तदानीं न्यायशास्त्रं नासी"देवेति तथात्वेऽपि सिद्धं नः समीहितं "मूलं नास्ति कुतः शाखा" इत्याभाणकेन यदि तदानीं न्यायशास्त्रमेव नासीत् तदा भाष्यं कस्य कृतं चाणक्यवात्स्यायनेनेति ? ।

कामसूत्रव्याख्यायां "वात्स्यायन इति स्वगोत्रनिमित्ता सञ्ज्ञा मल्लनाग इति सांस्कारिकी"(१) इत्युक्तत्वात् अयं चाणक्यो वात्स्यायनो राजमन्त्रित्वात् कामशास्त्रे ऽर्थशास्त्रे चैकयैव रीत्या अधिकरणाध्यायक्रमेण लौकिकविषयान् संगृह्य तच्छास्त्रं प्रणीतवान् इति नायं नैयायिक इति सिद्धम् ।

एवं स्थिते निर्दिष्टाश्वलायनसूत्रोक्तवत्सभेदाद्वात्स्यायनभेदस्तद्भेदात् कौटिल्यचाणक्यभिन्नेन महर्षिणा वात्स्यायनेन न्यायभाष्यं प्रणीतमिति सुष्ठूक्तम् ।

अपि च चाणक्येनैव न्यायदर्शनभाष्यं कृतमिति वदन्तश्चाणक्यस्य विष्णुपुराणादौ पाठात् तस्य चाणक्यपश्चाद्भावित्वं संसाध्य पुराणानामर्वाचीनत्वं न्यायभाष्यस्य प्राचीनत्वं प्रलपन्ति तदप्यनधिगतशास्त्रतात्पर्यमूलकमेव । यतश्छान्दोग्योपनिषत्सु ७ प्रपाठके १ खण्डे "अधीहि भगव इति सोपससाद सनत्कुमारं नारदस्तꣳ होवाच । यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति ॥ १ ॥ स होवाचर्ग्वेदं भगवोऽध्येमि यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं

---

(१) बनारसचौखम्भावृक्षदीपेमुद्रितपुस्तके १७ पृष्ठे २८ पङ्क्तौ द्रष्टव्यम् ।

पञ्चमं वेदानां वेदं(१) पित्र्यं राशिं दैवं निधिं वाको-
वाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यामेतद्भगवोऽध्येमि ॥ २ ॥"

एवमेवात्रैव ७ प्रपाठके २ खण्डेऽपि । अपि चात्रैवोपनिषत्सु ८ प्रपाठके १५ खण्डे "तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदध"दित्यादि ।

मन्वर्थमुक्तावल्यां तु "मनुर्वै यत् किञ्चिदवदत् तद्भेषजं भेषजतायाः" इत्युक्त्वा उपनिषदपेक्षया मनोः प्राचीनत्वं सिध्यति मनुना च

"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।

---

(१) वङ्गदेशस्थयाशिआटिक्सोसाइटीमुद्रिते मैत्र्युपनिषत्पुस्तके १७१ पृष्ठे "इतिहासः पुराणं विद्या । अत्रेतिहासो भारतादिः ।" वृहदारण्यके ४ अध्याये इतिहासः पुराण विद्या इत्यादि ।

वङ्गदेशस्थ एसि. मुद्रिते छान्दोग्यपुस्तके ४७६ पृष्ठे "वाको वाक्य" "तर्कशास्त्रम् " इति शाङ्करभाष्ये ।

आधुनिकतार्किकास्तु वदन्ति "इतिहासपुराणं पञ्चमं वेदानां वेद"मित्यत्र वेदोक्तस्य तत्रतत्रेतिहासभागस्य वेदोक्तस्य तत्रतत्र प्राचीनकथाभागस्य ग्रहणम् न तु महाभारतविष्णुपुराणादीनां ग्रहणमिति । तत्र पञ्चम वेदानां वेदमित्यस्य कोऽर्थः ? यदि चतुर्षुवेदेष्वेव पञ्चमोऽपि वेदोऽस्ति तदा तत्तद्विषयभेदेन सहस्रशो वेदा भवेयुस्तद् ब्रह्मादिकमारभ्यापामरं प्रसिद्धं वेदानां चतुष्ट्वं व्याहतम् अपि च ।

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरेदिति ॥"

पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥"(१)

अपि च

"पुराणेष्वपि यज्ञेषु ब्रह्मक्षत्रसवेषु च ॥"

मनुस्मृतौ ५ अध्याये २३ श्लो. इत्युक्तत्वान्मनोरपेक्षया पुराणानां प्राचीनत्वं सिद्ध्यति विष्णुपुराणादौ चाणक्यस्य चर्चाया दर्शनात् पुराणापेक्षया चाणक्यस्य प्राचीनत्वं किं तु आधुनिकतार्किकतर्कसिद्धेन चाणक्येन न्यायभाष्यं रचितं न्यायभाष्ये च ४ अध्याये १ आ·

---

इति इतिहासपुराणानां वेदोपबृंहणरूपाणां वेदभिन्नत्वप्रतिपादिका याज्ञवल्क्यस्मृतिरपि कुत्र गच्छेत् तथा च येषां वचनं पूर्वापरसमन्वयपूर्वकं प्रामाणिकं युक्तिपथं नावरोहेत् तदा तत्र उन्मत्तप्रलापात्को भेद इति न बुध्यामहे।

अत्र पुराणेतिहासपञ्चमानां चतुर्णां वेदानां वेदं व्याकरणमित्यादिशाङ्करभाष्यं मूलवैपरीत्याच्चिन्त्यम्।

केचित्तु इतिहासपुराणानां रूपकमूलकत्वात् नाटकादिवदभिनेयत्वं वदन्ति तत्पूपहासास्पदं सति कुड्ये चित्रमिति न्यायात् तात्त्विकवस्तुसत्त्व एव रूपकत्वमभिनेयत्वं च सम्भवति अन्यथा खपुष्पशशविषाणादीनामपि रूपकाभिनयौ स्याताम्। रूपकत्वेऽभिनेयत्वे चाग्रहश्चेत्तदिदानींतनानामपि लेखो रूपकमेवेत्याकिञ्चित्करमेव। अपि च तदानींतनायोध्याजनकपुरहस्तिनापुरादीनि नगराणि गौतमविश्वामित्रवसिष्ठादीनामाश्रमाणि मथुरादीनि तीर्थानि अन्यान्यपि पुरातनानि चिह्नानि कस्मिन् गिरिगह्वरे महान्धकारे तिष्ठेयुरितीदानींतनैरन्वेषकंमन्यैरेव पण्डितैर्वाच्यम्।

(१) रघुवंशीय ५ सर्गस्थवित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति इति श्लोकव्याख्याने मल्लिनाथेन मनुनाम्ना वचनमिदमुद्धृतम्।

ह्निके पात्रचयान्तानुपपत्तेश्च फलाभाव इति ६२ सूत्र-व्याख्याने(१) "नाविशेषेण कर्त्तुः प्रयोजकफलं भवतीति चातुराश्रम्यविधानाच्चेतिहासपुराणधर्मशास्त्रेष्वैकाश्रम्यानुपपत्तिः । तदप्रमाणमिति चेन्न प्रमाणेन प्रामाण्याभ्यनुज्ञानात् प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते ते वा खल्वेते अथर्वाङ्गिरस एतदितिहासपुराणमभ्यवदन्नितिहासपुराणं पञ्चमं वेदानां वेद इति तस्मादयुक्तमेतदप्रामाण्यमिति । अप्रामाण्ये च धर्मशास्त्रस्य प्राणभृतां व्यवहारलोपाल्लोकोच्छेदप्रसङ्गः । द्रष्टृप्रवक्तृसामान्याच्चाप्रामाण्यानुपपत्तिः । य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति ।" इति लेखदर्शनाद् चाणक्यापेक्षया पूर्ववर्त्तित्वं पुराणानां सिद्ध्यति ।

अपि च महाभारते मोक्षधर्मे २१८ अध्याये सौगतताकिकमतनिरासदर्शनात् सुगतानन्तरं महाभारतनिर्माणम् ।

बुद्धदेवसमानकालिकेन २४ जैनतीर्थङ्करेण महावीरस्वामिना विक्रमादित्यसमयात् ४७० वर्षेभ्यः पूर्वं निर्वाणत्वं (मरणं) प्राप्तवता अनुयोगद्वारसूत्र–नन्दिसूत्र–भगवतीसूत्र–दशाश्रुतस्कन्धादौ महाभारतादीनां मिथ्यात्वनिरुक्तिः । जनमेजयमद्त्तेन ताम्रपट्टशासनादिना ४३६३ वर्षेभ्यः पूर्वं वेदव्यासयुधिष्ठिरादीनामवस्थानम् । शतपथब्राह्मणे २।१।२–३। "एताह वै प्राच्यै दिशो न च्यवन्ते–तस्मात् कृत्तिकासु आदधीत"

---

(१) विजयनगरसंस्कृतसीरीजमुद्रितपुस्तकानुसारेणात्र सूत्रसंख्यावगन्तव्या ।

इति लिखितं निरीक्ष्य गणितशास्त्रेण ४८७५ वर्षेभ्यः पूर्वं शतपथब्राह्मणनिर्माणं न्यायवैशेषिकसांख्ययोगमीमांसावेदान्तानां परस्परखण्डनमण्डनानि च ।

अपि च कौलजगमर्दनोद्धृतजैन—बौद्धमतनिरासकोमामहेश्वरसंवादात्मकतन्त्राणामर्वाचीनत्वं सिद्ध्यति । सुपणाङ्गसूत्रमितिप्रसिद्धे जैनागमे(१) ऋषभदेवस्तीर्थङ्करो भरताय राज्ञे चतुरो वेदानुपदिदेशेति जैनागमापेक्षया वेदानां पुरातनत्वं सिद्ध्यति तथा दशाश्रुतस्कन्धनामके(२) जैनागमे जैनतीर्थङ्कराः पुराणानामत्र्यादिधर्मशास्त्राणां(३) ज्ञातारो भविष्यन्तीति पुराणानां धर्मशास्त्राणामपि प्राचीनत्वं सिद्ध्यतीति । अत्र किं नवीनं किं वा प्राचीनं किं पूर्वं किं वा परमित्यादिकं लौकिकयुक्त्याधुनिकै स्तार्किकैरेव व्यवस्थापनीयम् ।

अत्राधुनिकानामेका बलवती युक्तिरवशिष्टा वर्तते उपनिषदुक्तानि पुराणानि भिन्नानि न तूपलभ्यमानानि अथवा तत्रतत्र उपलभ्यमानानि वचनानि नवीनत्वप्राचीनत्वानुमापकानि

(१) यतिवरेण श्रीरामचन्द्रेण प्रतिपादितम् ।

(२) वाराणसीस्थराजकीयसंस्कृतपाठशालीयसरस्वतीभवनस्थे पुस्तके १३ पत्रे द्रष्टव्यम् ।

(३) तदुक्तं याज्ञवल्क्यस्मृतौ ।

"मन्वत्रिविष्णुहारीता याज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥" इति

अन्येऽप्युपस्मृतिकारकाः १८, अपरे उपोपस्मृतिकारकाः २१, तद्भिन्ना अपि प्रकीर्णकस्मृतिकर्तारश्चात्र निरूपणीयाः ।

तानि केनचित्प्रक्षिप्तानि वा अनेकैः पण्डितैरल्पज्ञैः रचिता-स्ते ते ग्रन्था अनवस्थिता इत्यादिका इयं च विनिगमना-विरहेणानवस्थितवाग्जालमात्ररूपत्वात् शिष्टापरिगृहीतत्वादेव दूरापास्तेति ।

अत्र सम्प्रदायविदस्तु देवा महर्षयश्चापि योगबलेना-तीतानागतपदार्थविषयकज्ञानवन्तः क्वचिद्भविष्यत्कथामपि क-थयन्ति स्म यथा भागवते १ स्कन्धे ३ अध्याये २४ श्लो. "बुद्धो नाम्ना ऽजनिसुतः कीकटेषु भविष्यति" । मात्स्ये ४८ अध्याये

"तस्मिन्नेव युगे क्षीणे सन्ध्याशिष्टे भविष्यति ।
कल्की विष्णुः" इत्यादि ।

मुद्गलपुराणे कलिधर्मा निरूपिताः । एवं वाल्मीकिरामा-यणेऽपि "रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति" । एवं रूपेण भविष्यतीतिक्रियाविन्यासपूर्वकं कथितवन्त इति तेन न प्राचीनत्वनवीनत्वनिर्णयावकाश इति वदन्ति ।

अथापरे व्यवस्थापका वदन्ति तावत् न्यायदर्शनभाष्यकारो वात्स्यायनगोत्रोत्पन्नो यः कश्चिदप्रसिद्धो नैयायिकः प्राकृति-कमनुष्य एवासीत् न तु ऋषिः इयं हि तेषां बलवती युक्तिर्ब-लवत्प्रमाणमपि तथाहि कुसुमाञ्जलेरनुक्रमणिकायां १२ पृष्ठे

"ततश्च भाष्यकारो वात्स्यायनगोत्रोत्पन्न इति सि-ध्यति । पक्षिलस्वामीतिनाम्नापि स न ऋषिरिति प्रती-यते । ऋषीणां तथाविधनाम्नः क्वचिदप्यश्रवणात् । यद-क्षपादप्रतिम इति वार्त्तिकश्लोके भारद्वाजेनेत्यस्य भारद्वाज-गोत्रोत्पन्नेनेतिवत् वात्स्यायन इत्यस्यापि वात्स्यायनगोत्रोत्प-न्न इत्यर्थस्यैव प्रतीतिर्भवति । यदक्षपादप्रतिम इत्यनेन

भाष्यकर्तुरक्षपादवत् न्यायवीद्याप्रवीणत्वमेव प्रतीयते न तु ऋषित्वमिति ।"

अस्य लेखस्यायमाशयः सूत्रकाराः कदाचिन्महर्षयो भवेयुर्भाष्यकारास्तु मनुष्या एव तत्तन्महर्षिगोत्रोत्पन्नाः। एवं सति व्याकरणमहाभाष्यकारः पतञ्जलिरपि तद्गोत्रोत्पन्न एव तथा सति याज्ञवल्क्यस्य ? महर्षेः सूर्यार्घ्यदानसमयेऽञ्जलौ पतित इति अन्वर्थनामबोधिका पौराणिकी कथा कुत्र गच्छेत् ? एवं बोधायनादयोऽपि तत्तद्गोत्रोत्पन्ना एव गोत्रप्रवर्तकस्तु किमपि शशशृङ्गं वा खपुष्पं वा पाषाणो वा न तु पण्डितो नापि ग्रन्थकार इति ।

"पक्षिलस्वामीतिनाम्नापि स न ऋषिरिति प्रतीयते । ऋषीणां तथाविधनाम्नः क्वचिदप्यश्रवणात् ।" इत्यनेन महत्पाण्डित्यं बहुज्ञत्वं च प्रकाशितं भवति ।

किं तु वाचस्पतिमिश्रेण भामत्यामादौ उक्तम्

"मार्तण्ड–तिलकस्वामि–महागणपतीन् वयम् ।
विश्ववन्द्यान्नमस्यामो सर्वसिद्धिविधायिनः ॥"

अत्र वेदान्तकल्पतरुटीकाकारादयः पद्यमिदं

"मार्त्तण्डस्य सदा पूजां तिलकस्वामिनस्तथा ।
महागणपतेश्चैव कुर्वन् सिद्धिमवाप्नुयात् ॥"

इति याज्ञवल्क्यस्मृति(१ अध्यायस्य २९४ श्लोक)मूलकमिति वदन्तीति तिलकस्वामी देवविशेष इति निर्णीतं(१) भवति ।

अपि च चतुर्वर्गचिन्तामणौ प्रायश्चित्तखण्डे महिषीहरण-

---

(१) मिताक्षरासहितमुद्रितयाज्ञवल्क्यस्मृतौ तिलकं स्वामिनम्नयेति पाठोऽन्यः विस्तरस्तु वाचस्पतिमिश्रचरिते मया निरूपयिष्यते ।

प्रायश्चित्तप्रकरणे "देवस्वामी(१)

यो विप्रो महिषीं हत्वा परकीयां धनातुरः ।
स गत्वा नरकं घोरं भुवि चाण्डालवान् भवेत् ॥
न तस्य निष्कृतिर्नास्ति गुरुचान्द्रायणादिह ॥"

इति स्मृतिवचनेन देवस्वामिनो महर्षित्वं सिद्धम् । अत्र देवस्वामिपदेन देवलो ग्राह्य इति न भ्रमितव्यम् । यतोऽस्मिन्नेव चतुर्वर्गचिन्तामणौ भूमिहरणप्रायश्चित्तप्रकरणे

---

(१) श्रीनरसिंहीये प्रयोगपारिजाते षोडशकर्मकाण्डे संस्कारनिरूपणे आरम्भ एव

"मनुर्बृहस्पतिर्दक्षो गौतमोऽथ यमोऽङ्गिराः ।
योगीश्वरः प्रचेताश्च शातातपपराशरौ ॥
संवर्तोशनसौ शङ्खलिखितावत्रिरेव च ।
विष्ण्वापस्तम्बहारीता धर्मशास्त्रप्रवर्तकाः ॥
एते ह्यष्टादश प्रोक्ता मुनयो नियतव्रताः ।
जाबालिर्नाचिकेतश्च स्कन्दो लौगाक्षिकश्यपौ ।
व्यासः सनत्कुमारश्च सन्तनुर्जनकस्तथा ॥
व्याघ्रः कात्यायनश्चैव जातूकर्ण्यः कपिञ्जलः ।
बौधायनश्च काणादो विश्वामित्रस्तथैव च ॥
पैठीनसिर्गोभिलश्चेत्युपस्मृतिविधायकाः ।
वसिष्ठो नारदश्चैव सुमन्तुश्च पितामहः ॥
विष्णुः कार्ष्णाजिनिः सत्यव्रतो गार्ग्यश्च देवलः ।
जमदग्निर्भरद्वाजः पुलस्त्यः पुलहः क्रतुः ।
आत्रेयश्च गवेयश्च मरीचिर्वत्स ? एव च ।
पारस्करश्चर्ष्यशृङ्गो बैजा ? वामस्तथैव च ।
इत्यन्ये स्मृतिकर्तारः एकविंशतिरीरिता ॥" इत्यादि ।

आश्वलायन-देवस्वामि—शौनक-मार्कण्डेय—भृग्वादीनां वचनानि तत्र तत्र प्रमाणत्वेनोद्धृतानीति तेऽपि प्रकीर्णकस्मृतिकारका एवेति ।

देवलवचनमुक्त्वाऽनुपदमेव यथाह "देवस्वामी

ग्रामं वा क्षेत्रमात्रं वा केदारं भूमिमेव वा।
विप्राधीनं हरेद्राजा यमलोकमवाप्नुयात् ॥
पश्चाद्भूमिमुपागम्य क्रिमिराशिर्भवेन्मले ॥"

एवमेवमनेकत्र देवस्वामिस्मृतिवचनानि समुद्धृतानि । अत एव तार्किकरक्षाटीकायां "पक्षिलस्वामी" "पक्षिलमुनि" रित्युक्तमपि सङ्गच्छते ।

अपि च "यदक्षपादप्रतिम इति न्यायवार्तिकश्लोके भारद्वाजेनेत्यस्य भारद्वाजगोत्रोत्पन्नेनेतिवत् वात्स्यायन इत्यस्यापि वात्स्यायनगोत्रोत्पन्न इत्यर्थस्यैव प्रतीतिर्भवति" इति यदुक्तं भारद्वाजेनेत्यस्य भारद्वाजगोत्रोत्पन्नेन अत्र गोत्रोत्पन्न इति कस्य शब्दस्यार्थः ? इति महामहोपाध्याया एव जानन्ति । अक्षपादप्रतिम इत्यनेनापि भाष्यकारस्य न्यायविद्याप्रवीणत्वं महाशयानामनुमतम् अर्थात् अक्षपादस्य न्यायविद्याप्रवीणत्वमेव न तु कर्तृत्वम् अक्षपादप्रतिभ इति पाठे अक्षपादप्रतिम इति वा पाठे प्रतिमाशब्दस्य प्रतिभाशब्दस्यापि प्रवीणत्वमेवार्थो महाशयसम्मतः । अत्र विवेचका एव प्रमाणम् ॥

अन्ये तु कालात्ययापदिष्टः कालातीत इति १ अध्याये २ आह्निके ९ सूत्र(१)व्याख्याने तात्पर्यटीकायां वाचस्पतिमिश्रेण लिखितम् "एवं व्यवस्थिते भाष्यकारः सूत्रं स्वपरमतश्लिष्टं व्याचष्टे" इत्युपक्रम्य "स्थूलतया एव दोषो भा-

---

(१) अत्र विजयनगरसंस्कृतसीरीजमुद्रितन्यायदर्शनपुस्तकानुसारेणाङ्काः ज्ञातव्या इति ।

ष्यकारेण नोद्भावितः यत्पुनर्भदन्तेन(१) कालातीतस्य व्याख्यानं कृतं" "तदेतद्भदन्तदूषणमेतद्व्याख्यानानभ्युपगमेन परिहरति । अवयवविपर्यासवचनं त्विति । अनभ्युपगमहेतुं पृच्छति । कस्मादिति । उत्तरं यस्येति ।" इति दृष्ट्वा समुद्धोपयन्ति यद्बुद्धात् परमवश्यमेव भाष्यकारस्य स्थितिरभ्युपगन्तव्या । तदप्यसत् । प्रथमतस्तु बुद्धस्य स्थितिनिर्णये ऽनेके मतभेदा उपलभ्यन्ते पुराणादिष्वपि तच्चर्चाया दर्शनात् तन्निर्णयस्तु बालक्रीडायितमिवाभाति । अथ यथाकथञ्चिन्निर्णयेऽपि भदन्तात् पश्चाद्भाविना वाचस्पतिमिश्रेण व्याख्यानकौशलपूर्वकं भदन्तमतखण्डनं प्रदर्शितमित्येवावगन्तव्यम् अन्यथा ब्रह्ममीमांसाभाष्ये "वैधर्म्याच्च न स्वप्नादिवत्" २ अध्याये २ पादे २९ सूत्रव्याख्याने भास्कराचार्येण शङ्कराचार्यमतखण्डने "ये तु बौद्धमतावलम्बिनो मायावादिनस्तेऽप्यनेन न्यायेन सूत्रकारेणैव निरस्ता" इति लिखितत्वात् भाष्यकारात् शङ्कराचार्यात् परं सूत्रकारः स्यादित्यादि ६४ पृष्ठे निपुणतरमुपपादितमधस्तात् ।

केचित्तु पक्षिलस्वामीत्यनेन स्वामीत्युपाधिधारिणो द्रामिल इति नाम्ना द्रविडत्वेन निश्चितस्य वात्स्यायनस्य सम्प्रति कञ्जीवरमिति प्रसिद्धे काञ्चीनगरे स्थितिरासीदिति । "वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः" २ अध्याये १ आह्निके ४२ सूत्रभाष्ये "पचतीति स्थाल्यधिश्रयणमुदकासेचनं तण्डुलावपनमेधोपसर्पणमग्न्यभिज्वलनं दर्वीघट्टनं मण्डस्रावणमधोवतारणमिति" इत्यादि ओदनपाचनक्रियोदाहरणेन द्रविडत्वमेव द्रढयति यतो द्रविडदेशे

(१) बौद्धभेदे भदन्तशब्दस्त्रिकाण्डशेषकोशे द्रष्टव्यः ।

ओदनमेव भोज्यपदार्थेषूत्तमम् । अपि च कौटिल्यार्थशास्त्रात् प्रदीपः सर्वविद्यानामित्यादिवचनस्य समुद्धृतत्वात् अथ च "पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम्" ५ अध्याये २ आह्निके १० सूत्रभाष्ये दश दाडिमानीत्युदाहरणस्य व्याकरणमहाभाष्यादुद्धृतत्वात् कौटिल्यात् पतञ्जलेश्च पश्चात्कालभावी वात्स्यायनो न्यायभाष्यकार इति ख्रीष्टाब्दारम्भात् परं चतुर्थशताब्द्यामासीदिति वदन्ति । अपि च माध्यमिकसूत्र–नागार्जुनशतक–लङ्कावतारसूत्रमूलकानां न्यायसूत्राणां व्याख्यातत्वात् ख्रीष्टाब्दारम्भात् पश्चात्कालभावित्वं वात्स्यायनस्य दुर्वारमित्यपि वदन्तीति ।

अत्र समालोचनम् । स्वामीत्युपाधिर्वा पक्षिलस्वामीत्येकं नाम वेति जिज्ञासायां मार्तण्डतिलकस्वामी देवस्वामीति(१)वदेकं नामैवेति नात्र किञ्चिद्बाधकं दृश्यत इत्युपाधिधारणकल्पनं कल्पनामात्रम् ।

व्यवस्थापकमहाशयेनैवेदमप्युक्तं यन्न्यायभाष्यकर्ता वात्स्यायनः कामसूत्रकर्ता च वात्स्यायनः अर्थशास्त्रकर्ता च नैकव्यक्तिकः किन्तु भिन्न एव परन्तु न्यायभाष्यकर्तुर्वात्स्यायनस्य द्रविडत्वसाधनप्रसङ्गे त्वरया "विष्णुगुप्तस्तु कौटिल्यश्चाणक्यो द्रामिलोंऽगुलः" इत्यादिकोशेन कौटिल्यस्यार्थशास्त्रप्रणेतुरेव द्रामिल इत्यपि नामेति नावधारितम् । हठात् तथात्वे ऽपि द्रामिलशब्देन कया व्युत्पत्त्या द्रविडत्वं तस्य प्रसाध्यत इति न बुद्ध्यामहे । यतः 'सकलं' 'शकलं'

(१) यथा मार्तण्डतिलकस्वामी देवविशेषो देवस्वामी च महर्षिः स्मृतिकारकस्तथा प्रतिपादितमधस्तात् ।

'सकृत्' 'शकृत्' इत्यादयो भेदा वैयाकरणैः प्रदर्शिता इति । अथ द्राविडत्वे ऽपि काञ्च्यां निवासे असाधारण इतरव्यावर्तको हेतुः ओदनपाचनप्रकार एव प्रदर्शित इत्यनेन काञ्चीं विहाय द्रविडदेशं विहाय वा भारतवर्षमात्रे केऽपि ओदनपाचनं तद्भोजनं वा न जानन्तीति निष्पन्नं भवतीति बहुज्ञैः समालोचनीयम् ।

बहूनि न्यायसूत्राणि लङ्कावतारसूत्र–नागार्जुनकृतमाध्यमिकसूत्र–आर्यदेवकृतशतकेभ्यः समुद्धृतानीति न्यायसूत्रपाठनिर्णयप्रस्तावे निराकृतमधस्तात् तन्निराकरणेनात्रोक्तमपि निराकृतं भवति ।

यत्तु कौटिल्यार्थशास्त्रव्याकरणमहाभाष्याद्वचनानि समुद्धृतानि न्यायभाष्यकर्त्रा वात्स्यायनेन तदत्र विनिगमकाभावेन न्यायभाष्यादेव कौटिल्येन व्याकरणभाष्यकारेण च कथं न समुद्धृतानीति ? ।

यदि च न्यायदर्शनवात्स्यायनभाष्योत्थैव तदाविर्भावसमयो देशश्च निश्चीयते तदा युक्तियुक्तं तत् प्रदर्श्यते ।

वेद–धर्मशास्त्र–पुराणेषु द्वौ गोतमौ निरूपितौ एकश्च राहूगणस्य पुत्रोऽपरश्च दीर्घतमा अन्धः । तत्र अन्धस्य दीर्घतमसः शास्त्रकर्तृत्वं न सम्भवतीति राहूगणस्यैव ऋग्वेदादिसूक्तस्मारकत्वात् शास्त्रकर्तृत्वमिति २२ पृष्ठे प्रतिपादितमधस्तात् । स च राहूगणो गोतमो मिथिलाभूपतेर्विदेघराजस्य विदेहराजस्य वा पुरोहित आसीत् तद्राज्यस्थानं च सरस्वतीनद्याः पूर्वस्मिन् सदानीरराया नद्याश्च(१) पश्चिमे देशे इति सर्वमुपपादितं शतपथब्राह्मणे १ काण्डे ४ अध्याये । अयमेव देशो मिथिलादे-

(१) सदानीरा उत्तरवङ्गे वगुरामण्डलेऽद्यापि प्रसिद्धा वतत ।

श इति वाल्मीकिरामायणादिभ्योऽपि निश्चीयते। अपि च वायुपुराणे २३ अध्याये

"तत्रापि मम ते पुत्रा(१) भविष्यन्ति तपोधनाः।
अक्षपादः कणादश्च उलूको वत्स एव च ॥ २०३ ॥

इत्यनेन गोतमसमीपवर्ती वा गौतमसमीपवर्ती वात्स्यायनः प्रतिभाति। अन्यच्च पद्मपुराणीयरामाश्वमेधप्रकरणसमालोचनेन श्रीरामचन्द्रेण अयोध्योपकण्ठे सरय्वा उत्तरे तटेऽश्वमेधयज्ञः कृतः स च देशो वात्स्यायनस्यातिप्रिय इति शतशस्तत्कथाभाग भुजगेश्वरं पप्रच्छेति विज्ञायते स एव देशो मिथिलासम्बद्धस्तन्निवासस्थानमिति सम्भाव्यते। अयोध्यागर्भीसरकोशलमिथिलादेशयोश्च महादृढः सम्बन्ध इति सार्वजनीनप्रसिद्धिरिति।

एवं स्थिते वात्स्यायनेन न्यायभाष्ये १ अ. २ आ. अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलमिति १२ सूत्रव्याख्याने "नवकम्बलोऽयं माणवक" इत्युदाहृतम् अत्र कम्बलशब्दस्य प्रयोगो द्वादशावृत्त्या कृतः। लौकिकास्तु नेपालादागतोऽयं नवकम्बलत्वादित्युदाहरन्तीति प्रशस्ताः कम्बला नेपालदेशीया इति वात्स्यायनो नेपालसमीपवर्त्ती। अपि च २ अ. १ आ रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणमिति ३७ सूत्रव्याख्याने "नदी पूर्णा गृह्णने" "नीडोपघातादपि पिपीलिकाण्डसञ्चारो भवति" "पुरुषोऽपि मयूरवासितमनुकरोति" एवं

(१) शिष्ये पुत्रत्वोपचारः "उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता" इति मनु। इद निपुणतरमुपपादित न्यायकन्दलीभूमिकायामस्माभिः।

नैकदेशत्रासमादृश्येभ्योऽर्थान्तरभावादिति ३८ सूत्रव्याख्याने "पूर्वोदकाविशिष्टे खलु वर्षोदके शीघ्रतरत्वं स्रोतसो बहुतरफेनफलपर्णकाष्ठादिवहनं" "यथा सर्पादीनामिति" एतैरुदाहरणैरपि मिथिलादेशीयः प्रतिभाति । एवं ५ अ.२ आह्निके पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकमिति १० सूत्रव्याख्याने "दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डः" एतैरुदाहरणैस्तु मैथिल एव प्रतिभाति पललपिण्डो वङ्गदेशे मिथिलादेशे वा भवतीति षडपूपाः दश दाडिमानीत्युक्त्या वङ्गदेशीयत्वव्यावृत्त्या मैथिल एव वङ्गदेशे तेषां प्रशस्तानामभावादिति । पललपिण्डोक्त्या च दाक्षिणात्यमात्रव्यावृत्तिरिति ।

केचित्तु समानतन्त्रासिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः इति १ अ० १ आ० २९ सूत्रव्याख्याने न्यायदर्शनवात्स्यायनभाष्ये(१) "पुरुषकर्मादिनिमित्तो भूतसर्गः कर्महेतवो दोषाः प्रवृत्तिश्च स्वगुणविशिष्टाश्चेतनाः असदुत्पद्यते उत्पन्नं निरुद्ध्यत इति योगानाम् ।" इति ।

अपि च सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध इति १ अ० २ आ० ६ सूत्र व्याख्यानेऽपि तस्मिन्नेव भाष्ये "यथा सोऽयं विकारो व्यक्तेरपैति नित्यत्वप्रतिषेधात् । अपेतोऽप्यस्ति विनाशप्रतिषेधात् ।" इति च वर्तते । अयमेव लेखः पातञ्जलसूत्रभाष्ये विभूतिपादे एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याता इति १३ सूत्रस्य व्याख्याने "तदेतत् त्रैलोक्यं व्यक्तेरपैति नित्यत्वप्रतिषेधात् अपेतमप्यस्ति विनाशप्रतिषेधात् ।" इति दृश्यते । अत्र योगशास्त्राचार्यपतञ्जलेरेव

(१) विजयनगरसंस्कृतसीरीजमुद्रिते पुस्तके ३८ पृष्ठे ।

ग्रहणम् अनेन पतञ्जलिना मौर्यराजस्य नाम स्वग्रन्थे लिखितम् स च राजवंशः ख्रीष्टसमयात् १४० वर्षेभ्यः पूर्वं समाप्त इति तस्मिन् समये तदासन्ने वा समये पतञ्जलिरभूत् ततः परं पातञ्जलमतनिदर्शको न्यायभाष्यकर्ता वात्स्यायनोऽभूदित्याहुः । तदसत् योगानामित्यनेन(१) शिवसंहिताशिवस्वरोदययोः कर्त्तुः शिवस्य कस्मान्न ग्रहणम् ? याज्ञवल्क्यगीतायाः योगियाज्ञवल्क्यस्मृतेः कर्तुर्याज्ञवल्क्यस्य कस्मान्न ग्रहणम् ? योगवाशिष्ठकर्तुर्वसिष्ठस्य कस्मान्न ग्रहणम् ? एतेषां विषयाणां परमार्थतो भङ्ग्यन्तरेण वा तत्रतत्र प्रतिपादनात् । अपि च मौर्यवंशसमाप्तिसमयश्च उक्तसमयो न सम्भवतीति पूर्वं निरूपितत्वाच्च ।

यश्च पातञ्जलसूत्रव्यासभाष्ये दर्शितः स चांशः स्वयमेव कथं न पूर्वापरपाठेन समालोचनेन निर्णीयते सा चान्योक्तिरेव "अपर आह धर्मानभ्यधिको धर्मी पूर्वतत्त्वानतिक्रमात् पूर्वापरावस्थाभेदमनुपतितः कौटस्थ्येन विपरिवर्तेत यद्यन्वयी स्यादित्ययमदोषः कस्मात् एकान्तानभ्युपगमात् तदेतत् त्रैलोक्यं व्यक्तेरपैति नित्यत्वप्रतिषेधात् अपेतमप्यस्ति विनाशप्रतिषेधात् संसर्गाच्चास्य सौक्ष्म्यं सौक्ष्म्याच्चानुपलब्धिरिति ।"

अवशिष्टं प्रसह्य गृहीतस्य पतञ्जलेरर्वाचीनत्वं तत्र विचार्यते । पतञ्जलिर्युक्तकालावस्थायी तदा "द्वापरेद्वापरे विष्णुर्व्यासरूपी महामुने ।" इति विष्णुपुराणाद्युक्तो योगसूत्रभाष्यकारो वेदव्यासः कुत्र तिष्ठेत् अपि च स्कन्दपुराणीयहालास्यखण्डे भावप्रकाशे

(१) योगस्य यथा चिरन्तनत्वं तथा ५० पृष्ठे प्रतिपादितमधस्तात् ।

च चरकप्रादुर्भावप्रकरणे पतञ्जलेरितिहासवर्णनात् स्कन्द-पुराणकर्ता वेदव्यासः भावप्रकाशनिर्दिष्टेतिहासमूलकर्ता च कुत्र तिष्ठेत् कात्यायन-लौगाक्षिसूत्रेषु गोत्रप्रकरणे निर्दिष्टः पतञ्जलिरिति सूत्रकर्तारोऽपि कुत्र तिष्ठेयुः । यथा पुराणानां नार्वाचीनत्वं तथा प्रतिपादितमधस्तात् । तस्मान्नार्वाचीनत्वं पतञ्जलेरिति ॥

अन्ये तु मद्रासदेशस्थ-अदिआरपुस्तकालयस्थेषु पुस्तकेषु एका न्यायसूत्रवृत्तिर्वात्स्यायनभाष्यादपि प्राचीना वर्तत इति तत्रत्यसूचीपत्रे ९१ । ९२ पृष्ठे लिखितमस्तीति न्यायसूत्राणां व्याख्यानेषु वात्स्यायनभाष्यं नातिप्राचीनमिति बोधयन्ति ।

तस्याः प्रतिलिपेः द्वित्राणि पत्राणि वाराणसीस्थराजकीयसंस्कृतपाठशालीयकार्यालये वर्तन्ते इति मया सा वृत्तिः समालोचिता तस्या रचनायाः प्रकारोऽतीव नवीनोऽप्रौढोऽस्पष्टार्थ इति केनचिदाधुनिकनैयायिकेन रचिता इति प्रतिभाति ।

अपरे तु सूत्रेभ्यो भिन्नानि न्यायदर्शनवात्स्यायनभाष्ये कानिचिद्वाक्यानि तेषामपि व्याख्यानान्यवलोक्य तर्कयन्ति खलु भाष्यात् प्राचीनं न्यायसूत्राणां किमपि व्याख्यानं वार्त्तिकं वा आसीद् यदिदानीं नोपलभ्यत इति । तदसत् इदानीं नोपलभ्यते किं तु उद्द्योतकरापरपर्यायेण भारद्वाजेन न्यायवार्त्तिककृता ऋषिकल्पेनाचार्येण वाचस्पतिमिश्रेण शिवावतारेणोदयनाचार्येण वर्द्धमानोपाध्यायेन वेदादिभाष्यकर्तृभिर्माधवाचार्यैरपि नोपलब्धा नापि चर्चितेति तत् किं मूषिकविषाणशशशृङ्ग-खपुष्पात्मकमासीत् ? तस्मान्नासीदेव । किं तु

"सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः ।

स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥"

इति पराशरोपपुराणीयाष्टादशाध्यायस्थभाष्यलक्षणस्य समन्वय एव । स्वपदानि च वर्ण्यन्तेऽत्र पदानीत्यस्य "पदसमूहो वाक्यमिति" न्यायवार्त्तिकात् स्ववाक्यानि च वर्ण्यन्ते इत्याशयोऽवगम्यते । तस्मात् तानि वाक्यानि भाष्यकारस्यैव न त्वन्यस्य । अत एव भगवता भाष्यकारेण कारणद्रव्यस्य प्रदेशशब्देनाभिधानात् नित्येष्वप्यव्यभिचार इति २ अध्याये २ आह्निके १७ सूत्रव्याख्याने(१) "कस्मात् पुनः सूत्रकारस्यास्मिन्नर्थे सूत्रं न श्रूयते इति शीलमिदं भगवतः सूत्रकारस्य बहुष्वधिकरणेषु द्वौ पक्षौ न व्यवस्थापयति तत्र शास्त्रसिद्धान्ततत्त्वावधारणं प्रतिपत्तुमर्हतीति मन्यते । शास्त्रसिद्धान्तस्तु न्यायसमाख्यातमनुमतं बहुशाखमनुमानमिति ।"

उदयनाचार्यास्तात्पर्यपरिशुद्धौ तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्त इति सूत्रव्याख्याने "भाष्यकारस्य रीतिरियं स्वमतिभया व्याख्यान"मित्यादि । विश्वनाथन्यायपञ्चाननैरपि न्यायसूत्रवृत्तौ पृ. २७ पं. १ अभ्युपगमसिद्धान्तन्यायेन भाष्यकारस्यापि सूत्रकर्तृत्वं सूचितम् ।

एतावता सिद्धं भवति भाष्यकारेण क्वचित् स्वातन्त्र्येण वैशद्यार्थं वाक्यानि रचितानि तानि व्याख्यातान्यपीति ॥

अपि च शास्त्रकाराणां रीतिरियं ऊहापोहविचारे आचार्याणां नामानि क्वचिद्वचनान्यपि समुद्धरन्ति तेन न पृथक् शास्त्राणि ग्रन्था वा अनुमेयाः यथा शारीरकसूत्रे

---

(१) विजयनगरसंस्कृतसीरीजमुद्रिते पुस्तके १०८ पृष्ठे द्रष्टव्यम् ।

आश्मरथ्यादयः पाणिनिसूत्राष्टाध्याय्यामपि स्फोटायन–भारद्वाज–गार्ग्यादयश्च।

आधुनिका अपि विद्वांसः सभायां स्ववक्तृतायां स्वमतानि निरूपयन्ति यदि तानि अन्यः कश्चित् स्वग्रन्थे उद्धरेत् तदा न शास्त्रान्तरं ग्रन्थान्तरं वानुमेयं भविष्यतीति। वेदेषु ब्राह्मणोपनिषत्सु अलौकिकपुरुषनिर्मितेष्वपौरुषेयेषु वा आयुर्वेदेऽपि "भवन्ति चात्र" इत्यादिना उक्तं तत्र न वेदान्तरमनुमेयम्।

न्यायभाष्यस्य द्विविधं पुस्तकमुपलभ्यते द्विविधमपि पुरातनं तालपत्रेषु लिखितं तत्रैकं प्रायः सम्पूर्णं पत्रान्ते "योक्षपादमृषिं न्यायः" इत्यादिपद्यं मध्ये ऽपि बहुविशेषो वर्त्तते। अपरं च अन्त्यश्लोकहीनं मध्ये ऽपि क्वचित् खण्डितम्। एतत्पुस्तकद्वयं जगन्नाथपुर्यां गोवर्द्धनमठे वर्तते एतन्मूलकान्येव प्रायो बहूनि आदर्शपुस्तकानि उपलभ्यन्ते। इदं ग्रन्थन्यूनाधिक्यं लेखकशोधककृतं तत्रतत्र समुपलभ्यत इत्यनुमीयते इति।

वात्स्यायनभाष्याद्भिन्नान्यर्वाचीनानि अन्यान्यपि न्यायसूत्रव्याख्यानानि वर्त्तन्ते। यथा वाचस्पतिमिश्रकृतो न्यायसूचीनिबन्धः। उदयनाचार्यकृतं बोधसिद्धिर्बोधशुद्धिर्वेत्यपरनामधेयं न्यायपरिशिष्टम्। वर्द्धमानोपाध्यायकृतमन्वीक्षानयतत्त्वबोधाख्यम्। इत्यादि पूर्वं सूचितमेव विस्तरेण तत्तदाचार्याणां समयनिरूपणप्रस्तावे ऽग्रे ऽपि निरूपयिष्यते।

अपराण्यपि व्याख्यानानि वर्तन्ते। जयन्तकृता न्यायसिद्धान्तमञ्जर्याख्या महावृत्तिः इयं विजयनगरसंस्कृतसीरीजनामकपुस्तकावल्यां मुद्रिता। तत्कृता न्यायकलिका लघुवृत्तिः(१)।

---

(१) न्यायसूत्रपाठस्यातिदुरूहत्वं निरूपितमधस्तात् अत एव

विश्वनाथन्यायपञ्चाननकृता गोतमसूत्रवृत्तिः(१) । वृत्तिरियं द्विवारं कलिकातानगरे वाराणस्यामपि मुद्रिता परं त्वशुद्धिबहुला अनेकेषु पत्रेषु पङ्क्तिद्वयेन पङ्क्तित्रयेण खण्डिता वर्तते ।

वेदान्तिमहादेवकृता मितभाषिण्याख्या न्यायसूत्रवृत्तिः(२) ।

नागेशभट्टकृता न्यायसूत्रवृत्तिः पूर्वं मया दृष्टा इदानीं सा नोपलभ्यते । अनेनैव नागेशभट्टेन पाणिनिव्याकरणे

---

बहुभिराचार्यैर्द्विविधं व्याख्यानं कृतम् प्रथमं न्यायभाष्यानुसारिसूत्रपाठानुसारि द्वितीयं तु स्वसिद्धान्तानुसारि । यथा वाचस्पतिमिश्रेण १ तात्पर्यटीका २ न्यायसूची च । उदयनाचार्येण १ तात्पर्यपरिशुद्धिः २ न्यायपरिशिष्टं च । वर्द्धमानोपाध्यायेन १ न्यायनिबन्धप्रकाशः २ अन्वीक्षानयतत्त्वबोधश्च । विश्वनाथपञ्चाननेन १ न्यायसूत्रवृत्तिः २ न्यायालोकः । एवमन्यैरपि ।

(१) अस्मन्निकटे वर्त्तमानेऽधःप्रतिपादिते पुस्तके मुद्रितपुस्तकादन्तेऽयं विशेषः ।

"एषा मुनिप्रवरगोतमसूत्रवृत्तिः
श्रीविश्वनाथकृतिना सुगमाऽल्पवर्णा ।
श्रीकृष्णचन्द्रचरणाम्बुजचञ्चरीक-
श्रीमच्छिरोमणिवचःप्रचयैरकारि ॥
कठिनार्थपदां कृतिं ममैतां मृदुनि त्वच्चरणे समर्पयामि ।
अपराधमिमं प्रभो क्षमेथाः ननु नारायणदेव दीनबन्धो ॥
रसबाणतिथौ १५५६ शकेन्द्रकाले
बहुले कामतिथौ शुचौ सिताह्ने ।
अकरोन्मुनिसूत्रवृत्तिमेतां
ननु वृन्दाविपिने स एव विश्वनाथः ॥"

(२) अस्मन्निकटेऽस्या वृत्तेः १ । २ । ३ । ४ अध्याया वर्तन्ते ।

न्यायादिशास्त्रेषु धर्मशास्त्रे साहित्यादिषु चानेके ग्रन्था रचिताः।

महामहोपाध्यायश्रीभट्टाचार्यचूडामणितनयश्रीभट्टाचार्यसार्वभौमरामभद्रविनिर्मितं न्यायरहस्याख्यं व्याख्यानम्(१)

श्रीमद्राधामोहनगोस्वामिकृता न्यायसूत्रविवरणाख्या वृत्तिः । वृत्तिरियं वाराणस्यां पण्डितपत्रे मुद्रिता तस्मादुद्धृत्य पृथगपि मुद्रिता । अनेनैव राधामोहनगोस्वामिना रघुनन्दनभट्टाचार्यकृतस्मृतितत्त्वानि व्याख्यातानि माथुरी–जागदीशी–गादाधरीग्रन्थोपरि क्रोडपत्राण्यपि रचितानि।

श्रीदेमद्गुरुवरमहामहोपाध्यायश्रीकैलासचन्द्रभट्टाचार्यशिरोमणिकृता भाष्यच्छायाख्या न्यायसूत्रवृत्तिः । वृत्तिरियं न्यायदर्शनवात्स्यायनभाष्यार्थबोधिका ग्रन्थसंख्ययाऽपि भाष्येण समाना । शोकस्थानम् आरम्भात् प्रभृति पञ्चमाध्यायस्य द्वितीयाह्निके ५ सूत्रव्याख्यापर्यन्तं ग्रन्थं निर्माय महाशयाः पाञ्चभौतिकं देहं सन्त्यज्य परमपदं गतवन्त इति ।

न्यायसूत्राणां सर्वेषां व्याख्यानानां शिरोमणिभूतं नवीनन्यायत्वेन व्यवह्रियमाणानां तत्त्वचिन्तामण्यादिन्यायमहानिबन्धानामाधारभूतं न्यायवार्त्तिकं वरीवर्ति किन्तु न केवलसूत्राणां नापि केवलभाष्यस्य(२) व्याख्यानमपि तूहापोहविचारपूर्वकन्यायसिद्धान्तव्यवस्थापकं भाष्यसंवलितसूत्रव्याख्यानमित्यनुपदं वर्णयिष्यते ॥

(१) इदं व्याख्यानमस्मन्निकटे चतुर्थाध्यायान्त वर्त्तते । पत्राणि १६८ श्लोकसंख्या ४२००

(२) भाष्यस्य टीका न्यायचन्द्रिकाख्या रामचन्द्रकृता ऽतीव मनोहरा वर्तते ।

## अथ न्यायवार्त्तिककर्तुः परमर्षेर्भारद्वाजस्य चरितम् ।

न्यायवार्त्तिककारो भारद्वाजः कस्मिन् देशे कस्मिन् काले आविर्भूत इति निश्चयाभावेऽपि इदानीमनेके सिद्धान्तास्तद्विषया आविर्भूता इति तत्परीक्षापूर्वकं किञ्चिदुच्यते ।

न्यायवार्त्तिकान्ते

"यदक्षपादप्रतिभो भाष्यं वात्स्यायनो जगौ ।
अकारि महतस्तस्य भारद्वाजेन वार्त्तिकम् ॥"

"इति परमर्षिभारद्वाजकृतं न्यायत्रिसूत्रीवार्त्तिकं समाप्तम्" इति त्रिसूत्रीप्रकरणान्ते दृश्यते(१) ।

"इति पाशुपताचार्यश्रीभारद्वाजोद्द्योतकरकृतौ न्यायसूत्रवार्त्तिके पञ्चमोऽध्यायः(२)

इति वार्त्तिककारोक्त्या न्यायवार्त्तिककारः परमर्षिभारद्वाजः किं तु आचार्यवाचस्पतिमिश्रेण तात्पर्यटीकारम्भे "अथ भगवताक्षपादेन निःश्रेयसहेतौ शास्त्रे प्रणीते व्युत्पादिते च भगवता पक्षिलस्वामिना किमपरमवशिष्यते यदर्थं वार्त्तिकारम्भ इति शङ्कां निराचिकीर्षुः सूत्रकारोक्तप्रयोजनानुवादपूर्वकं वार्त्तिकारम्भप्रयोजनं दर्शयति । यदक्षपाद इति । यद्यपि भाष्यकृता कृतव्युत्पादनमेतत् तथापि दिङ्नागप्रभृतिभिरर्वाचीनैः कुहेतुसन्तमससमुत्थापनेनाच्छादितं शास्त्रं न तत्त्वनिर्णयाय पर्याप्तमित्युद्द्योतकरेण स्वनिबन्धोद्द्योतेन तदपनीयत इति ।"

(१) पाठोऽयं महामहोपाध्यायश्रीयुक्तकैलासचन्द्रभट्टाचार्यशिरोमणिमहाशयानां पुस्तके वर्तते ।

(२) पाठोऽयं वाराणसीस्थपण्डितवर्यश्रीविनयरामशर्मणः पुस्तके वर्तते ।

अपि च श्रीधराचार्येण न्यायकन्दल्यां चित्सुखाचार्येण तत्त्वप्रदीपिकायामपि न्यायवार्त्तिककारमुद्द्योतकराचार्यनाम्नाजुहावेति न्यायवार्त्तिककारस्य मुख्यं नाम भारद्वाजः उद्द्योतकर इत्युपनाम वा गुणवशान्नाम इति अनुमीयते । नैतच्चित्रम् अनेके आचार्या नामद्वयेन प्रसिद्धा यथा, महर्षिः कृष्णद्वैपायन एव वेदव्यासः । महर्षिर्गोतम एव अक्षपादः । महर्षिर्वात्स्यायन एव पक्षिलस्वामी । महर्षिः कणाद एव कणभुग् वा कणभक्षः । प्रशस्तपाद एव प्रशस्तकरः । कात्यायन एव पारस्करः । सत्याषाढ एव हिरण्यकेशः । एवं मन्येऽपि ।

निबन्धकारास्तु कृष्णद्वैपायनस्य स्थाने वेदव्यासमपि विहाय "व्यासः" मीमांसका यथा प्रभाकरस्य स्थाने "गुरवः" भट्टकुमारिलस्य स्थाने "भट्टाः" पार्थसारथिमिश्रस्य स्थाने "मिश्राः" । अन्येऽपि गुरुचरणाः पितृचरणा यज्ञपत्युपाध्यायस्य स्थाने उपाध्याया इति लिखन्ति स्म । इति चिरन्तनसम्प्रदायानुसारेण न्यायवार्त्तिककारं भारद्वाज(१)मुद्द्योतकरनाम्नालिखन्ति स्म आचार्या इति ।

अयं भारद्वाज उद्द्योतकराचार्यः कस्मिन् देशे कस्मिन् काले च आविर्भूत इति विचारे काश्मीरदेशीय इति केचिद्वदन्ति तन्त्रेषु केरलाम्नाय–चीनाम्नाय–महाचीनाम्नाय–शैवागमापरनामधेयकाश्मीराम्नायनाम्ना नानासम्प्रदायदर्शनाद् वार्त्तिकपुस्तके क्वचित् "पाशुपताचार्य–उद्द्योतकरविरचितं न्यायसूत्रवा-

(१) अनुमीयते ऽनेनैव भारद्वाजेन वैशेषिकसूत्रवृत्तिरपि प्रणीता न्यायवार्त्तिके ऽनेकत्र प्रशस्तपादभाष्यस्थवाक्यानि "इति शास्त्र"मित्याकारेण समुद्धृतानीति ।

र्त्तिकमिति" दर्शनात् । तत्र शिवादित्यमिश्रेऽपि व्योमशिवाचार्य इतिप्रयोगात् सूत्रकारभाष्यकारयोर्मिथिलादेशे निवासात् । तात्पर्यटीका–परिशुद्धि–प्रकाश–वर्द्धमानेन्दु–तात्पर्यमण्डनकाराणां मैथिलत्वात् मध्ये वार्त्तिककारस्य काश्मीरदेशीयत्वे प्रबलप्रमाणाभावात् वार्त्तिककारोऽपि मैथिल इत्यनुमाने बाधकाभावाच्च ।

एके तु वदन्ति न्यायवार्त्तिके पृ. ११० "गोपालकेन मार्गे ऽपदिष्टे एष पन्थाः स्रुघ्नं गच्छती"ति उदाहृतत्वाद्वार्त्तिककारो मालवदेशान्तर्गतपद्मावत्यां लब्धजन्मा स्थाण्वीश्वरस्थानस्थः पद्मावत्यां न्यायविद्याप्रचारबाहुल्यादिति ।

तन्न वाक्यारम्भ एव 'गोपालकेन'त्युक्तत्वात् न्यायाकरग्रन्थेषु न कोऽपि पद्मावतीनिर्मितो ग्रन्थो दृश्यत इति तस्य वाङ्मात्रत्वाच्च ।

न्यायवार्त्तिककारो भारद्वाजः कस्मिन् काले आविर्भूत इति प्रस्तूयते । न्यायवार्त्तिके पृ ११० पं. ७ "अहो धार्मिकं भदन्तस्य" पृ. ४४ पं. इति "कोऽन्यो भदन्ताद्वक्तुमर्हति ।" पृ. १३१ पं. १० "सौत्रान्तिकपक्षमाश्रित्य लक्षणं विचार्यते" पृ० १२० पं. ७ "वादविधानटीकाया" पृ. १२१ पं. २ "वादविधौ" इत्यादिलेखदर्शनात् बुद्धात् पश्चात् कालभावी इत्यनुमीयते । आचार्यवाचस्पतिमिश्रेण तत्तत्र "दिङ्नागमतं खण्डयति" "वासुबन्धवं लक्षणं खण्डयति" इत्यादिलिखितत्वात् कश्चिदर्वाचीनो भारद्वाजोद्द्योतकर इति निष्पन्नं भवति परं तु तात्पर्यटीकारम्भ एव ।

"इच्छामि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।
उद्द्योतकरगवीनामतिजरतीनां समुद्धरणात् ॥" इति ।

अत्र अतिजरतीनामुद्द्योतकरगवीणामित्युक्त्या अतिजीर्णानामतिपुरातनीनामित्यत्रगम्यते ततोऽपि दुस्तरकुनिबन्धपङ्कमग्नानामित्युक्तिरप्युक्तमेवार्थं द्रढयति तथा सति वाचस्पतिमिश्रसमयात् पूर्वं(१) भदन्तसमयात् परं न्यायवार्त्तिकग्रन्थनिर्माणमभूत् तदानीं भारद्वाज आसीदिति निर्णीयते ।

*अत्र सम्प्रदायविदः । वासवदत्ताख्यायिकायां पृ० २३५ "न्यायस्थितिमिवोद्द्योतकरस्वरूपा" मिति दर्शनात् १२०० वर्षेभ्यः पूर्वं वासवदत्ताकर्तुः स्थितया तत्पूर्वं न्यायस्थितिकर्त्ता भारद्वाज आसीत् । यथा शङ्कराचार्यः श्रौतस्मार्त्तधर्मस्थितिकर्त्ता शिवावतार(२)-*

---

(१) वाचस्पतिमिश्राणां ८९८ शाकाब्दे यथा स्थितिरासीत् तथा तच्चरिते ऽग्रे निरूपयिष्यते ।

(२) शिवावतारः प्रस्थानत्रयभाष्यप्रणेता शङ्कराचार्यः तत्स्थापितशृङ्गेरी-गोवर्द्धन-शारदा-ज्योतिर्मठेषु तच्छिष्याः शङ्कराचार्यनाम्ना प्रसिद्धाः ताराहस्यादितन्त्राणां कर्त्तापि गौडशङ्कराचार्यः इत्यादिशङ्कराचार्यभेदात् तच्चरितान्यपि नानाविधानि उपलभ्यन्ते किं तु *प्रस्थानत्रयभाष्यकर्तुरेव चरिते किञ्चिदुच्यते ।*

तथा चोक्तं कूर्मपुराणे पूर्वार्द्धे ३० अध्याये

"कलौ रुद्रो महादेवो लोकानामीश्वरः परः ।
तदेव साधयेन्नृणां देवताना च दैवतम् ॥ ३२ ॥
करिष्यत्यवताराणि शङ्करो नीललोहितः ।
श्रौतस्मार्तप्रतिष्ठार्थं भक्तानां हितकाम्यया ॥ ३३ ॥
उपदेक्ष्यति तज्ज्ञानं शिष्याणां ब्रह्मसंज्ञितम् ।
सर्ववेदान्तसारं हि धर्मान् वेदनिदर्शनात् ॥ ३४ ॥
ये तं प्रीता निषेवन्ते येन केनोपचारतः ।
*विजित्य कलिजान् दोषान् यान्ति ते परमं पदम् ॥ ३५ ॥*" इति ।

तथा शिवरहस्ये ऽपि नवमांशे १६ अध्याये

"शृणु देवि भविष्याणां भक्तानां चरितं कलौ ।
वदामि संग्रहेणैव श्रवणाद्भक्तिवर्द्धनम् ॥ ३ ॥

कल्यब्धौ मज्जमानांस्तान् दृष्ट्वानुक्रोशतोऽम्बिके ।
मदंशजातं देवेशि कलावपि तपोधनम् ॥ ६ ॥
केरलेषु तदा विप्रं जनयामि महेश्वरि ।
तस्यैव चरितं तेऽद्य वक्ष्यामि शृणु शैलजे ॥ ७ ॥
कल्यादिमे महादेवि सहस्रत्रितयात् परम् ।
सारस्वतास्तथा गौडा मिश्राः कर्णाजिना ? द्विजाः ॥ ८ ॥
आममीनाशना देवि आर्यावर्तानुवासिनः ।
औसरा विन्ध्यनिलया भविष्यन्ति महीतले ॥ ९ ॥
शब्दार्थज्ञानकुशलास्तर्ककर्कशबुद्धयः ।
जैना बौद्धा बुद्धियुक्ता मीमांसानिरताः कलौ ॥ १० ॥
वेदबोधदवाक्यानामन्यथैव प्ररोचकाः ।
प्रत्यक्षवादकुशलाः शल्यभूताः कलौ शिवे ॥ ११ ॥
मिश्राः शास्त्रमहाशस्त्रैरद्वैतोच्छेदिनोऽम्बिके ।
कर्मैव परमं श्रेयो नैवेशफलदायकः ॥ १२ ॥
इति युक्तिपरामृष्टवाक्यैरुद्बोधयन्ति च ।
तेन घोराः कुलाचाराः कर्मसारा भवस्तथा ?॥ १३ ॥
तेषामुद्धाटनार्थाय सृजामीशे मदंशजम् ।
केरले शलग्रामे विप्रपत्न्यां मदंशजः ॥ १४ ॥
भविष्यति महादेवि शङ्कराख्यो द्विजोत्तमः ।
उपनीतस्तदा मात्रा वेदान् साङ्गान् ग्रहीष्यति ॥ १५ ॥
जैनान् विजित्य तरसा तथान्यान् कुमतानुगान् ।
तदा मातरमामन्त्र्य परिव्राट् स भविष्यति ॥ १८ ॥
व्यासोपदिष्टसूत्राणां द्वैतवाक्यात्मनां शिवे ।
अद्वैतमेव सूत्रार्थं प्रामाण्येन करिष्यति ॥ २५ ॥
द्वात्रिंशत्परमाब्दान्ते शीघ्रं कैलासमावसेत् ।
एतत् प्रतिगृहाण त्वं पञ्चलिङ्गं सुपूजयन् ॥ ३९ ॥" इत्यादि ।

एवं स्थूलेन प्रकारेण देशकालनिर्णयो भवति । सूक्ष्मेन प्रकारेण देशकालादिनिर्णयार्थं शङ्कराचार्यशिष्येण चिद्विलासाख्येन २४००० श्लोकात्मकं शङ्करजयाख्यं चरितम् । रचित इदमेव माधवाचार्येण "प्राचीनशङ्करजये सारमाकृष्य लिख्यते" इत्यादिना स्वग्रन्थे स-

स्तथा बौद्धप्रावल्यसमये भारद्वाजोऽपि न्यायस्थितिं कृतवानिति न चित्रम् ।

यद्यपि शङ्कराचार्याणां श्रौतस्मार्तधर्मस्थितिकर्तृत्वे कूर्मपुराण–शिवरहस्यादि आर्षं प्रमाणमस्ति न तथा उद्द्योतक-

---

मुद्धृतम् । अनन्तानन्दगिरिणापि शङ्कराचार्यशिष्यमात्मानं ब्रुवता शङ्करजयनाम्ना ग्रन्थो रचित इति नैव तिरोहितम् । एवं धनपतिसूरिणापि शङ्करविजयो रचितः । एवमनेकैरपि विद्वद्भिर्नानाविधा ग्रन्था रचिता । सम्प्रति बाबूराजेन्द्रनाथघोषमहोदयेन "शङ्कर ओ रामानुज"नाम्ना ४९१ पृष्ठात्मको निबन्धो वङ्गभाषायां रचित इति । किं तु शङ्करमन्दारसौरभे नीलकण्ठभट्टाः

"प्रासूत तिष्यशरदामतियातवत्या–
मेकादशाधिकशतोनचतुःसहस्र्याम् ।" इत्युक्तवन्तः

तिष्यशरदां कलियुगाब्दानामिति भावः ।

सम्प्रदायविदस्तु

"निधिनागेभवह्न्यब्दे ३८८९ विभवे मासि माधवे ।
शुक्ले तिथौ दशम्यां तु शङ्करार्योदय. स्मृतः ॥" इत्याहुः ।

नवाशीत्युत्तराष्टशत्यधिकत्रिसहस्रीमिते वर्षे कलियुगस्येति शेषः ।

श्रीभास्करभारतीकृतसौभाग्यचन्द्रोदये

"वर्षेष्वतीतेषु शतेषु षट्सु
तिष्येऽवतीर्णो भुवि शङ्करार्यः ।" इति ।

सदानन्दस्वामिकृतशङ्करविजये

"धर्मे द्वाविंशतिशके सप्तमदृष्टिसहस्रके ।
अब्दे सर्वजिते जातः सहे वै पञ्चमे दिने ॥" इति ।

अत्र अन्वेषकं मन्याः शिवरहस्यस्थं "सहस्रात्रितयात् परमिति" वचनं "सहस्रद्वितयात् पर"मिति पठित्वा किंवदन्त्यादिना विक्रमादित्यसमयासन्ने समये शङ्कराचार्याणां स्थितिं वदन्ति । तत्र शङ्कराचार्यप्रणीतेषु ब्रह्मसूत्रोपनिषद्गीताभाष्येषु समुद्धृतेषु ग्रन्थेषु इतः पूर्वं त्रयोदशशताब्द्यां निर्मितोऽपि ग्रन्थः समुद्धृत इति तत्पूर्वं द्वात्रिंशद्वर्षपरिमितायुनामाचार्याणां स्थितिस्थापनं त एव कर्तुं शक्नुवन्ति ।

रस्य न्यायस्थितिकर्तृत्वे उपलभ्यते तथापि प्राचीनेनाचार्येण वासवदत्ताख्यायिकायां समूलमेवोपात्तमिति नासमञ्जसम् ।

न्यायवार्त्तिकं पुरातनं भवतु वा नवीनं किं तु "भारद्वाजेन वार्त्तिक"मित्युक्त्या न्यायसूत्रतद्भाष्यवदेव समादरणीयं कालनिर्णयस्तु काकदन्तपरीक्षावदुपेक्षणीय इति(१) ।

वार्त्तिकलक्षणं तु पराशरोपपुराणे १८ अध्याये

"उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्त्तते ।
तं ग्रन्थं वार्त्तिकं प्राहुर्वार्त्तिकज्ञा मनीषिणः ॥" इति ।

अस्मन्निकटे वर्त्तमाने एकस्मिन् महाभाष्यपुस्तके लिखितेषु सूत्र-भाष्य-वार्त्तिकलक्षणेषु वार्त्तिकलक्षणं यथा ।

"उक्तानुक्तदुरुक्तानां विचारस्य निबन्धनम् ।
हेतुभिश्च प्रमाणैश्च एतद्वार्त्तिकलक्षणम् ॥" इति ।

उक्तलक्षणाक्रान्तो न्यायवार्त्तिकग्रन्थश्च तत्त्वचिन्तामण्यादिन्यायमहानिबन्धानामाधुनिकैर्नवीनन्यायत्वेन व्यवह्रियमाणानामाधारभूतो महानैयायिकैरपि दुरधिगमो भारद्वाजकृतोऽपि इदानीन्तनानां भाष्यकारंमन्यमानानां महामहोपाध्यायानां मते भारद्वाजो न ऋषिरिति वदतां भारद्वाजगोत्रेण येन केनापि पण्डितेन रचित इति सिद्धान्तः ।

अत्र यथा भारद्वाजेन वार्त्तिकग्रन्थो रचितस्तथा प्रतिपादितमधस्तात् । भारद्वाजस्य ऋषित्वं तु प्रश्नोपनिषदि ६ प्रश्ने "अथ हैनं सुकेशाः भारद्वाजः पप्रच्छ" "षोडशकलं भारद्वाज पुरुषं" इति मुण्डकोपनिषदि १ मुण्डके । पाणिनिरपि व्याकरणसूत्रपाठे ७ अ. २ पा. ६३ सू. "ऋतो भारद्वाजस्य" इति । किं तु

(१) 'पुराणमित्येव न साधु सर्वं नवीनमित्येव न गर्हणीयम् ।
सन्तः परीक्ष्यान्यतरद् भजन्ते मूढः परप्रत्ययनेयबुद्धिः ॥" इति ।

अनेनैव भारद्वाजेन न्यायवार्त्तिकं प्रणीतमित्यत्र दृढप्रमाणाभावेऽपि श्रौतस्मार्तसूत्रादिषु कृष्णात्रिः वृद्धात्रिः अत्रिः, विष्णुः त्रिविष्णुवृद्धः, श्रीमुखः शाण्डिल्यः गर्दभीमुखश्च शाण्डिल्यः, याज्ञवल्क्यः वृद्धयाज्ञवल्क्यो योगियाज्ञवल्क्यश्चेत्यादिदर्शनाद्भारद्वाजभेदानुमानादुक्तकालावस्थायिना भारद्वाजेन परमर्षिणा कृतं वार्त्तिकमित्युक्तः सिद्धान्तो निराकृतः। वत्सोऽपि द्विविध इत्युक्तमधस्तात्।

वार्त्तिकग्रन्थे ऽपि १२८ पृ० १७ पं० "हेतुवार्त्तिकं कुर्वाणेन" १९८ पृ० ११ पं० "हेत्वाभासवार्त्तिके" इत्याद्युक्त्या किमपि पुरातनं न्यायवार्त्तिकमासीदिति कल्पयन्ति केचित् तन्न क्वचिद्बौद्धानां वार्त्तिकं क्वचिच्च ब्रह्ममीमांसासूत्रे "बादरायणः"(१) व्याकरणमहाभाष्ये गोनर्दीयस्त्वाहेत्यादिवदुक्तत्वात् शास्त्रतात्पर्यानवबोधाच्च।

विश्वनाथन्यायपञ्चाननो न्यायसूत्रवृत्तिग्रन्थं न्यायभाष्यवार्त्तिकादिग्रन्थान् समालोच्यैव कृतवान् किं तु न्यायवार्त्तिकग्रन्थं साकल्येन नोपलब्धवान् "प्रत्यक्षनिमित्तत्वात्-" २ अ. १ आ. २५ सूत्रव्याख्याने" इदं न सूत्र"मित्युक्तं तेन, वार्त्तिककारेणास्य सूत्रत्वं कण्ठरवेणोक्तत्वादिति। अनुमीयते यद्वर्षशतत्रयात्पूर्वमपि वार्त्तिकग्रन्थो लुप्तप्राय आसीदिति।

चीनदेशीयैतिहासपुस्तकाद्विज्ञातं भवति यत् वर्तमानसमयात् चतुर्दशशताब्दीभ्यः पूर्वं शङ्करभद्रबौद्धस्य शिष्यपरम्परायां दिङ्नागो बौद्धाचार्योऽभूत् तेन न्यायसूत्राणां स्वमतानुसारेण समालोचनं कृतम् तन्मतखण्डनाद्वार्त्तिककारोऽर्वाचीन इति सिद्धान्तयन्ति केचित् इदं न सम्यगित्युक्तं मया गौतमचरिते अयं विशेषोऽप्यस्ति। यत् वर्तमानसमयात् नवशताब्दीभ्यः पूर्वं वर्त्तमान आचार्यवाचस्पतिमिश्रः "उद्द्योतकरग-

(१) ४ अध्याये ४ पादे ७। १२ सूत्रम्।

वीणामतिजरतीनामिति कथं लिखेत् यतो वर्त्तमानसमयात् षट्शताब्दीभ्यः पूर्वं वर्त्तमानमपि गङ्गेशोपाध्यायं नव्यास्तिवसाकारेण व्यवहरन्ति नैयायिकाः तस्मात् स सिद्धान्तः सन्दिग्ध एवेति ।

न्यायवार्त्तिके १०३ पृ० (प्रथमसंस्करणे) काश्यपीयं लक्षणमित्यत्र "कणादः काश्यपः समौ" इत्यनेन पर्यवसितं काणादलक्षणमित्यर्थमजानता केनचित् काश्यपी क्षितिरिति लिखितमादर्शपुस्तके तथैव प्रमादान्मुद्रितमिति ज्ञेयम् ।

१२८ पृ. १७ पं. वार्त्तिकं कुर्वाणेनेति केनचिद्बौद्धेन कृतं तद्वार्त्तिकमित्यजानन्तो न्यायवार्त्तिककारमेव समाकृष्य निरूपयन्ति "मुद्रितवार्त्तिके साम्प्रतं नोपलभ्यते" इति मुद्रितं वार्त्तिकमनवस्थितमिति तेषां हृदयम् ।

यत्र क्वचित् न्यायवार्त्तिकतात्पर्यटीकायां प्रतीकादौ मुद्रितवार्त्तिकपुस्तकेन वैषम्यात् मुद्रितवार्त्तिकपुस्तकस्यानवस्थितत्वं खण्डितत्वं च कल्पयन्ति केचित् । तत्र मूलादर्शपुस्तकेषु बहूनि पाठान्तराणि उपलभ्यन्ते तानि न अनवस्थामूलकानि न वा त्रुटिमूलकानि निबन्धस्य चिरन्तनत्वात् लेखकशोधकप्रमादजातात् पाठान्तराद् वाचस्पतिमिश्रेण यल्लब्धं वार्त्तिकपुस्तकं तदनुसारि व्याख्यानं कृत(१)मिति विज्ञेयम् ॥

(१) तात्पर्यटीकायां ६५ पृ० द्रष्टव्यम् । यथा पक्षताजागदीश्याम् । "न च प्रकृतस्वरसंवलितस्यैव पाठस्य धर्तुमुचितत्वाद्व्याप्त्येति धारणं युक्त"मित्यादि ।

मुद्रितदीधितिपुस्तके "भवानन्दसम्मतः पाठः" "जगदीशसम्मतः पाठ"इत्यादि

न्यायवार्त्तिकस्यापरं व्याख्यानं न्यायसारविचारकर्त्रा श्रीराघवभट्टेन कृतं "समानादिशब्दार्थस्तु वार्त्तिकव्याख्यानावसरे स्फुटीभविष्यति" इति तत्रोक्तत्वात् । धा. रा. सं. न्यायसारविचारपुस्तके ७ पत्रे द्रष्टव्यम् ।

## न्यायवार्त्तिकतात्पर्यटीकाकर्तुः
## आचार्यवाचस्पतिमिश्रस्य चरितम् ।

---

वेद–धर्मशास्त्र–पुराण–तन्त्र–व्याकरण–ज्यौतिष–छन्दो–न्याय–वैशेषिक–सांख्य–योग–मीमांसा–वेदान्त–चिकित्साशास्त्रादौ वाचस्पतिप्रणीतास्तत्पुत्रपौत्रप्रणीता वा अनेके ग्रन्था उपलभ्यन्त इति अनेके वाचस्पतयोऽभूवन्निति नात्र सन्देहावकाशः । तत्र वाचस्पतिमिश्रा अपि अष्टौ तत्रापि दार्शनिकौ द्वौ तत्राप्याचार्यसन्मिश्रवाचस्पतिर्वा षड्दर्शनटीकाकृदाचार्यवाचस्पतिमिश्रो वा इतरव्यावर्तकविशेषणयुक्तत्वादेक एवेति न्यायवार्त्तिकतात्पर्यटीकाकारत्वात् प्रकृते [illegible] एव वर्णनीय इति ॥

तत्र आचार्यवाचस्पतिमिश्राणां(१) महर्षिकल्पानामाविर्भावे देशकालनिर्णयाभावेऽपि गुणैकपक्षपातिनो विद्वांसो भवन्तीति ते अनेकान् सिद्धान्तान् निरूपयन्ति(२) वस्तुतस्तु

---

(१) तार्किकरक्षाटीकायां लघुदीपिकायां १२ पत्रे "आचार्यवाचस्पतिमिश्रा." अप्पयदीक्षितेनापि शास्त्रसिद्धान्तलेशसंग्रहे पृ. ८ । २४ आचार्यवाचस्पतिमिश्राः"

(२) माधवीये शङ्करविजये वाचस्पतिमिश्रः पूर्वजन्मनि श्रीशङ्कराचार्याणां प्रधानशिष्यः पद्मपादाचार्यः शारीरकभाष्यव्याख्यां प्रणीतवान् स एव निबन्धः सुरेश्वराचार्याणां शापात् पञ्चपादिकाभिधानत्वं गतः ततश्च शङ्कराचार्यानुग्रहात् पद्मपाद एव द्वितीयजन्मनि वाचस्पतिर्भूत्वा शारीरकभाष्यव्याख्यां सम्पूर्णां भामतीं प्रणीतवानित्यादि निरूपितम् ।

केषाञ्चिन्मते वाचस्पतिमिश्राणां पत्नी भामती । मतान्तरे कन्या भामती । अन्येषां मते नेपालप्रान्तभागे भामानामको ग्रामविशेषः । तत्र स्थितेन वाचस्पतिमिश्रेण भामती ग्रन्थो रचित इति यावत् ।

आचार्यवाचस्पतिमिश्रेण सांख्यतत्त्वकौमुद्यादौ वक्ष्यमाणानि वचनानि लिखितानि ।

"मनांसि कुमुदानीव बोधयन्ती सतां सदा ।
श्रीवाचस्पतिमिश्राणां कृतिः स्तात् तत्त्वकौमुदी ॥"

तत्रैव "सर्वं चैतदस्माभिर्न्यायवार्त्तिकतात्पर्यटीकायाम् ।" न्यायवार्त्तिकतात्पर्यटीकायां च ३ अध्याये २ आह्निके ३९४ पृ० "विपञ्चितं चैतदस्माभिर्ब्रह्मतत्त्वसमीक्षान्यायकलिकाभ्याम्" तत्त्वबिन्दौ मुद्रितपुस्तके २३ "उपपादितं न्यायकलिकायाम्" "भामत्यां च १.८ पृ० "विस्तरस्तु ब्रह्मतत्त्वसमीक्षायाम् पृ० ७१ "उपपादितं चैतदस्माभिर्विस्तरेण न्यायकलिकायाम् ।" एवं तात्पर्यटीकायां पृ. ५७ । "तत्त्वसमीक्षायाम्" योगभाष्यव्याख्यायां तत्त्ववैशारद्याम् ३२ सूत्रव्याख्याने "अर्थक्रिया ब्रह्मतत्त्वसमीक्षान्यायकणिकाभ्यामुपपादिता ।"

अपि च भामत्यां ग्रन्थसमाप्तौ

"यन्न्यायकलिका-तत्त्वसमीक्षा-तत्त्वबिन्दुभिः ।
यन्न्याय-सांख्य-योगानां वेदान्तानां निबन्धनैः ॥
समचैषं महत् पुण्यं तत्फलं पुष्कलं मया ।
समर्पितमथैतेन प्रीयतां परमेश्वरः ॥"

इत्युक्तनिबन्धानां कर्ता एक एव । अत एव षड्दर्शनटीकाकारत्वेन तं व्यवहरन्ति विद्वांस इति ।

अयं वाचस्पतिमिश्रः कस्मिन् देशे आविरभूदिति विचारे मण्डनमिश्र—मुरारिमिश्र-पार्थसारथिमिश्र—सुचरितमिश्रादयो मिश्रशब्दान्ता मैथिला इति मिश्रशब्दसम्बन्धात् "तन्निषिद्धं च परिहरतां दाक्षिणात्याना"मिति तात्पर्यटीकायां ३२ पृ० दर्शनादयमपि मैथिल एवेति अनुमीयते ।

समयनिर्णये तु वक्ष्यमाणं पद्यं तत्कृतन्यायसूचीनिबन्धान्ते लिखितमुपलभ्यते ।

"न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे ।
श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे ॥"

इति न्यायसूचीनिबन्धाख्ये सूत्रपाठनिर्णायके न्यायदर्शनरहस्यार्थप्रदर्शके निबन्धे लिखितत्वात् ८९८ शाकाब्दे न्यायवार्त्तिकतात्पर्यटीकाकाराणां वाचस्पतिमिश्राणां स्थितिरासीदिति निश्चीयते । निबन्धोऽयं तात्पर्यटीकाकारेणैव कृत इति व्युत्पादितमत्रैव ३८ पृष्ठे अधिकं तु निरूप्यते । न्यायदर्शने सूत्रपाठभेदादिव आचार्याः ग्रन्थद्वयं कृतवन्तः यथा उदयनाचार्यास्तात्पर्यपरिशुद्धिं न्यायपरिशिष्टं च वर्द्धमानोपाध्यायास्तात्पर्यपरिशुद्धिप्रकाशमन्वीक्षानयतत्त्वबोधं च जयन्तश्च न्यायमञ्जरीं न्यायकलिकां च विश्वनाथन्यायपञ्चाननो न्यायसूत्रवृत्तिं न्यायालोकं च तथैव वाचस्पतिमिश्रोऽपि न्यायवार्त्तिकतात्पर्यटीकां न्यायसूचीमपीति नैतच्चित्रम् तथा भामत्यामन्ते "न्यायसांख्ययोगानां निबन्धनै"रिति बहुवचनेन न्यायसूचीतात्पर्यटीकाख्यायन्तपद्ययोः प्राय ऐक्येनैककर्तृकत्वं निर्विवादमेव । वस्वङ्कवसुवत्सरे अत्र वत्सरशब्दः शाकाब्दवाचक एव इदमेव द्रढयन्ति वक्ष्यमाणानि प्रमाणानीति । तथाहि भामत्यामन्ते ।

"नरेश्वरा यच्चरितानुकार-
मिच्छन्ति कर्तुं न च पारयन्ति ।
तस्मिन् महीपे महनीयकीर्तौ
श्रीमन्नृगे ऽकारि मया निबन्धः ॥" इति ।

यद्यपि नृगनामानोऽनेके राजानो महाभारते भागवते

च उपलभ्यन्ते तथापि अर्वाचीननृगविषये शार्ङ्गधरपद्धत्यां विशिष्टराजवंशवर्णनप्रसङ्गे नृगनृपतिपाषाणयज्ञयूपप्रशस्तिनाम्ना पद्यद्वयं समुद्धृतम् । यथा

"आविन्ध्यादाहिमाद्रेर्विरचितविजयस्तीर्थयात्राप्रसङ्गा-
दुद्ग्रीवेषु प्रहर्पान्नृपतिषु विनमत्कन्धरेषु प्रपन्नः ।
आयुर्वित्तं यथार्थं पुनरपि कृतवान् म्लेच्छविच्छेदनाभि-
र्देवः शाकम्भरीन्द्रो जगति विजयते वीसलः क्षोणिपालः ॥
ब्रूते सम्प्रति चाउहानतिलकः शाकम्भरीभूपतिः
श्रीमान् विग्रहराज एष विजयी सन्तानजानात्मजः ।
अस्माभिः करदं व्यधायि हिमवद्विन्ध्यान्तरालं भुवः
शेषस्वीकरणाय मास्तु भवतामुद्योगशून्यं मनः ॥" इति ।

शार्ङ्गधरपद्धत्या शाकम्भरीदेशे चउहान–क्षत्रियवंशे हम्मीरराजोऽभूत् तत्सभायां राघवदेवपण्डितात्मजा गोपाल–दामोदर–देवदासाख्याः पण्डिता वर्तमाना आसन् । दमोदरात्मज-शार्ङ्गधरेण नृगनृपतिपाषाणयज्ञयूपस्य नाम उक्तप्रकारेण समुद्धृतम् । हम्मीरराजश्च १२९५ वैक्रमे वर्षे मृतः तत्पूर्वं ६० वर्षाणि राज्यं कृतवानिति वदन्ति ऐतिहासिकाः । अतो निष्पन्नं भवति १२३५ वैक्रमवर्षेभ्यः ११०० शाकवर्षेभ्योऽपि पूर्वं दिल्लीनगरोपकण्ठस्थितस्तम्भेऽपि १२२० विक्रमवर्षे १०८५ शाकाब्दे निरुक्तानि पद्यान्यासन्निति उक्तसमये वाचस्पतिमिश्रस्थितौ नासमञ्जसं किमपि ।

हेमाद्रिणा–वोपदेवेन च आयुर्वेदीया शार्ङ्गधरसंहिता व्याख्याता वोपदेवसमयश्च ११८२ गतशाकाब्दासन्नसमय एवेति निरुक्तसमये शार्ङ्गधरस्थितिर्न विरुद्धा ।

वर्जेसमहाशयसंगृहीते एपीग्राफिआइण्डिकापुस्तके (वा-

ल्यूम-१ पेज २१९। २२० वाल्यूम २ पेज २३५) समुद्धृता-दनुशासनपत्राशयाद्विज्ञायते

राजा कीर्तिवर्मा प्रबोधचन्द्रोदयनाटककर्ता कृष्णमिश्रश्च ईशवीय १०५० वर्षेभ्यः परं १११६ वर्षेभ्यः पूर्वमासी-दिति। अपि च ईशवीय १०५० वर्षे देववर्मा १०९८ वर्षे कीर्तिवर्मा १११६ वर्षे जयवर्मा च आसीदिति यावत्।

अत्र १०२० गतशाकाब्दे वर्तमानः कृष्णमिश्रः प्रबोधचन्द्रोदये श्रीहृषीकेशशास्त्रिसंस्कृते पुस्तके पृ. ३४

"नैवाश्रावि गुरोर्मतं न विदितं तौतातिकं दर्शनम्
तत्वं ज्ञातमहो न शालिकागिरां वाचस्पतेः का कथा॥"

इत्युक्तवानिति न्यायसूचीनिबन्धोक्तं समयमेव द्रढयति।

केचित्तु वाचस्पतिमिश्रेण सांख्यतत्त्वकौमुद्यामन्ते "तदुक्तं राजवार्तिके" इति लिखितत्वात् राजवार्तिकग्रन्थो भोजराजेन कृत(१) इति भोजराजसमयात् पश्चात्कालभावी वाचस्पतिमिश्र इति वदन्ति तच्चिन्त्यम्।

अपि च रामानुजाचार्याः १०१२ शाकाब्दे यादवाचलपर्वते मन्दिरे नारायणमूर्त्तिं स्थापितवन्तः तैश्च श्रीभाष्ये खण्डनखण्डखाद्यस्था कारिका समुद्धृता, खण्डनकाराच्च पूर्वं ९०६ शाकाब्दे उदयनाचार्याणां तात्पर्यपरिशुद्धिकाराणां स्थितिरासीदिति ८९८ शाकाब्दे वाचस्पतिमिश्राणां स्थितिर्न विरुद्धेति। रामानुजाचार्येण २।१।१४। भामत्यपि अनूदिता।

आचार्यवाचस्पतिमिश्रेण शारीरकभाष्यटीकायां भामत्यामन्ते

---

(१) राजमार्तण्डाभिधायां योगसूत्रवृत्तौ रणरङ्गमल्लनृपतेरित्युक्त्या राजवार्त्तिकग्रन्थो भोजराजकृत इति कल्पयन्ति तन्निर्मूलम्। अपि च देशभाषानिबद्धः राजवार्त्तिकनामा जैनग्रन्थोऽपि वर्तते।

यानि लिखितानि पद्यानि तदुक्तक्रमेणैव ग्रन्था रचिता इति अनुमीयते प्रथमतो मण्डनमिश्रविरचितविधिविवेकस्य टीका न्यायकणिकैव रचिता(१)अस्य ग्रन्थस्योपादानं प्रायस्तत्कृतग्रन्थेषु दृश्यते ततो ब्रह्मसिद्धिव्याख्या ब्रह्मतत्त्वसमीक्षा(२) ततश्च तत्त्वबिन्दुग्रन्थः(३) इदं ग्रन्थद्वयं न्यायवार्त्तिकतात्पर्यटीकायां(४)

---

(१) केचित्तु अमुं ग्रन्थं न्यायकणिकानाम्ना व्यवहरन्ति । वाराणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तके "इति पूर्वकणिका समाप्ता"इति लेखोऽपि दृश्यते । ग्रन्थोऽयं काशीविद्यासुधानिधिपत्रे मुद्रितः ।

(२) ब्रह्मतत्त्वसमीक्षा मण्डनमिश्रकृतब्रह्मसिद्धेर्व्याख्या ।

(३) तत्त्वबिन्दुग्रन्थष्टिप्पणसहितः पण्डितपत्रे मुद्रितोऽपि लघुत्वात् दुरूहः अस्य एका महती टीका ममान्तिके ४००० श्लोकात्मिका वर्तते ।

(४) न्यायवार्त्तिकतात्पर्यटीकायाः पुस्तकत्रयं ममान्तिके वर्तते तत्र प्रथमे पुस्तके लिपिकालोऽधोलिखितप्रकारेण लिखितोऽस्ति ।

"इति वाचस्पतिमिश्रविरचितायां न्यायवार्त्तिकतात्पर्यटीकायां प्रथमोऽध्यायः समाप्तः ।छ्।।छ्।।छ्।। स्वस्ति संवत् ॥ १४५४ समये आश्विनवदि १० रविवासरे ॥छ्॥ ॐनमो नारायणाय ॥ स्वस्ति ॥ काशी करोतु कल्याणं विश्वेशः सर्वसम्पद् ॥ भवानी च जगन्माता जयं ते विदधातु च ॥ तावद्गर्जन्तु कवयः शाखायां कपयो यथा । महेशामृतचीत्काररवाणी यावन्न निःसृता ॥ छ ॥ शुभम् ॥ ॥ गर्वं वहन्तु भुवि भाविनि लेपकाऽत्र ? शून्याटवीमदनिरीक्षितमत्तसत्त्वाः ॥ श्रीमाधवांघ्रियुगपद्ममधुव्रतोऽपि वाचस्पथाति न हरिर्नरसिंहनामा ॥ छ ॥"

वाराणसीस्थराजकीयसंस्कृतपाठशालीयं तु न्यायवार्त्तिकतात्पर्यटीकापुस्तकं गोरक्षशतकं च सर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां पुस्तकम् । अयं च १६९६ वैक्रमाब्दासन्ने समये वाराणस्यां वर्तमानः गोदावरीतटात् समायातः गोरक्ष-

समुद्धृतमिति पश्चान्न्यायवार्तिकतात्पर्यटीकाया निर्माणमियं टीका च सांख्यतत्त्वकौमुद्यां समुद्धृता योगभाष्यटीकायां तत्त्ववैशारद्यां तत्त्वकौमुदी समुद्धृता भामत्यां तु आदिमध्यावसानेषु सर्वे ग्रन्था उपात्ता इति ।

केचित्तु भामत्यामारम्भे

"मार्तण्डतिलकस्वामिमहागणपतीन् वयम् ।
विश्ववन्द्यान्नमस्यामः सर्वसिद्धिविधायिनः ॥"

इति दृष्ट्वा मार्तण्डतिलकस्वामिनः शिष्यो वाचस्पतिमिश्र इति वदन्ति तत्र शास्त्रतात्पर्यानवबोधात् तात्पर्यटीकायां ८७ पृ. "अस्माभिस्त्रिलोचनगुरून्नीतमार्गानुगमनोन्मुखै"रित्युक्तत्वाच्च । प्रपञ्चितं चास्माभिर्वात्स्यायनचरिते ऽधस्तात् ।

मुम्बईनगरे द्वितीयावृत्तिमुद्रिते सटीककाव्यप्रकाशपुस्तके भूमिकायां ३१ पृ. विश्वनाथकृतकाव्यप्रकाशदर्पणे "इति वाचस्पतिमिश्रः" ४० पृ० दीक्षितभीमसेनकृतायां सुधासाराख्यायां काव्यप्रकाशटीकायां "सर्वतन्त्रविदो वाचस्पतिमिश्राः" इति प्रदर्शयता काव्यप्रकाशस्य टीका वाचस्पतिमिश्रेण कृता इति स्वकृतटीकोपोद्घाते २ पृष्ठे कल्पितम् एतच्चिन्त्यम् ।

श्रीतारानाथतर्कवाचस्पतिभट्टाचार्येण सांख्यतत्त्वकौमुदीभूमिकायां निरूपितं यद्वाचस्पतिमिश्रेण खण्डनोद्धारः कृत

---

शतकपुस्तकं संगृहीतवान् तत्र उक्तसमय एव लिखितः । अपि च १६२७ ईशवीयवर्षात् १६५६ वर्षान्तं शाहजहांनृपतिसमयः तस्मादेव उक्ताचार्यैः काशीप्रयागयात्रिकाणां करो विमोचित इति ऐतिहासिका वदन्ति ।

अस्मन्निकटे पुस्तकत्रयं वर्तत इति तद्वर्णनं च कृतमधस्तात् ।

इति श्रीहर्षादर्वाचीन इति । परं तु वाचस्पतिमिश्रकृता न्यायवार्त्तिकतात्पर्यटीका उदयनाचार्येण व्याख्याता उदयनाचार्यकृता किरणावली न्यायकुसुमाञ्जलिरपि खण्डनग्रन्थे श्रीहर्षेण समुद्धृतौ पुनरपि खण्डनग्रन्थस्योद्धारो वाचस्पतिमिश्रेण कृत इति विजानाति तर्कवाचस्पतिमहाशय इति ।

अस्याभिरनुमीयते तत्त्वचिन्तामणिप्रकाशाख्यव्याख्यान्यायतत्त्वालोकाभिधन्यायसूत्रवृत्ति–न्यायसूत्रोद्धारादिकर्त्रा नवीनवाचस्पतिमिश्रेण काव्यप्रकाशटीका खण्डनखण्डखाद्योद्धारश्च कृत(१) इति । अनेन स्वरचितग्रन्थेषु न्यायतत्त्वालोकादिषु षड्दर्शनटीकाकारो वाचस्पतिमिश्रः समुद्धृत(२) इति । अस्य समयादिनिरूपणे ।

"श्रीवाचस्पतिमिश्रेण मिथिलेश्वरसूरिणा ।
लिख्यते मुनिमूर्धन्यश्रीगोतममतं महत् ॥"
इति न्यायसूत्रोद्धारारम्भे ।
"शिवेनोरसि विधृतौ पादौ नत्वापवर्गदौ ।
व्यलेखि न्यायसूत्राख्यं ग्रन्थं वस्वक्षिवासवे ॥"

इति सूत्रोद्धारान्ते दर्शनात् वस्वक्षिवासवे इत्यनेन १४२८ वैक्रमे वर्षे ग्रन्थो ऽयं निर्मितः सुधामधुनाप्येको ग्रन्थो वाचस्पतिमिश्रकृतो विज्ञायते तत्र लिपिकालः १३०३ शाकाब्दो दृश्यते इत्युभयोरविरोधात् १२९३ शाकाब्देभ्यः पूर्वं मिथि-

(१) खण्डनोद्धारोऽपि काशीविद्यासुधानिधिपत्रे मुद्रित इति ।

(२) खण्डनोद्धारे २१ पृष्ठे "विस्तरस्तु तत्त्वालोके मयैवोक्तस्तदिहोपरम्यते" तत्त्वालोकाख्ये न्यायसूत्रव्याख्याने १ अ० १ आ० २१ सू० बाधनालक्षणं दुःखमित्यत्र च षड्दर्शनटीकाकृद्वाचस्पतिमिश्रः समुद्धृतः ।

लादेशे उक्तवाचस्पतिमिश्रस्य स्थितिरासीदित्यनुमीयते । विस्तरस्तु खण्डनखण्डखाद्योद्धारभूमिकायां निरूपितोऽस्माभिः ।

अपरोऽपि वाचस्पतिमिश्रो विवादचिन्तामणि–तीर्थचिन्तामणि–श्राद्धचिन्तामण्यादिधर्मशास्त्रनिबन्धकर्ता अन्योऽपि सिद्धान्तशिरोमण्यादिज्यौतिषनिबन्धव्याख्यातुर्लक्ष्मीदासस्य पिता वाचस्पतिमिश्रो भिन्न एवेति तत्तद्ग्रन्थसमालोचनाद्व्यक्तं भविष्यतीति ॥

---

न्यायवार्त्तिकतात्पर्यटीकापरिशुद्धिकर्तुः

## श्रीमदुदयनाचार्यस्य चरितम् ।

---

उदयनो(१) वा उदयनाचार्यो वा न्यायाचार्योदयनो वा उदयकरो(२) वा उदयाकरो(३) वा उदयंकरो(४) वा उदय-

---

(१) "व्यातेने किरणावलीमुदयनः" इति किरणावल्यामुदयनाचार्योक्त्या न्यायाचार्योदयन एव नान्यः । विस्तरस्तु अग्रे निरूपयिष्यते ।

(२) "इदमुदयकरेण न्यायलोकागमामा"मिति कलिकातामुद्रितात्मतत्त्वविवेकपुस्तकान्ते दर्शनात् स एव नान्यः । वस्तुतस्तु "तदिदमुदयनेन न्यायलोकागमाना"मित्येव पाठस्तालपत्रादिलिखितपुस्तकेषु दृश्यते ।

(३) "उदयाकरसूनुना" इति ईश्वरप्रत्यभिज्ञासूत्रग्रन्थे दर्शनात् सोऽन्यः ।

(४) "शब्देन्दुशेखरे ज्योत्स्नां प्रकरोत्युदयंकर" इत्युक्त्या नागेशभट्टादपि पश्चात्कालभावीति सुतरां भिन्नः ।

नाचार्यभादुडी(१) इत्यादिनामभिस्तत्तद्देशीया गुणैकपक्षपातिनोऽनेकैः प्रकारैः किंवदन्त्यादिभिर्न्यायाचार्यमुदयनाचार्यं वर्णयन्ति । किं तु वैशेषिकभाष्यटीका वा प्रशस्तपादभाष्यटीका किरणावली, वैशेषिकशास्त्रसारभूता लक्षणावली, न्यायभाष्यटीकाटीकादीका न्यायनिबन्धापरनामधेया तात्पर्यपरिशुद्धिः, बोधशुद्धिर्बोधसिद्धिर्वा न्यायपरिशिष्टाख्या न्यायसूत्रवृत्तिः, आत्मतत्त्वविवेको न्यायकुसुमाञ्जलिश्च येनोदयनाचार्येण रचितः स एवेदानीं वर्णनीय इति नासौ वङ्गदेशीयो न वा दाक्षिणात्यः किं तु मैथिल इति भविष्यपुराणपरिशिष्टे भगवद्भक्तमाहात्म्ये १० अध्याये स्पष्टमुपलभ्यते तथाहि—

अथ वक्ष्ये तृतीयस्य हरेरंशस्य धीमतः ।
उदयनाचार्यनाम्नस्तु माहात्म्यं लोमहर्षणम् ॥ १ ॥
भूत्वा स मिथिलायां तु शास्त्राण्यध्यैष्ट सर्वशः ।
विशेषतो न्यायशास्त्रे साक्षाद्वै गोतमो मुनिः ॥ २ ॥
बौद्धसिद्धान्तमुग्धान्तःसुखाय हितकारिणीम् ।

---

(१) "उदयनाचार्यभादुडी मिश्रः चाटुर्जी-चातुर्जी-गाङ्गुली-भादुडीत्याद्युपाधयस्तु बल्लालसेनेन दत्ता अस्य समयस्तु तत्कृताद्भुतसागरादिग्रन्थेभ्यः १०८९ शाकाब्दः । उदयनाचार्येण लक्षणावल्यां ९०६ शाकाब्दो ग्रन्थनिर्माणकालो लिखित एव अथ च न्यायवार्त्तिकतात्पर्यपरिशुद्धौ "अमृतस्थाने अमृत्त इति दाक्षिणात्यानाम" । "गौडाः शपसाः सा इति" । अत्र गौडा वङ्गदेशीयाः एवं निन्दालिपनादुभयभिन्नत्वं निर्विवादम् । विस्तरस्तु न्या० वा० ता० परिशुद्धिभूमिकायाम् ।

बल्लालसेनस्तु १०८९ वर्षेऽद्भुतसागरग्रन्थं कृतवान् किं तु लक्ष्मणसेनस्य पुत्रो बल्लालसेनो वा बल्लालसेनस्य पुत्रो लक्ष्मणसेन इत्यादि विचारोऽग्रे समुद्भावयिष्यते ।

वितेने विदुषां प्रीत्यै त्रिमलां किरणावलीम् ॥ ३ ॥
एकदा बौद्धसिद्धान्तान् प्रकटीकर्तुमागतः ।
बौद्धाचार्यस्तीरभुक्तौ नृपग्रामे समागतः ॥ ४ ॥
स्वशिष्यैः स्वीयशास्त्रस्य पुस्तकैर्बहुभिर्वृतः ।
राजानं प्रेषयामास दूतं दर्पवशादसौ ॥ ५ ॥
कश्चिच्छिष्यं गच्छ शिष्य मिथिलेशं वदाधुना ।
मद्वाक्यात् वेदशास्त्राभ्यां मुधा भ्रान्तोसि भूपते ॥ ६ ॥
निरीक्ष्य मम शास्त्राणि मत्पथानुगतो भव ।
अस्ति चेत् तव देशेऽस्मिन् वेदस्थापनकृत् पुमान् ॥ ७ ॥
समानय मया सार्द्धं विचारं प्रकरोतु सः ।
तदा राजा तु श्रुत्वैतद्वचनं दूतभाषितम् ॥ ८ ॥
उवाच दूतं गच्छ त्वं स्वगुरुं ब्रूहि मे वचः ।
अहं भ्रान्तः स चेद् भ्रान्त इत्येवं निश्चयो महान् ॥ ९ ॥
आगच्छ सदसि प्रातः स ते व्यक्तिर्भविष्यति ।
इत्युक्तः स गतो दूतः प्राह सर्वं नृपोदितम् ॥ १० ॥
गुरवे स तु शृण्वन् वै जहासातिमदान्वितः ।
अथ राजा तत्क्षणात्तु देशस्थान् पण्डितान् बहून् ॥ ११ ॥
श्रीमदुदयनाचार्यमुख्यानानाय्य चोक्तवान् ।
अहोयं नास्तिको ग्रामे समायातोतिपण्डितः ॥ १२ ॥
अनेन विवदध्वं वै यूयं यदि स चेज्जयेत् ।
तदाहं च भवन्तश्च सर्वे तन्मतगामिनः ॥ १३ ॥
भविष्यामो न सन्देहो भवतां चेज्जयो भवेत् ।
तदाहं भवतां दास्यं करिष्यामि न संशयः ॥ १४ ॥
इत्युक्त्वास्ते तु विद्वांसः सर्वे तूर्णीं स्थिता अथ ।
श्रीमदुदयनाचार्यस्तेषां मध्ये ऽब्रवीन्नृपम् ॥ १५ ॥

सत्यमात्थ महाराज शृणु किञ्चिन्मयोदितम् ।
जयः पराजयो वापि श्रीहरेरिच्छया नृणाम् ॥ १६ ॥
यथाशक्ति विवादं तु करिष्यामि न संशयः ।
त्वं तु चिन्तां परित्यज्य पश्यास्माकं पराक्रमम् ॥ १७ ॥
इत्युक्त्वा नृपतिग्रामे तस्थुः सर्वेऽथ पण्डिताः ।
द्वितीये दिवसे प्राप्ते राजा सदसि चागतः ॥ १८ ॥
आहूय पण्डितान् सर्वान् तं चापि जिनशास्त्रिणम् ।
उवाच युवयोरस्तु विचारः पश्यतो मम ॥ १९ ॥
इति राजवचः श्रुत्वा नास्तिकः पूर्वमब्रवीत् ।
अहो विचार उभयोः [redacted] नो भवितुमर्हति ॥ २० ॥
नैतं वै सत्पथारूढाः किं वदिष्यन्ति मामिह ।
इति श्रुत्वा वचस्तस्य नास्तिकस्य दुरात्मनः ॥ २१ ॥
उवाचोदयनाचार्यो मतं तन्मतखण्डनम् ।
एवं बहुदिनान्यासीद्विचारः सुमहाँस्तयोः ॥ २२ ॥
सदा बौद्धो हृदा मत्वाचार्यान्निजपराजयम् ।
मायां विस्तारयामास महाश्चर्यप्रदायिनीम् ॥ २३ ॥
उवाच नृपतिं राजन् सर्वे ऽमी मद्विरोधिनः ।
न कोपि मद्धितं ब्रूते तस्मादेकं वदाम्यहम् ॥ २४ ॥
शालग्रामशिलायां तु सत्यमेषां स्थितो हरिः ।
तामानयात्र स्वमतैः खण्डयामि शिलामहम् ॥ २५ ॥
यदि सा जलवद् भूत्वा स्यादृदृश्या शिला पुनः ।
तदा मदुक्तं सत्यं स्यादथ चेत् तां पुनः स तु ॥ २६ ॥
आचार्यो जलवत् कृत्वा शिलां व्यक्तां करिष्यति ।
तदास्यापि मतं सत्यं मन्येऽहं नात्र संशयः ॥ २७ ॥
इत्युक्तः स नृपस्तेन बौद्धेनाथ महीपतिः ।

ददर्शोदयनाचार्यं किं वदत्येष नास्तिकः ॥ २८ ॥
इत्युक्तो भूमिपतिना प्राहाचार्योतिहृष्टवत् ।
इदं तु मायाचरितं तथापि स्वीकरोम्यहम् ॥ २९ ॥
मायामपि च जानामि परं त्वेकं ब्रवीम्यहम् ।
जातायां च पुनस्तस्यां शिलायां तन्मतद्वयम् ॥ ३० ॥
सत्यं चेति वदिष्यन्ति भ्रान्त्या सर्वे सभासदः ।
तस्मादेकमहं वक्ष्ये सत्यमिथ्याविचारणे ॥ ३१ ॥
तत्कारिष्यत्ययं चेद्वै करिष्ये स्वोक्तमप्यहम् ।
इति श्रुत्वा ततो राजा जैनाचार्यं ददर्श ह ॥ ३२ ॥
ततो जैनः स्वयं प्राह करिष्याम्यस्य भाषितम् ।
* * * * * * * ॥ ३३ ॥
इति श्रुत्वा ततो राजा शालग्रामशिलां दृढाम् ।
आनाय्य स्थापयामास स्वर्णस्थाल्यां शुचौ भुवि ॥ ३४ ॥
ततो बौद्धो ऽब्रवीत् स्वीयं मतं दृष्ट्वा तु तां शिलाम् ।
अथ क्षणेन सा सर्वा शिला जलमभूत् तदा ॥ ३५ ॥
ततोर्द्धक्षणतस्तद्वै जलमन्वर्वभूत ह ।
पश्यतां सर्वलोकानां महाचर्यमभूदिदम् ॥ ३६ ॥
ततस्तूदयनाचार्यो बौद्धसिद्धान्तखण्डनम् ।
स्वमतं प्राह शीघ्रं तज्जलं प्रादुर्बभूव ह ॥ ३७ ॥
तत्क्षणेन च तद्वारि सा शिला समपद्यत ।
ततो राजादयः सर्वे साधुसाध्वितिवादिनः ॥ ३८ ॥
प्रशशंसुश्च तं भक्त्योदयनाचार्यमादरात् ।
आचार्यस्तु तदा प्राह कथमेषा स्तुतिर्मम ॥ ३९ ॥
स्थित एव मते ह्यस्य तस्मात् कुरु मदीरितम् ।
इत्युक्त्वा नास्तिकं प्राह मयाकारि तवेरितम् ॥ ४० ॥

अतः परं मतं कस्य सत्यं मिथ्येति निश्चिनु ।
मया यदुच्यते तेन प्रकारेण नृपाग्रतः ॥ ४१ ॥
एक तालद्रुमो द्वारि तिष्ठत्यतिमहानहो ।
समारुह्य पतिष्यावो यः स्थास्यति स सत्यवाक् ॥ ४२ ॥
वेदाः प्रमाणमित्युक्त्वा निपतिष्याम्यहं भुवि ।
त्वं तु वेदा अप्रमाणमित्युक्त्वा निपताधुना ॥ ४३ ॥
युगपत् पततोर्वृक्षाज्जीविष्यति ॥ आवयोः ।
स सत्यवाग्मतं तस्य सत्यं लोकस्तु तं भवेत् ॥ ४४ ॥
एवमाचार्यवचनं श्रुत्वा सोऽपि जहर्ष च ।
स्वीचकार ततो राजा तावुभावब्रवीद्वचः ॥ ४५ ॥
अहो प्राणान्तकी चेयं परीक्षा नैव शोभना ।
तस्माद्विरमतामत्र युवामेतद्विचारतः ॥ ४६ ॥
इति राजवचः श्रुत्वा उदयनाचार्य आहृतम् ।
तव नास्त्यत्र किञ्चिद्वो दूषणं नैव घातकम् ॥ ४७ ॥
स्वशास्त्रभक्तितश्चावां करिष्यावो यथारुचि ।
त्वमेकस्मिन्मृते चास्मिन् मयि वा नृपसत्तम ॥ ४८ ॥
तन्मतं च परित्यज्य जीवन्मतपरो भव ।
किं च यावन्ति ते राज्ये पुस्तकानि च तानि वै ॥ ४९ ॥
जले प्रक्षिप ये चैतच्छास्त्रोपासनकारकान् ।
तान् दण्डयित्वा यो जीवेदावयोस्तन्मतानुगान् ॥ ५० ॥
कुरुष्वेत्यस्मदुक्त्या वै प्रतिज्ञां कुरु भूपते ।
इत्युक्तो नृपतिर्जैनाचार्यस्य सुसम्मतम् ॥ ५१ ॥
एवमेवाब्रवीत् सोऽपि प्रतिजज्ञे नृपस्तदा ।
तत उत्थाय ते सर्वे आगतास्तालसन्निधौ ॥ ५२ ॥
संशादिनाथ तौ द्वौ तमारुरोहतुर्महातरुम् ।

वेदाः प्रमाणमित्युक्त्वा आचार्यो न्यपतद् भुवि ॥ ५३ ॥
बौद्धो वेदा अप्रमाणमित्युक्त्वा निपपात ह ।
आचार्यो निपतन्भूमौ वेदैः संरक्षितः सुखम् ॥ ५४ ॥
मन्दंमन्दं समागत्य तस्थौ वेदं हरिं स्मरन् ।
जैनाचार्यः पतन्मार्गे भ्राम्यमाण उपर्यधः ॥ ५५ ॥
परिवर्तितशीर्षो हि पपात धरणीतले ।
व्यस्तमस्तकपाण्यङ्घ्रिर्निष्प्राणो न्यपतत् खलु ॥ ५६ ॥
इति दृष्ट्वा महाश्चर्यं सर्वे राजादयो जनाः ।
आचार्यं प्रशशंसुस्ते नमस्कृत्य मुहुर्मुहुः ॥ ५७ ॥
ततो राजा वेदशास्त्रं सत्यं मत्वातिभक्तितः ।
स्वराज्ये स्थापयामास तदाचारपरः स्वयम् ॥ ५८ ॥
भूत्वा चकार राज्यं स सर्वधर्मसमन्वितः ।
नास्तिकस्य च यान्यासन् शास्त्राणि पृथिवीतले ॥ ५९ ॥
तानि सर्वाणि चिक्षेप जले ये तदुपासकाः ।
तान् सर्वान् दण्डयित्वा स चकारास्तिकसंमतान् ॥ ६० ॥
श्रीमदुदयनाचार्यं चक्रे राजगुरुं नृपः ।
जीविकार्थे ददौ ग्रामान् स्वयमाज्ञापरोऽभवत् ॥ ६१ ॥
एकदोदयनाचार्यो जगन्नाथदिदृक्षया ।
पुरुषोत्तमपुरे गत्वा स्नात्वा तत्तीर्थवारिणा ॥ ६२ ॥
मार्कण्डेयह्रदाद्येन मन्दिरद्वारमागतः ।
देवं द्रष्टुं मन्दिरान्तः प्रवेष्टुं चलितो यदा ॥ ६३ ॥
तदा कपाटः संलग्नः स्वयमेव निरीक्ष्य सः ।
द्वारान्तरमुपायातस्तदाप्येवं बभूव ह ॥ ६४ ॥
अथ तृतीये द्वारे तु संप्राप्तः स यदा द्विजः ।
तत्रापि स कपाटस्तु स्वयं लग्नः पुनश्च सः ॥ ६५ ॥

चतुर्थं द्वारमागत्य मन्दिरं गन्तुमुद्यतः ।
तमप्यपश्यत् संलग्नं कपाटं द्वयमेव हि ॥ ६६ ॥
इति कौतुकमेतत् तु पश्यन्तस्ते जनाः स्थिताः ।
तदा तूदयनाचार्यः सदिमतं वाक्यमब्रवीत् ॥ ६७ ॥
जगन्नाथ सुरश्रेष्ठ भक्त्यहङ्कारपूर्वकम् ।
ऐश्वर्यमदमत्तोसि मामवज्ञाय वर्तसे ॥ ६८ ॥
उपस्थितेषु बौद्धेषु मदधीना तव स्थितिः ।
इत्येवमुक्ते श्लोके तु सहसोद्घाटिताः स्वयम् ॥ ६९ ॥
कपाटास्तत्क्षणादेव नृणां चित्रं तु पश्यताम् ।
ततस्तत्र स्थिता येषु जगन्नाथस्य पूजकाः ॥ ७० ॥
ते सर्वे विनयात् तं तु गृहीत्वाचार्यमादृताः ।
नीत्वाथ मन्दिरे देवं दर्शयन्ति स्म हर्षिताः ॥ ७१ ॥
सोऽपि दृष्ट्वा जगन्नाथं संपूज्य स्तुतिभिर्मुहुः ।
स्तुत्वा जप्त्वा समभ्येत्य बहिर्दत्त्वा धनानि च ॥ ७२ ॥
उषित्वा कतिचिद्रात्रीः समायातुमथोद्यतः । ,
अथ स्वप्ने जगन्नाथः पूजकब्राह्मणान् स्वयम् ॥ ७३ ॥
उवाच मम यच्चास्ति पीताम्बरमनुत्तमम् ।
तद्देह्युदयनाचार्यायाशु सोऽतीव मे प्रियः ॥ ७४ ॥
ममैवांशो न सन्देहो ऽनेनैव स्थापितोऽस्म्यहम् ।
तिरस्कृतो महामूढबौद्धसिद्धान्तवादिभिः ॥ ७५ ॥
इति दृष्ट्वा तु ते स्वप्नं पूजकाः प्रातरुत्थिताः ।
परस्परं स्वप्नमध्ये मन्त्रयित्वातिभक्तितः ॥ ७६ ॥
पीताम्बरं समानीय जगन्नाथाज्ञया ददौ ।
आचार्याय ततः सोऽपि धृत्वा तन्निजमस्तके ॥ ७७ ॥
प्रणनाम मुहुर्देवं जगन्नाथं मुदा द्विजः ।

एवं ततो जगन्नाथप्रसादं प्राप्य स द्विजः ॥ ७८ ॥
मिथिलामाजगामाशु निजमन्दिरमुत्तमम् ।
तत्र शिष्योपशिष्यैश्च सेवितः परमादरात् ॥ ७९ ॥
अध्यापयामास मुहुः सर्वशास्त्राणि यत्नतः ।
अधीत्य तस्मादाचार्याद्वेदशास्त्राणि सर्वशः ॥ ८० ॥
धर्मं संस्थापयामासुर्देशेदेशेऽतिपण्डिताः ।
अद्यापि मिथिलायां तु तदन्वयभवा द्विजाः ॥ ८१ ॥
विद्वांसः शास्त्रसम्पन्नाः पाठयन्ति गृहेगृहे ।
स तु कालेन महता वृद्धो भूत्वा जरातुरः ॥ ८२ ॥
काशीमागत्य कतिचित् स्थित्वा तत्र दिनानि च ।
मणिकर्ण्यां ब्रह्मनाले प्राणांस्तत्याज लीलया ॥ ८३ ॥
प्राप्तः पुरातनं देहं वैष्णवं सुरदुर्लभम् ।
एवं सोदयनाचार्यो बभूव पृथिवीतले ॥ ८४ ॥
धर्मसंस्थापनार्थाय नास्तिकानां निवृत्तये ।
शृण्वन् चरितमेतस्य नरो बुद्ध्या महीयते ॥ ८५ ॥

इति भविष्यपुराणपरिशिष्टे उदयनाचार्यचरितं नाम त्रिंशोऽध्यायः ॥ ३० ॥

इत्थं स्थूलेन प्रकारेणोदयनाचार्याणां देशकालस्थितीनां निर्णयो भवति सूक्ष्मेन प्रकारेण तु तत्कृतलक्षणावलीग्रन्थान्तस्थेन श्लोकेन

"तर्काम्बराङ्कप्रमितेष्वतीतेषु ९०६ शकान्ततः ।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ॥"

इत्यनेन ९०६ शाकवर्षे तेषां स्थितिरासीदिति नि-

ष्पन्नं भवति । शकान्तत इत्युक्त्या शाकवर्ष एव ग्राह्यो यथो-
क्तमत्रैव भूमिकायां १०४ पृ. सिद्धान्तशिरोमणिगणिताध्या-
यस्थं भास्कराचार्यवाक्यम्

"शकनृपस्यान्ते कलेर्वत्सराः ।" इत्यादि ।

अस्मन्निकटे तार्किकरक्षाटीकाया ज्ञानपूर्णकृतायाः पु-
स्तकं १३२४ शाकवर्षे लिखितं वर्तते । टीकाग्रन्थे च उ-
दयनाचार्यस्य नाम समुद्धृतम् । ज्ञानपूर्णश्च विष्णुस्वामिनः
शिष्यः । अपि च ११९९ विक्रमवर्षे १०६४ शाकवर्षे कु-
मारपालस्य राज्ञो राज्याभिषेकोऽभूत् तस्मिन्नेव समये
मध्वाचार्य आसीदिति आर्यविद्यासुधाकरे निरूपितम् मध्वा-
चार्यात्पूर्वं विष्णुस्वाम्यासीदिति भगवद्भक्तमाहात्म्ये ३१
अध्याये निरूपितमित्यनेन ९०६ शाकाब्दे उदयनाचार्य-
स्थितिर्न विरुद्धा ।

अपि च ११६४ शाकाब्दे लिखिता नैषधचरितटी-
का नेपालदेशे वर्तत इति तत्रत्यलिखितपुस्तकसूचीपत्रे भूमि-
कायां ३२ पृ० निरूपितम् ।

अन्यच्च

"युग्माश्वार्कैर्निरुक्ते ९७२ शकनृपतिसमे कान्यकुब्जेश्वरस्य
आदेशं प्राप्य यत्नान्नलचरितमहाकाव्यटीकां व्यधत्त ।
सूरिर्भूदेवसञ्ज्ञो दिनमणितनयः कूर्मपूर्वाग्रजन्मा
तुष्यात् तेनान्तरात्मा त्रिभुवनजनकोमापतिश्रीमहेशः॥"इति ।

इत्युक्तनैषधचरितटीकाभ्यां ९७२ शाकवर्षेभ्यः पूर्वं
नैषधचरितकर्त्तुः श्रीहर्षस्य स्थितौ सत्यामेव खण्डनखण्ड-
खाद्यग्रन्थे "शङ्का चेदनुमास्त्येव"इत्यादिकुसुमाञ्जलिकारि-
कोद्धारे ९०६ शाकाब्दे उदयनाचार्यस्थितौ नासम-

ज्ञसं किमपि(१)।

(१) अत्रान्येषामैतिहासिकानां मतानि वर्तन्ते। "श्रीहर्षकविः श्रीहीरपण्डितात् मामल्लदेव्यां समजनि। पूर्वस्यां वाराणस्यां(१) पुरि गोविन्दचन्द्रो नाम राजा तत्पुत्रो विजयचन्द्र तत्पुत्रो जयन्तचन्द्रः जयन्तचन्द्रस्य पुत्रो मेघचन्द्र. तस्य राज्ञो बहवो विद्वास. तत्रैको हीरनामा विप्रः तस्य नन्दन श्रीहर्ष. सोऽपि बालावस्थ. सभायां राजकीयनैकेन पण्डितेन वादिना हीरो राजसमक्ष शिरसा मुद्रितवदन. कृत।

इत्यादि सर्वे राजशेखरसूरिणा १३४८ खीष्टाब्दे विरचिते प्रबन्धकोशे श्रीहर्षविद्याधरजयन्तचन्द्रप्रबन्धात् गौडदेशीय इत्यवगम्यते।

प्राचीनलेखमालायां २३ लेखे स० १२४३, २२ लेखे जयश्चन्द्रीयराज्यदानपत्रे स० १२२५ लिखित इत्थ च जयन्तचन्द्रस्य द्वादशखीष्टशतके स्थितिनिश्चयान्नैषधीयचरितकर्तुः श्रीहर्षस्यापि तदैव स्थितिर्निश्चिता। अत एव जयन्तचन्द्रपितृविजयचन्द्रवर्णनात्मकमेव विजयप्रशस्तिरचनातातस्य इति पञ्चमसर्गसमाप्तिश्लोके स्वकीयविशेषणध्वनितविजयप्रशस्तिनामक काव्य भवेत्। अस्मिंश्च विषये बहुना विसवाद प्रदर्श्य तत्खण्डनपूर्विका डाक्तरबुलरसमतिरपि तथाहि तदीय रायल् एशियाटिक् सासाइटी बांबे ब्राञ्च इति नामभूषितविद्वत्सभया १८७५ खीष्टाब्दे प्रकाशिते प्रबन्धग्रन्थे पृ० २७९–२८७ मुद्रित व्याख्यानम्।

अथ जयन्तचन्द्रो जयचन्द्र एव य किल राठौरवंशीयानां कान्यकुब्जाधिपानामन्तिमो वाराणस्यधिपतिर्बभूव यं च खीष्टस्य ११९५ वर्षे यवना राज्यात् प्रसह्य प्रभ्रंशयांचक्रु.।

श्रीमान् काशीनाथस्त्र्यम्बकसूनुस्तैलङ्ग कुसुमाञ्जलिकर्तुरुद-

(१) कान्यकुब्जेश्वरत्वेपि काश्यादितीर्थाधिपतित्वमपि तदीयताम्रपत्रादवगम्यते। किं तु ताम्बूलद्वयमासन च लभते यः कान्यकुब्जेश्वरादित्यनेनात्र विजयचन्द्र एव ग्राह्य इत्यत्र प्रमाण राजशेखर एव जानाति।

उदयनाचार्येण न्यायवार्त्तिकतात्पर्यपरिशुद्धौ २ अध्याये २ आह्निके "मयाश्रितोऽस्माभिस्तु न्यायकुसुमाञ्जलाविति" इति ।

तत्रैव ३ अ. १ आ. "विश्वासस्योदयोद्रेका"दित्यादि-

यनाचार्यस्य समयं(१) निरूपयन् प्रसङ्गतः श्रीहर्षस्यापि समयविवेकमन्वयध्नात् तत्रादर्शयत् श्रीहर्षः खीष्टस्य नवम्यां दशम्यां वा शताब्द्यां बभूव न तु द्वादश्याम् ।

अहमदाबादसमीपे ढोलकाग्रामे चाण्डुपण्डितेन १३५२ संवत्सरे(२) नैषधटीका व्यरचि । तत्रैवं दृश्यते पङ्क्तिः "प्रथमं तावत्कविर्जिगीषुकथायां स्वपितृपरिभावुकमुदयनमत्यमर्षणतया कटाक्षयंस्तद्ग्रन्थानुद्ग्रन्थयितुं खण्डनं प्रारिप्सुः" इत्यादि

केचित्तु "विजयप्रशस्तिरचनातातस्य" इति नैषधचरितपञ्चमसर्गान्तश्लोकदर्शनात् "ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरा"दित्यादिदर्शनाच्च ताम्रपत्रोपात्तस्य कान्यकुब्जाधिपतेर्विजयचन्द्रदेवस्य संवत् १२२५ वर्षे जयचन्द्राय यौवराज्यं ददतः उक्तसमयात्पूर्वं स्थायी कान्यकुब्जश्च श्रीहर्ष इति वदन्ति तत्तुच्छम् "गौडोर्वीशकुलप्रशस्तिभणिते"ति ७ सर्गान्ते दर्शनात् वङ्गदेशीयोऽपि सम्भवति । विजयचन्द्रनाम्नैव तत्समयापरस्थायी चेदि इण्डियन् अण्टिकेरीसञ्ज्ञके पत्रे सन् १८८६ मईमासमुद्रिते पृष्ठे १४१ मुद्रिते ताम्रपत्रे श्रीहर्षेण प्रयुक्तस्य शासनस्य स्थिरायतेः इतिदर्शनात् तात्कालिकोऽपि श्रीहर्षो भवेत् तत्ताम्रपत्रं तु ७९४ शाकाब्दे लिखितमिति ॥"

(१) इण्डियन् अण्टिकेरी प्रथमपुस्तके २९७ पृ० ३५२ पृ० द्वितीयपुस्तके ७१ पृ० च।

(२) तदीयसमाप्तौ श्लोकः

श्रीविक्रमार्कसमयाच्छरदामयत्रि-
पञ्चाशता समधिकेष्वितेषु ?।
तेषु त्रयोदशसु माद्रपदे च शुक्ल-
पक्षे त्रयोदशतिथौ रविवासरे च ॥

पद्यं लिखितम् इदमेव पद्यं किरणावल्यामारम्भे ऽपि ।

अपि च "अपसिद्धान्तस्तु यथा विरोधाद्भिद्यते तथा तत्रैव वक्ष्यते । शेषं परिशिष्टे । " इति ।

किरणावल्यां "विस्तरस्तु न्यायकुसुमाञ्जलावात्मतत्त्ववि-वेके चानुसन्धेयः । " इति ।

तात्पर्यपरिशुद्धि-किरणावल्युक्तमेव "त्रियामन्ऽयोदयोद्रे-का"दित्यादिपद्यं लक्षणावल्याम् ।

प्रबोधसिद्धिर्बोधसिद्धिर्बोधशुद्धिर्न्यायपरिशिष्टं चेत्येकस्यैव ग्रन्थस्य नामभेदा इति वरदराजाचार्येण तार्किकरक्षायां ३१० पृ. निरूपितमिति उक्तस्य निबन्धषट्कस्यैककर्तृकत्वं निर्विवादम् ।

त्रिदण्डिवेदान्तिनो वदन्ति उदयनाचार्याणामात्मतत्त्ववि-वेके ऽन्ते "अत एव त्रिदण्डिवेदान्तिमतोपसंहार" इत्युक्त्या मपघ्नामृतग्रन्थेन १०१२ शाकाब्दे रामानुजाचार्याणां स्थिति-सिद्धौ तत एव त्रिदण्डिवेदान्तिमतप्रचारात् तत्कालपूर्ववर्त्तित्वा-सम्भवाल्लक्षणावल्युक्त ९०६ शाकाब्दे उदयनाचार्याणां स्थिति-र्न सम्भवतीति । तन्न रामानुजाचार्येभ्योऽपि बहुपूर्ववर्तिन-टङ्क-द्रमिण-गुहदेव-भारुच्यादयोऽपि विशिष्टाद्वैतवादिन एक-दण्डी त्रिदण्डी वेति मनुस्मरणात् त्रिदण्डिवेदान्तिमतस्यापि चि-रन्तनत्वादिति ।

अपि च सुरेश्वराचार्येण बृहदारण्यकवार्त्तिके ५ ब्राह्मणे ३ अध्याये "सत्रिदण्डवदि"त्युक्तत्वात् शङ्कराचार्याणामपि समये त्रिदण्डिमतसत्त्वात् शङ्कराचार्यात् पश्चात्कालवर्त्तिनो वाचस्प-तिमिश्रस्य पश्चात् कालवर्त्तिन उदयनाचार्यस्य त्रिदण्डिमतो-पन्यासे नासमञ्जसं किमपि । सम्प्रदायपूर्वकत्वेन रामानुजाचार्य-परत्वे तत्राग्रहश्चेत् तदा क्लिष्टकल्पनया निर्वाहो भवितुमर्हति तथा

हि १०१२ शाकाब्दोऽन्त्यसमयो १२० वर्षपरिमितपरमायुषां रामानुजाचार्याणां ८९२ शाकाब्दे जन्मसिद्धौ लक्षणावल्युक्त ९०६ शाकाब्दात् परमपि उदयनाचार्याणां स्थितिसम्भवादिति ।

यथोक्तं पञ्चरत्ने ।

"ख्यातो गोवर्द्धनाचार्य उमापतिधरस्तथा ।
शरणो जयदेवश्च धोयी कविनृपः क्रमात् ॥
राज्ञो लक्ष्मणसेनस्य पञ्चरत्नानि संसदि ॥" इति ।

गोवर्धनाचार्येण शृङ्गारसप्तशत्यामन्ते ।

"उदयनबलभद्राभ्यां सप्तशती शिष्यसोदराभ्यां मे ।
द्यौरिव रविचन्द्राभ्यां प्रकाशिता निर्मलीकृत्य ॥

अत्रोदयन उदयनाचार्य इति व्यङ्ग्यार्थसन्दीपनाख्ये सप्तशतीव्याख्याने आनन्दपण्डितेन व्याख्यातम् ।

एतेन उदयनाचार्यो लक्ष्मणसेनस्य राज्ञः सभायामासीदिति निष्पन्नम् । लक्ष्मणसेनश्चातिप्रसिद्धो राजाभूदिति तत्संवत्सरश्च ल० सं० इत्याकारेण मिथिलादेशीयलिखितपुस्तकादिषु दृश्यते तत्संवत्सरप्रवृत्तिकालविषये उक्तं गणकैर्देशभाषया ।

"शाके सो सन् जानब सोई । रहित बाणशशिबाण ५१५ जो होई ।
जासन् जमा रहै सो देखहु । शरशशिवाण५१५हीन कर लेखहु ॥
बाकी रहै सो ल० सं० प्रमान । गुरु ज्ञानीजन भाषाभान ।
अरु चौपट् एकादश दीजै । ल० सं० सहित संवत् करलीजे ॥" इति ।

इत्यनेन १०२९ शाकाब्दे लक्ष्मणसेनसंवत्सरप्रवृत्तिः सम्भवति । अथ च "मैथिलकोकिलविद्यापति" नामके पुस्तके ११ पृष्ठे समुद्धृते दानपत्रे ल० सं० २९३ शाके १३२१ इति लिखितत्वाद् स एव समयः समायाति । किन्तु वल्लालसेनकृताद्भुत-

सागरे ग्रन्थनिर्माणकालः १०८९ शाकाब्दो लिखितस्तत्र लक्ष्मणसेनस्यापि नाम वर्तते इति ६० वर्षपरिमितकालान्तरे लक्ष्मणसेनवल्लालसेनयोः स्थितेर्नासम्भवः परन्तु लक्ष्मणसेन एव पूर्वपुरुषः आनन्दभट्टेन वल्लालसेनचरिते वल्लालसेनस्य पुत्रो लक्ष्मणसेन इति प्रतिपादितं तत्र लक्ष्मणसेन इत्यत्र लवणसेन इति पुस्तकान्तरे पाठदर्शनात् लक्ष्मणसेनश्च पूर्वपुरुष इत्यत्र नासमञ्जसं किमपि ।

तथा च लक्षणावल्युक्त ९०६ शाकाब्दे वर्तमान उदयनाचार्यः १०२९ शाकाब्दासन्ने समये वा १०२९ शाकाब्दात् परं १०८९ शाकाब्दात् पूर्वं ६० वर्षाभ्यन्तरेऽपि आसीदित्यसम्भवाल्लक्ष्मणसेनसंसदि वर्तमानो गोवर्धनाचार्यस्य भ्राता भिन्न एवोदयनाचार्य इति ।

एवं गोवर्धनाचार्यस्य भ्राता वलभद्रो ऽपि भिन्नः पद्मनाभमिश्रस्य पिता वलभद्रो मिश्र एव अनेन किरणावलीभास्करे वर्द्धमानोपाध्यायस्य नाम समुद्धृतमिति प्रतिपादितमस्यामेव भूमिकायां १२ पृष्ठे ।

एवं गीतगोविन्दटीकाकार उदयनाचार्यः कश्चिदन्य एव गीतगोविन्दकर्तुर्जयदेवस्य रजनीकान्तगुप्तमहाशयेन १३०० शाकाब्दे पण्डितपत्रमुद्रितप्रसन्नराघवनाटकभूमिकायां पण्डितगोविन्ददेवशास्त्रिणा च स्थितेर्निर्द्धारणात् गीतगोविन्दटीकाकर्तुः तत्पश्चात्कालभावित्वात् ।

अपरोऽपि वत्सराजापरनामधेय उदयनः सुतरां भिन्नस्तत्कथा च विष्णुपुराणे ४ अंशे २१ अध्याये कथासरित्सागरे ऽपि निरूपिता इति ॥

## न्यायनिबन्धप्रकाशकर्तुः श्रीवर्द्धमानोपाध्यायस्य चरितम् ।

---

वर्द्धमाननामानोऽपि अनेके पण्डिता अभूवन् परं तु न्यायनिबन्धप्रकाशकर्ता एवेदानीं प्राधान्येन निरूपणीयः । तथाहि न्यायनिबन्धप्रकाशान्ते

"यस्तर्कतन्त्रशतपत्रसहस्ररश्मि-
गङ्गेश्वरः सुकविकैरवकाननेन्दुः ।
तस्मात्मजः पितुरश्रीरव निबन्धमित्थं
प्राकाशयत् कृतिमुदे मुखवर्द्धमानः ॥" इति

कुसुमाञ्जलिप्रकाशादावपि

"न्यायाम्भोजपतङ्गाय मीमांसापारदर्शिने ।
गङ्गेश्वराय गुरवे पित्रे ऽत्रभवते नमः ॥" इति

तत्त्वचिन्तामणौ च

" गङ्गेशस्तनुते मितेन वचसा श्रीतत्त्वचिन्तामणिम्"

एतावता निष्पन्नं भवति दिगन्तविश्रान्तकीर्तेस्तत्त्वचिन्तामण्यादिकर्तुः श्रीगङ्गेशोपाध्यायस्य पुत्रः शिष्यश्च वर्द्धमानोपाध्याय इति । गङ्गेशोपाध्यायश्च कस्मिन् देशे कस्मिन् काले आविरभूदितीदानींपर्यन्तं तदीयोपलब्धेषु ग्रन्थेषु नोपलभ्यते किन्तु तत्त्वचिन्तामणावनुमानपरिच्छेदे "इति खण्डनकारमतमपास्त"मित्युक्त्या श्रीहर्षसमयात् पश्चात्कालभावी १२९३ शाकाब्दे सुधापयुनिबन्धकर्त्रा वाचस्पतिमिश्रेण तत्त्वचिन्तामणिग्रन्थस्य व्याख्यानतयादुक्तशाकाब्दपूर्वकालभावीति नात्र सन्देहः ।

अपि च १४०० ईशवीयवर्षे १३२२ शाकाब्दे वर्तमानस्य मैथिलकोकिलविद्यापतेः पक्षधरमिश्रापरपर्यायस्य तत्त्वचिन्तामण्यालोककारस्य जयदेवमिश्रस्य पितृव्याद्धरिमिश्राद्विद्यासम्पादनं तमेव समयं द्रढयति।

अपि च मिथिलादेशाधिपतेर्महेशठक्कुरस्य भ्राता मेघठाकुरापरपर्यायो भगीरथठक्कुरो विंशाब्दवयस्को जयदेवमिश्रात् संपूर्णं न्यायशास्त्रमधीतवानिति तत्कृतकिरणावलीप्रकाशप्रकाशिकाग्रन्थादवगम्यते तथाहि

"यः कैशोरे विश्वविख्यातकर्मा
धर्माचार्यः श्रीमहादेवशर्मा।
तत्सोदर्यो वर्द्धमानस्य सूक्तौ
भावं मेघः सम्यगाविष्करोति॥"

"विंशाब्दे जयदेवपण्डितकवेस्तर्काब्धिपारं गतः
श्रीमानेष भगीरथः समजनि श्रीचन्द्रपत्यात्मजः।
श्रीधीरातनयेन तेन रचिता श्रीमन्महेशाग्रज–
श्रीदामोदरपूर्वजेन जयतादाचन्द्रमेषा कृतिः॥"

अन्यच्च

आसीत् पण्डितमण्डलाग्रगणितो भूमण्डलाखण्डलो
जातः खण्डवलाकुले गिरिसुताभक्तो महेशः कृती।
शाके रन्ध्रतुरङ्गमश्रुतिमहीसंलक्षिते १४७८ हायने
वाग्देवीकृपयाऽस्तु येन मिथिलादेशः समस्तोऽर्जितः॥

पद्यमिदं मिथिलायां जनकपुरस्थानात् पञ्चक्रोशान्तर ईशानभागे धनुःपृक्षेत्रे (धनुखा) कूपे प्रस्तरपट्टे लिखितमस्ति।

तत्रान्यान्यपि पद्यानि सन्ति ।

इत्यनेन १४७८ शाकाब्दे विद्याविभवसम्पन्नेन महेशठक्कुरेण वृद्धावस्थायां मिथिलाराज्यं प्राप्तम् तथा च भगीरथठक्कुरेण २० वर्षवयस्केन वृद्धादेव जयदेवपण्डितकर्त्रैः न्यायशास्त्रमधीतमिति १३७८ शाकाब्देऽपि जयदेवस्थितिः(१) सम्भवतीति १२९३ शाकाब्दादपि पूर्वकालभावी गङ्गेशोपाध्याय इति नासम्भवी तस्मिन्नेव काले वर्द्धमानोपाध्यायोऽप्यासीदिति ।

पाँजीपुस्तकाल्लोकप्रसिद्ध्या च वर्द्धमानोपाध्यायो मैथिल एव अनेनैव न्यायवार्त्तिकतात्पर्यपरिशुद्धिप्रकाशापरपर्यायन्यायनिबन्धप्रकाश—न्यायपरिशिष्टप्रकाश—न्वीक्षानयतत्त्वबोधादयो ग्रन्था रचिता इति प्रतिपादितमधस्तात् । तत्पित्रा लोकोत्तरविद्याविभवबुद्धिशालिना महर्षिकल्पेन श्रीगङ्गेशोपाध्यायेनैतादृशस्तत्त्वचिन्तामणिन्यायमहानिबन्धो रचितो यद् वर्द्धमानोपाध्याय—पक्षधरमिश्र—रुचिदत्त—गोकुलनाथोपाध्याय—मधुसूदनमिश्र—प्रभृतिभिर्मैथिलपण्डितैः

---

(१) कुसुमाञ्जलिभूमिकायां ११८९ शाकाब्दे जयदेवस्थितिं संस्थाप्य "शाके मुनिव्योमयुगेन्दुगण्ये १४०७" इति चैतन्यदेवजन्मव्ययस्थापकपद्यस्थं युगशब्दं चैतन्यचन्द्रोदयनाटकस्थेन "शाके चतुर्दशशते रविवाजियुक्ते १४०७" इतिपद्येन चतुर्थाचकं दर्शीकृत्य रघुनाथशिरोमणिचैतन्यदेवयोरेककालावस्थायित्वात् शिरोमणिजयदेवमिश्रयोः संवादं खण्डयन्ति । तत्तुच्छम् ३८६ लक्ष्मणसेनवर्षे १४१५ शाकाब्दे वर्तमानेन रुचिदत्तेन "अधीत्य रुचिदत्तेन जयदेवाज्जगद्गुरोः" इत्युक्तेः १३२२ शाकाब्दे वर्तमानाज्जयदेवपितृव्याद्धरिमिश्रान्मैथिलकोकिलविद्यापतेरध्ययनस्यानुपपत्तेः ।

वासुदेवसार्वभौम–रघुनाथतार्किकशिरोमणि–मथुरानाथ–भवानन्द–जगदीश–गदाधर–चन्द्रनारायण–कालीशङ्करप्रभृतिभिर्वङ्गदेशीयैः पण्डितैर्महादेव–कृष्णम्भट्ट–राघवेन्द्राचार्यादिभिर्दाक्षिणात्यपण्डितैश्च साक्षात् परम्परया वा व्याख्यातत्वात् क्रोडपत्रादिना च संवलितत्वात् श्लोकानां लक्षाणामष्टाविंशत्या चपबृंहित इदानीं नवीनन्यायत्वेन लोके व्यवह्रियते इत्यादि प्रतिपादितमस्माभिर्वाराणसीमुद्रिते चौखंबासंस्कृतसीरीजपुस्तके क्रोडपत्रसंग्रहे भूमिकायां १ । २ । ३ खण्डेषु । किं तु नवीनत्वव्यवहारः शास्त्रतात्पर्यानवबोधात् गङ्गेशोपाध्यायेन तत्त्वचिन्तामणिग्रन्थे आदावेव "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी"ति गोतमसूत्रमवलम्ब्य "प्रमाणतत्त्वं विविच्यत" इत्यादिना तत्त्वचिन्तामणिग्रन्थो रचित इति न नवीनत्वं किमपि। यत्तु अवच्छेदकावच्छिन्नशब्दादिभिर्व्याख्यातत्वेन नवीनत्वसाधनं तदपि शास्त्रतात्पर्यानवबोधादेव । पातञ्जलदर्शने समाधिपादे २६ सूत्रं "पूर्वेषामपि गुरुः कालेनाऽनवच्छेदात्" । अत्र व्यासभाष्यम् "पूर्वे हि गुरवः का लेनाऽवच्छेद्यन्ते यत्रावच्छेदार्थेन कालो नोपावर्तते" इति । अत्र भाष्यटीकायां वाचस्पतिमिश्राः "व्याचष्टे पूर्वे हि इति । कालस्तु शतवर्षादिः अवच्छेदार्थेन अवच्छेदेन प्रयोजनेन नोपावर्तते । " इत्यादिदर्शनादिति ।

गङ्गेशोपाध्यायादिनैयायिकानामुक्तानां चरितानि सप्रमाणानि श्रीमता वाराणसीस्थराजकीयसंस्कृतपाठशालीयसरस्वतीभवनस्थपुस्तकप्रधानाध्यक्षेण श्रीगोपीनाथकविराज–एम्. ए. महाशयेन सङ्गृहीतानि तानि शीघ्रमेव प्रकाशितानि भविष्यन्तीति मयात्रोपरम्यत इति ।

तत्त्वचिन्तामण्यादिनिबन्धानामाधारभूतं तदिदं न्यायवार्त्तिकमेशिआटिक्सोसाइटीबङ्गालसभानिदेशेन मत्संशोधनपूर्वकं प्रथमं मुद्रितमिदानींपर्यन्तं न्यायदर्शनानुरागिभिर्निःशेषं सर्वाणि तन्मुद्रितपुस्तकानि गृहीतानि उपयोजितानि च तत्तत्कार्येष्विति मया सहर्षं पुनरपि चौखंबाबुक्डिपोसम्पादकसेठहरिदासात्मजसेठजयकृष्णदासप्रार्थनया मुद्रितम् । भूमिकापीयमेशियाटिक्सोसाइटीबङ्गालसभाद्वारैव प्रथमं मुद्रयितुमारब्धा किन्तु विलम्बमसहमानैरस्त्यर्थं भृशं नोदितोऽहमेनां मुद्रितवान् । इदानीं रोगार्तत्वादनवहितचेतसो मम दृष्टिदोषेण च जाता अशुद्धीः क्षाम्यन्तु दयापरा विद्वांसः सफलयन्तु मामकीनं परिश्रममिति भूयो भूय एव परमेश्वरं प्रार्थय इति शम् ॥

सरस्वतीभवन<br>
गवर्नमेण्टसंस्कृतकालेज<br>
बनारस<br>
२५ दिसम्बरमासे<br>
१९१६ इसवीये वर्षे

विन्ध्येश्वरीप्रसादद्विवेदी

॥ श्रीः ॥



भूमिकेयं मुद्रितशुद्धिपत्त्रसंयोगेन पठनीया किं तु यासामशुद्धीनां दर्शनमात्रादेव बोधो भवति तासां नात्र समावेशः कृतः।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | २१ | Fitzdward | Fitz Edward |
| ७ | २३ | ॥ ३०० । | ३६०० |
| १६ | २१ | भावने | भापते |
| १६ | २५ | इदृश्यमाने | दृश्यमाने |
| २७ | ७ | वदान्तिकार्थः | वैदान्तिकार्थः। |
| २८ | २ | षतसृणां | चतसृणां |
| ३० | १ | रम्भौध | रम्भौध |
| ,, | ,, | मनुः | मनुः |
| ३५ | २५ | पूर्व काला | पूर्वकाला |
| ३५ | २६ | भावःपड्विधः | भावः पड्विधः |
| ३६ | २३ | सिद्धान्तः | सिद्धान्त- |
| ३९ | ३० | आध्यायेषु | अध्यायेषु |
| ४० | २० | चतुःषष्टि | चतुःषष्टि |
| ४५ | ३ | सानुद्वेष्टि | नानुद्वेष्टि |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४५ | ५ | संम्राट् | सम्राट् |
| ४६ | १७ | अहोऽनु | अहो अनु |
| ४९ | ६ | नीतिसु | नीतिषु |
| ४९ | ७ | चन्द्रिकानां | चन्द्रिकाणां |
| ४९ | १८ | शाविषाणा | शशविषाणा |
| ५४ | ६ | स्थाप्य | सस्थाप्य |
| ६२ | ११ | तिमि | मिति |
| ६३ | २ | निष्पन्न | निष्पन्नं |
| ६३ | ५ | न्यासूत्र | न्यायसूत्र |
| ६३ | १३ | कृताः | कृता |
| ६३ | २१ | सम यस्य | समयस्य |
| ६३ | २५ | Travcls | Travels |
| ६६ | १० | देवधीष्टे(?) | देवधिष्टे(?) |
| ६८ | ५ | सदसद्येनि | सदसद्येति |
| ६८ | ६ | उपारम्भाब्धि | उपारम्भब्धि |
| ६८ | २२ | जैनदर्शने | जैननिबन्धो दृधृतसूत्रे |
| ७० | १२ | जैनागमेषु | जैननिबन्धो· दृधृतसूत्रे |
| ७० | १६ | तिरष्कृत | तिरस्कृत |
| ७२ | १५ | यथा यथं | यथायथ |
| ७७ | १५ | ग्राम्यह्लोको | ग्राम्यँह्लोको |
| ७८ | १२ | रम्भत् | रम्भात् |
| ८१ | २४ | नप्येक | नाप्येक |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम |
| --- | --- | --- | --- |
| ८४ | १६ | पनूसेंट | पनूसेंट |
| ८५ | २ | वत्सपुत्रस्य | (वत्सपुत्रस्य) वात्से पुत्रस्य |
| ८७ | १ | समञ्जस | समञ्जस |
| ९० | १२ | निर्वाणत्वं . | निर्वाणं |
| ९१ | ११ | शताभ्यां | शताभ्यां |
| ९४ | ११ | अवनीपत्तिः | अवनीपतिः |
| ९७ | ३ | तत्पश्चात्काल | तत्पूर्वकाल |
| ९७ | २७ | सप्तमन्वन्तराणि | सप्त मन्वन्तराणि |
| १०७ | २५ | रश्मौ | रश्मौ |
| १०८ | २६ | रङ्गिराव्यासो | रङ्गिरा व्यासो |
| ११२ | ६ | दक्षाद्याः | दक्षाद्या |
| ११४ | २२ | चतुर्थ | चतुर्थ |
| ११४ | २३ | पुष्कर्द्वीपो | पुष्करद्वीपो |
| ११७ | १७ | निर्वाणत्वं | निर्वाणं |
| ११८ | ६ | जैना गमे | जैनागमे |
| १२० | १ | न्यायवीद्या | न्यायविद्या |
| १२१ | १६ | सन्तनु | शन्तनु |
| १२१ | २५ | रीरिता | रीरिताः |
| १२२ | २४ | णाङ्काः | णाङ्का |
| १२९ | १२ | वृतिः | वृत्तिः |
| १३२ | २२ | क्षमेथाः | क्षमेथा |
| १३४ | २२ | पाठेऽयं | पाठोऽयं |
| १३६ | २४ | इच्छामि | इच्छामि |

| | | | |
|---|---|---|---|
| १३८ | २९ | चरितम् । रचित | चरितं रचितम् |
| १३९ | ८ | रचिता - | रचिताः |
| १२९ | २४ | अन्वेषकं मन्याः | अन्वेषकंमन्या. |
| १४० | २१ | शुकेशाः | सुकेशाः |
| १४५ | ११ | परिशुद्धि | परिशुद्धि |
| १५० | २४ | षडदर्शन | षड्दर्शन |
| १५४ | ३ | विदादं | विवादं |
| १५४ | ५ | ग्राम | ग्रामे |
| १५५ | १७ | महाश्चर्यं | महाश्चर्यं |
| १५८ | १० | येषु | ये तु |
| १६३ | ५ | वे चा | वेके चा |



ॐ श्रीगणेशाय नमः ।

—:०:—

# न्यायवार्त्तिकम् ।

## श्रीभारद्वाजोद्द्योतकरविरचितम् ।

### प्रथमोऽध्यायः ।

यदक्षपादः प्रवरो मुनीनां
शमाय शास्त्रं जगतो जगाद ।
कुतार्किकाज्ञाननिवृत्तिहेतुः
करिष्यते तस्य मया निबन्धः(१) ॥

प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसाधिगम इत्येतच्छास्त्रस्यादिसूत्रं(२) तस्याभिसम्बन्धवाक्यं प्रमाणतोऽर्थप्रतिपत्तावित्येवमादि तस्यानुसन्धानवाक्यं शास्त्रस्य पुरुषश्रेयोभिधायकत्वात् । शास्त्रं पुनः प्रमाणादिवाचकपदसमूहो व्यूहविशिष्टः पदं पुनर्वर्णसमूहः पदसमूहः सूत्रं सूत्रसमूहः प्रकरणं प्रकरणसमूह आह्निकम् आह्निकसमूहोऽध्यायः पञ्चाध्यायी शास्त्रम् । तत्पदार्थाः प्रमाणादयः तस्य शास्त्रस्य पदानामर्थाः प्रमाणादयः षोडशात्मानः

(१) "अथ भगवता अक्षपादेन निःश्रेयसहेतौ शास्त्रे प्रणीते व्युत्पादिते च भगवता पक्षिलस्वामिना किमपरमवशिष्यते यदर्थं वार्त्तिकारम्भ इति शङ्कां निराचिकीर्षुः सूत्रकारोक्तप्रयोजनानुवादपूर्वकं वार्त्तिकारम्भप्रयोजनं दर्शयति । यदक्षपाद इति । यद्यपि भाष्यकृता कृतव्युत्पादनमेतत् तथापि दिङ्नागप्रभृतिभिरर्वाचीनैः कुहेतुसन्तमससमुत्थापनेन आच्छादितं शास्त्रं न तत्त्वनिर्णयाय पर्याप्तमित्युद्द्योतकरेण स्वनिबन्धोद्द्योतेन तदपनीयत इति प्रयोजनवानयमारम्भ" इति न्यायवार्त्तिकतात्पर्यटीकायां वाचस्पतिमिश्राः ॥

(२) आदिमं सूत्रम्—पा० ३ पु० ।

तच्छास्त्रं पुरुषश्रेयोऽभिधत्ते । प्रत्यक्षानुमानाधिगतवस्तुतत्त्वाव्याख्यानं शास्त्रधर्मः तस्य विषयः प्रत्यक्षानुमानानधिगतवस्तुतत्त्व आध्यात्मिकशक्तिसम्पद्युक्तोन्तेवासी । पुरुषः पुनश्चतुर्धा भिद्यते प्रतिपन्नोऽप्रतिपन्नः सन्दिग्धो विपर्यस्तश्चेति । तत्र प्रतिपन्नः प्रतिपादयिता । इतरे सापेक्षाः सन्तः प्रतिपाद्याः । ते यदेन्द्रियार्थसन्निकर्षमपेक्षन्ते तदा प्रत्यक्षेण यदा लिङ्गदर्शनस्मृत्याद्यपेक्षन्ते तदानुमानेन यदा पुनरुपदेशमपेक्षन्ते तदा शास्त्रं प्रवर्तते । श्रेयः पुनः सुखमाहितनिवृत्तिश्च । तच्छ्रेयो भिद्यमानं द्वेधा व्यवतिष्ठते । दृष्टादृष्टभेदेन । दृष्टं सुखमदृष्टमहितनिवृत्तिः । अहितनिवृत्तिरप्यात्यन्तिकी अनात्यन्तिकी च । अनात्यन्तिकी कण्टकादेर्दुःखसाधनस्य परिहारेण । आत्यन्तिकी पुनरेकविंशतिप्रभेदभिन्नदुःखहान्या । एकविंशतिप्रभेदभिन्नं पुनर्दुःखं शरीरं षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः सुखं दुःखं चेति।शरीरं दुःखायतनत्वाद्दुःखम्। इन्द्रियाणि विषया बुद्धयश्च तत्साधनभावात्(१)।सुखं दुःखानुषङ्गात् । दुःखं स्वरूपत इति । तस्य हानिर्धर्माधर्मसाधनपरित्यागेन अनुत्पन्नयोर्धर्माधर्मयोरनुत्पादेन उत्पन्नयोश्चोपभोगात् प्रक्षयेणेति। पुरुषा रागादिमन्तो वीतरागाश्च । तत्र रागो विषयाभिषङ्गलक्षणः एषामस्ति ते रागादिमन्तः । वैराग्यं पुनर्भोगानभिष्वङ्गलक्षणं तद्येषामस्ति ते वीतरागाः। प्रवृत्तेर्द्वैविध्यं(२) पुरुषभेदानुविधानात्। तेषां पुरुषाणां प्रवृत्तयस्ताः पुरुषभेदमनुविधीयमाना उभयरूपा भवन्ति । वीतरागप्रवृत्तिरेकधा । तत्र या वीतरागाणां प्रवृत्तिः सा एकरूपा अनिष्टप्रतिषेधार्था अनिष्टं हास्याम इत्येव ते प्रवर्तन्ते । न पुनरेषां क्वचिदभिष्वङ्गोऽस्ति । रागादिमत्प्रवृत्तिस्तु

(१) तत्साधनत्वात्—पा० ३ पु० ।

(२) प्रवृत्तेरपि द्वैविध्यम्—पा० ३ पु० ।

द्विरूपा । ये तु रागादिमन्तस्तेषां याः प्रवृत्तयस्ता द्विविधा भवन्ति । इष्टानिष्टविषयाधिगमप्रतिपेधार्थाः । इष्टमाप्स्यामीति सक्तः प्रवर्तते । अनिष्टं हास्यामीति द्वेषान्निवर्तते । रागादिमत्प्रवृत्तेरपि द्वैविध्यं भवति समर्थासमर्थभेदात् । या खलु रागादिमत्प्रवृत्तिः सा समर्थाऽसमर्था च भवति । इष्टमाप्स्यामीति प्रवर्तमानो यदा प्राप्नोति तदा समर्था । अनिष्टं हास्यामीति प्रवर्तमानो यदा जहाति तदा समर्था यदा विपर्ययस्तदाऽसमर्थेति । ततः पुनः प्रवृत्तिद्वैविध्यं प्रमाणस्यार्थवदनर्थकत्वात् प्रमाणं तावदर्थपरिच्छेदकं प्रमाणसामान्यात् प्रमाणप्रतिरूपकमपि प्रमाणमित्युपचर्यते । किं पुनः प्रमाणसामान्यं प्रमाणाभासस्य सामान्यपरिच्छेदकत्वम् प्रमाणेनापि सामान्यं परिच्छिद्यते प्रमाणाभासेनापि । सोऽयं प्रमाता यदा प्रमाणेनावधार्य प्रवर्तते तदास्य प्रवृत्तिः समर्था भवति यदा पुनः प्रमाणभासेनार्थमवधार्य प्रवर्तते तदाऽसमर्था तस्याः पुनरर्थवत्त्वं प्रमाणतोऽर्थप्रतिपत्तावित्यादिभाष्यम् । परस्परापेक्षित्वादुभयासिद्धिरिति चेत् । न अनादित्वात् । यदि प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यं यदि वा प्रवृत्तिसामर्थ्यात् प्रमाणतोऽर्थप्रतिपत्तिः किं पूर्वं किं पश्चादिति वाच्यम् । यदि तावत् प्रमाणतः पूर्वमर्थप्रतिपत्तिः प्रवृत्तिसामर्थ्यमन्तरेण किमिति प्रतिपद्यते । अथ पूर्वं प्रवृत्तिसामर्थ्यमनवधार्यार्थे किमिति प्रवर्तते तस्मात् प्रवृत्तेः प्रमाणतोऽर्थप्रतिपत्तेर्वा परापरभावो न कल्प्यत इति । तच्च नैवं कस्मात् अनादित्वात् अनादिरयं संसार इति पूर्वाभ्यस्तसूत्रे प्रतिपादयिष्यामः । आदिमति च संसारे एष दोषः किं पूर्वं प्रमाणतोऽर्थप्रतिपत्तिराहोस्वित् प्रवृत्तिसामर्थ्यमिति । प्रमाणप्रवृत्त्योर्वा बलाबलजिज्ञासायामुभयसामर्थ्यप्रतिपादनार्थं वाक्यं लोकः खलु प्रवर्तमानः प्रमाणेनावधार्य प्रवर्तते स च तथाप्रवर्तमानः

फलमुपलभते। तत्रेदं चिन्त्यते। किं प्रमाणतोऽर्थप्रतिपत्तिः समर्था आहोस्वित् प्रवृत्तिरिति। उभयं समर्थं तन्नान्तरीयकत्वात्। तस्य फलस्य अस्य चार्थस्योपदर्शनार्थं वाक्यमिति। लोकवृत्तानुवादो वा सर्वः प्रमाता प्रमाणेनार्थमवधार्य प्रवर्तमानः फलमुपलभते इति लोकवृत्तं तद्वाक्येनानूद्यते। हेयहानोपायाधिगन्तव्यभेदाश्चत्वार्यर्थपदानीति। हेयं दुःखं तद्धेतुश्च दुःखमुक्तं हेतुरविद्यातृष्णे धर्माधर्माविति। हानं तत्त्वज्ञानम्। तत्पुनर्यथार्थावस्थितपदार्थाधिगतिः तच्च प्रमाणम्। उपायः शास्त्रं तदप्युक्तम्। अधिगन्तव्योऽपवर्गः स पुनरात्यन्तिको दुःखाभावः। एतस्मिंश्च चतुर्वर्गे प्रमाणस्य प्राधान्यप्रदर्शनार्थं चेति। कथं पुनरनेन वाक्येन प्रमाणादिचतुर्वर्गः प्रदर्श्यत इति। प्रमाणप्रमेयाधिगतयः श्रुतिगम्याः प्रमाता तन्नान्तरीयकत्वात्। न हि प्रमातारमन्तरेण प्रमाणं सम्भवति तदिदं वाक्यमवयवशः उपन्यस्य वर्ण्यते। तत्र प्रमाणत इति तसिर्वचनविभक्तिव्याप्तिप्रदर्शनार्थः। प्रमाणत इतीयं निमित्तपञ्चमी। अस्याभिधानं वचनव्याप्त्यर्थं विभक्तिव्याप्त्यर्थं च। कथं पुनः पञ्चमीव्यतिरेकेण तसिर्लभ्यते लभ्यत इत्याह। आद्यादाद्युपसंख्यानादिति। तत् किं सिद्धं भवति वचनव्याप्त्या संप्लवो व्यवस्था च। प्रमाणेन प्रमाणाभ्यां प्रमाणैरिति संप्लवो गम्यते प्रमाणेनैवेति व्यवस्था विभक्तिव्याप्त्या हेतुकरणभावः। प्रमाणादर्थाधिगतिर्भवतीति हेतुत्वं प्रमाणेनार्थं साधयतीति साधकतमत्वात् करणार्थ इति। संप्लवानुपपत्तिर्विशिष्टविषयत्वादिति चेत्। न अनभ्युपगमात्। स्यान्मतिरेषा विशिष्टविषयाणि प्रमाणानि। विशेषविषयं प्रत्यक्षं सामान्यविषयमनुमानमिति। एतद्याधिगन्तव्यं यद् सामान्यं(१) विशेषश्च न च सामान्यविषयं प्रत्यक्षं न जात्वनुमानं

(१) प्रयुक्तः सामान्यं—पा० २ पु०।

विशेषविषयमिति । एतच्च न अनभ्युपगमात् । न तावत् प्रमाणद्वयं प्रतिपद्यामहे न विषयद्वयं नाप्यसङ्करम् । किं कारणम् । प्रमाणानि तावच्चत्वारि विषयः सामान्यविशेषतद्वद्भेदात् त्रेधा । सङ्करोऽप्येकस्य सर्वैः प्रमाणैराधिगतेरिन्द्रियवदिति । इन्द्रियं खलु अर्थप्रकाशकत्वात् प्रमाणं तस्य व्यवस्थासङ्करश्च व्यवस्था गन्धादिषु सङ्करः पृथिव्यादिषु द्वीन्द्रियग्राह्यत्वात् । सत्तायां गुणत्वे च सार्वेन्द्रियं ज्ञानमिति । अधिगतत्वाद् वैयर्थ्यमिति चेत् । न अन्यथा तदधिगतेः । स्यान्मतं यदि सङ्कीर्येरन् प्रमाणानि नन्वेकेन प्रमाणेनाधिगतेऽर्थे द्वितीयं प्रमाणं व्यर्थमापद्येत । अधिगतं चार्थमधिगमयता प्रमाणेन पिष्टं पिष्टं स्यात् । न अन्यथाधिगतेः न ब्रूमो यथा प्रत्यक्षेणार्थोऽधिगम्यते तथानुमानादिभिरपीति । अन्यथा प्रत्यक्षेणेन्द्रियसम्बद्धः । इन्द्रियासम्बद्धोऽनुमानेन । सञ्ज्ञासञ्ज्ञिसम्बन्धप्रतिपत्तिरुपमानेन । शब्दोल्लेखेनागमेनेति । विषयान्तरे व्यवस्थादर्शनाच्च(१) । न च सर्वस्मिन्नर्थे संप्लवोऽस्तीति अतो न वैयर्थ्यमिति । तस्माद्व्यवस्थितमेतत्त्रिसूत्रवचनविभाक्तव्याप्तिज्ञापनार्थं इति प्रमाणस्वरूपावधारणं कर्तव्यम् । किं पुनः प्रमाणस्य प्रमाणत्वं किञ्चोक्तं प्रमाणमिति उपलब्धिहेतुः प्रमाणम् उपलब्धिहेतुत्वं प्रमाणत्वं यदुपलब्धिनिमित्तं तद् प्रमाणमिति । समानत्वादलक्षणमिति चेत् यद्युपलब्धिहेतुः प्रमाण ननु प्रमातृप्रमेययोरपि उपलब्धिहेतुत्वात् प्रमाणत्वं प्रसज्येत विशेषो वा वक्तव्य इति । अयं विशेषः प्रमाणे प्रमातृप्रमेययोश्चरितार्थत्वात् प्रमाणे प्रमाता प्रमेयं च चरितार्थम् । अचरितार्थं च प्रमाणम् अतस्तदेवोपलब्धिसाधनमिति । अकरणा प्रमाणोत्पत्तिरिति चेत् यदि प्रमातृप्रमेयाभ्यां प्रमाणं जन्यते अकरणा तर्हि प्रमाणोत्पत्तिः

(१) विषयान्तरव्यवस्थापनाच्च—पा० ३ पु० ।

प्राप्नोति । न इन्द्रियार्थसन्निकर्षस्य करणभावात् नाकरणा प्रमाणोत्पत्तिः प्रमाणोत्पत्ताविन्द्रियार्थसन्निकर्षमपेक्षमाणाभ्यां प्रमातृप्रमेयाभ्यां प्रमाणं जन्यत इति नाकरणप्रमाणोत्पत्तिप्रसङ्गः। यदि तर्हि प्रमाणोत्पत्ताविन्द्रियार्थसन्निकर्षमपेक्षेते प्रमातृप्रमेये अथ तर्हि इन्द्रियार्थसन्निकर्षोत्पत्तौ किमपेक्षेते इति तस्मिन्नपीन्द्रियमित्येवमनादिः कर्तृकरणभावः यद्यत्पश्चाद्भवति तत्तत्पूर्वभाविनमपेक्षत इत्यनादिः कर्तृकरणभावो द्रष्टव्य इति । यदि प्रमातृप्रमेयाभ्यां सद्भ्यां प्रमाणं जन्यते ततः प्रमाणमन्तरेण प्रमातृप्रमेयभावस्यासिद्धत्वात् प्रमातृत्वं प्रमेयत्वं चानुपपन्नमिति । कथं प्रमाणमिति यथा कारकशब्दोऽयं तथा प्रमाता प्रमेयमिति । न च कारकशब्दाः क्रियामन्तरेणात्मानं लभन्त इति । न च द्रव्यमात्रं कारकं न च क्रियामात्रमिति । कारकशब्दो हि प्रवर्तमानः क्रियासाधने क्रियाविशेषयुक्ते प्रवर्तते । प्रमातृप्रमेयशब्दौ च कारकशब्दौ तावन्तरेण क्रियां न प्रवर्तयेतामिति । न । पाचकादिशब्दवत् त्रिकालविषयत्वात् न ब्रूमः क्रियासम्बन्धेनैव कारकशब्दाः प्रवर्तन्त इति अपि तु त्रिकालविषया एते यदि क्रियासम्बन्धनिमित्ताः स्युर्न क्रियासम्बन्धमन्तरेण प्रवर्तेरन् क्रियासम्बन्धमन्तरेण तु प्रवर्तन्ते किं पुनर्निमित्तं सामर्थ्यं तच्च त्रिष्वपि कालेष्वस्तीति । तस्मादुपपन्नं प्रमातृप्रमेयाभ्यां प्रमाणं जन्यत इति तदुपलब्धिसाधनमिति । साधकतमत्वाद्वा न प्रसङ्गः । न चायं प्रसङ्गोऽस्ति प्रमाता च प्रमेयं चोपलब्धेर्निमित्तत्वात् प्रमाणं प्रसज्यत इति । कस्मात् साधकतमत्वात् साधकतमं प्रमाणं न तु प्रमातृप्रमेये । कः खलु साधकतमार्थः साधकतमं प्रमाणमिति केवलं वाक्यमभिधीयते नार्थ इति । भावाभावयोस्तद्वत्ता न प्रमातरि प्रमेये वाऽसति प्रमा भवति सति तु भवति

न पुनः सति भवत्येव प्रमाणे तु सति भवन्ती भवत्येव सोऽयमतिशयः साधकतमत्वमुच्यते । यद्वान्वा प्रमिमीते सोऽतिशयः किंवान् प्रमिमीते प्रमाणवान् प्रमिमीते प्रमाणे सति प्रमिमीते नासतीति सतोर्वाऽकर्तृत्वं यदभावात् । यस्य चाभावात् प्रमातृप्रमेये न प्रमां कुरुतः सोतिशयः संयोगवच्चरमभाविता वा यथा वा संयोगः पश्चाद्भावी द्रव्यशक्तिर्भवति तथा प्रमाणं चरमभावि प्रमातृप्रमेययोः प्रमाशक्तिर्भवति पश्चाद्भावोऽतिशयः । प्रतिपत्तेरानन्तर्यं वा । यद्वा प्रमाणानन्तरं प्रतिपत्तेर्जन्म स चायमतिशय इति । असाधारणकारणता वा प्रमाता साधारणं कारणं सर्वप्रतिपत्तीनां प्रमेयमप्यशेषपुरुषसाधारणत्वात् तथाभूतं प्रमाणं त्वसाधारणकारणत्वात् प्रधानम् । प्राधान्याच्च साधकतमत्वेनाभिधीयत इति । प्रमाकारणसंयोगविशेषकत्वं वा यो वा प्रमाकारणं संयोगस्तस्य प्रमाणमनुग्रहे वर्तमानमतिशयशब्दवाच्यम् । अर्थग्रहणं प्रमाणविषयप्रतिपत्तिनिषेधार्थं यतो न प्रमाणविषया प्रतिपत्तिः पुरुषमितिकर्तव्यतायां प्रयोजयति किन्त्वर्थस्य तथाभावविषया यदायमर्थस्य तथाभावं प्रतिपद्यते अथ प्रवर्तत इति उपेक्षणीयविषयप्रतिषेधार्थं वा न ह्युपेक्षणीयविषयप्रतिपत्तिः पुरुषमितिकर्तव्यतायां प्रयोजयति किन्त्वर्थस्य सुखदुःखहेतुभावविषया यदायमर्थस्य सुखदुःखहेतुभावं प्रतिपद्यते अथ प्रवर्तत इति प्रमाणाग्रहणं गम्यमानत्वादिति चेत् । न प्रमाणविशेषज्ञापनार्थत्वात् । अर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादित्यभिधीयमाने गम्यत एवैतत् प्रमाणत इति न हि काचित(१) प्रतिपत्तिः प्रमाणमन्तरेण भवति । तच्च नैवं प्रमाणविशेषज्ञापनार्थत्वात् अस्त्ययं प्रमाणशब्दः प्रमाणे वर्तमानोऽस्ति च प्रमाणसामान्यात् प्रमाणाभासे ऽपीति । तथेह प्र-

(१) कदाचिद्-पा० ३ पु० ।

माणेन प्रतिपत्तिः सा प्रवृत्तिसामर्थ्यं प्रतिपादयति प्रमाणं नेतर-दिति । न च प्रमाणग्रहणमन्तरेण पञ्चम्यभिधानं लभ्यते । तेन च प्रयोजनं अतश्च प्रमाणग्रहणं कृतमिति । अर्थग्रहणेन सुखदुःखहेतुत्वेन सर्वसङ्ग्रहोऽर्थ्यमाणत्वात्(१) । सर्वः प्रमाणादिरर्थः सुखदुःखहेतुः सर्वश्चार्थ्यते अर्थ्यमाणत्वादर्थ इति न व्याघातादविवक्षितत्वाच्च । सर्वः प्रमाणादिरर्थः सुखदुःखहेतुरिति ब्रुवता हेयादिभेदाच्चत्वार्यर्थपदानीति व्याहन्येत । न च प्रमाणादिहानं शक्यं कर्तुं न च प्रमाणादिहानं विवक्षितं तस्मादव्याख्यानमेतत् किन्तु सुखदुःखत्वेन तद्धेतुत्वेन च यावतां सङ्ग्रहस्ते ऽभिधीयन्ते अधिकारात् न च संविदो ग्रहणमनाधिकारात् अकर्मत्वाच्च न संविद्धेया असुखदुःखत्वात् अतद्धेतुत्वाच्च नाप्यर्थ्यते फलत्वात् सोऽयं प्रमाणार्थोऽपरिसंख्येयः इयानयं प्रमाणविषय इति न परिसंख्यातुं शक्यम् आनन्त्यात् न उभयस्यापि परिसंख्यातत्वात् । एतावानयं प्रमाणार्थो यत्सुखदुःखे तद्धेतुश्चेति तच्चोभयं परिसंख्यातम् अतो न युक्तमानन्त्यात् न परिसंख्यातुं शक्यं प्राणभृद्भेदस्यचापरिसंख्येयत्वादपरिसंख्येयः प्रमाणार्थ इत्यसम्बन्धमुक्तमिति । नार्थशब्दस्य प्रयोजनवाचित्वात् प्रमाणार्थोऽपरिसंख्येय इति । प्रमाणे प्रयोजनमपरिसंख्येयमित्ययं वाक्यार्थः कथं स एवार्थः केषाञ्चित्सुखहेतुर्भवति केषाञ्चिद्दुःखहेतुरिति । अर्थवति च समर्थे प्रमाणे अर्थवन्ति समर्थानीति । अन्यतमत्वार्थः साधकतमार्थो द्रष्टव्यः प्रकरणात् प्रकरणं हि चतुर्वर्गे प्रमाणं प्रधानमिति वर्ण्यते । यदि पुनर्यथा श्रुतिवाक्यमर्थवत् स्यात् किं प्रमाणसामर्थ्यं वर्णितं स्यात् तस्माद्यथोक्तं न्याय्यमिति । प्रमाता स्वतन्त्रः किं पुनः स्वातन्त्र्यं कारकफलोपभोक्तृत्वं यस्मात् कारकाणां फलेनायमभिसम्बध्यते । तत्समवायो वा

(१) अर्थ्यमानत्वात्-पा० २ पु० ।

यद्वा अशेषकारकनिष्पाद्यायाः क्रियायाः पुरुष आश्रयो भवति तस्य यत्कर्तृत्वमितराप्रयोज्यता वा । यद्वा परिदृष्टसामर्थ्यानि कारकचक्राणि प्रयुङ्क्ते तैश्च न प्रयुज्यते । तत्त्वपरिसमाप्तिर्विनियोगयोग्यता उपेक्ष्यता वा याऽसावविसंवादिता सावधारितस्यार्थस्य विनियोगयोग्यता सुखसाधनं वा दुःखसाधनं वाऽयमर्थ इति । ज्ञात्वा विनियोगः समाप्तिस्तत्प्राप्तिस्तत्प्रतिषेधश्च । यद्वा न सुखसाधनं न दुःखसाधनमित्युपेक्षेति किं पुनस्तत् सदसती तत्र तस्य भावस्तत्त्वमित्यत्र तद्वाच्यं यस्य भाव इति सदसती तत् प्रमाणविषयत्वेनाधिकारात् सदसती प्रमाणविषयावित्यधिकृतम् तस्मात् सदसती तदिति तद्भावः सदसत्त्वं सदसतोः प्रमाणविषयता तत्प्रतिषेधश्च तयोः खलु सदसतोर्भावो द्विरूपः विधीयमानः प्रतिषिध्यमानश्च यदेकत्र विधीयते तदन्यत्र प्रतिषिध्यते तद्यथा गन्धवती पृथिवी अगन्धा आप इति प्रमाणविषयत्वात् सदसद्भावाविशेषप्रसङ्ग(१) इति चेत् । न अनैकान्तात् तत्र भवेदेषा बुद्धिर्यदि प्रमाणेन सदसती गम्येते ततः प्रमाणविषयत्वादुभयोरविशेषः प्राप्तः तच्च न अनैकान्तात् सर्वमिदं गोघटादि द्रव्यजातं प्रमाणगम्यं भेदवच्च तस्मादनैकान्तोऽयमिति स्वतन्त्रपरतन्त्रोपलब्ध्यनुपलब्धिकारणभावाच्च विशेषः सत्खलु प्रमाणस्यासम्बन्धं स्वतन्त्रं भवति असत्तु परतन्त्रं प्रतिषेधमुखेन प्रतिपद्यते प्रदीपवदिति यथा प्रदीपोऽपवरकादिस्थितं घटादिकमर्थं प्रतिपादयति तद्वदसदपि प्रतिपादयति । न ह्यसत्प्रतिपत्तौ उपायान्तरमास्थीयते दृश्यमाने हि घटादिकेऽर्थे नानेन समानजातीयं दृश्यान्तरमस्ति यद्यभविष्यदिदमिवाद्रक्ष्यत न च दृश्यते तस्माद्दर्शनाभावान्नास्तीति गम्यते । एवं प्रमाणेनापि

(१) सदसतोरविशेषप्रसङ्गः—पा० ३ पु० ।

सति प्रमीयमाणे नानेन समानजातीयं प्रमेयान्तरमस्ति यद्यभवि- ष्यादिदमिवाभास्यत न च प्रमीयते तस्मान्मानाभावान्नास्तीति त- देवं सतः प्रकाशकं प्रमाणमसदपि प्रकाशयति तत्र स्वातन्त्र्येणा- सद्भेदा न प्रकाशन्त इति नोच्यन्ते चतुर्वर्गानन्तर्भावाद्वा भावप्रप- ञ्चवदभावप्रपञ्चोप्युद्दिष्टो वेदितव्य इति भावोपदेशादभावप्रपञ्च उद्दिष्टो भवतीति अतश्च नोच्यन्त इति ॥

प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयव- तर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्र- हस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ॥ १ ॥

स च खलु षोडशधा व्यूढमुपदेक्ष्यत इति । व्यूहः संक्षेपः । त एते सद्भेदा इति सूत्रम् । सर्वपदार्थप्रधानः समासो द्वन्द्व इति किमुक्तं भवति । सर्वे एते प्रमाणादयो विज्ञेया इति । अन्यथा हि समासान्तरपरिग्रहाद्विशेषणत्वेनोपयुक्तानां प्रमाणादीनामवि- ज्ञेयता स्यात् यथावचनं विग्रहः यदेव निर्देशे वचनभेदोपादाने प्रयोजनं तदिहापि द्रष्टव्यम् । प्रमाणादीनां तत्त्वमिति शैषिकी षष्ठी । कः पुनः शेषः कारकाणामविवक्षा शेष इति । यत्र न कारकं कारकार्थो वा विवक्ष्यते स शेषः तद्यथा ब्राह्मणस्य कम- ण्डलुरिति । तत्त्वस्य प्रमाणादिभ्योऽन्यानन्यत्वे दोषः यदि ता- वत् प्रमाणादिव्यतिरिक्तं तत्त्वं न प्रमाणाद्यधिगमान्निःश्रेयसा- धिगम इति प्राप्तम् । किं कारणं तत्त्वविशेषणत्वेनोपादानात् रा- जपुरुषानयनक्रियावदिति । अथाऽभेदस्तत्त्वग्रहणानर्थक्यं यदि प्रमाणादिव्यतिरिक्तं तत्त्वं न प्रतिपद्यसे एवं तर्हि तत्त्वग्रहणमन- र्थकं सम्पद्यते नोभयथाप्यदोषादितरेके । यदि तावत् प्रमाणादि- व्यतिरिक्तं तत्त्वं स्यात् तस्यास्तनन्यत्वात् प्रमाणादयोपि गम्यन्त इति कुण्डे बदराणीत्यादौ यथा कुण्डे बदराणां इत्यादिति भावे

देशिते भावस्यास्वतन्त्रत्वात् कुण्डे बदराणि वर्तन्त इत्युक्तं भवति । तथेहापि तत्त्वज्ञानान्निःश्रेयसाधिगम इति प्रमाणादीनां ग्रहणं भावस्यास्वतन्त्रत्वादिति । अभेदेपीषुस्थितिवत्तद्भावप्रतिषेधो नार्थान्तरमिति न प्रमाणादिमात्रमुच्यते अपि त्वर्थान्तरं प्रतिपिध्यते । यथेषोः स्थितिरिति नेषुमात्रं स्थितिरपि तु गतिमदर्थान्तरं(१) न भवतीति । तन्न । अनर्थान्तरत्वासिद्धेः । तत्त्वज्ञानान्निःश्रेयसाधिगम इति तत्त्वं ज्ञायमानं कर्म सम्पद्यते निःश्रेयसमधिगम्यमानं कर्म भवतीति । किं पुनस्तत्त्वं किं वा निःश्रेयसमिति । तत्त्वं पदार्थानां यथावस्थितात्मप्रत्ययोत्पत्तिनिमित्तत्वं यो यथावस्थितः पदार्थः स तथाभूतप्रत्ययोत्पत्तिनिमित्तं भवति यत् तत् तत्त्वम् । निःश्रेयसं पुनर्दृष्टादृष्टभेदाद्द्वेधा भवति । तत्र प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसं दृष्टं न हि कश्चित्पदार्थो ज्ञायमानो हानोपादानोपेक्षाबुद्धिनिमित्तं न भवतीति एवं च कृत्वा सर्वे पदार्था ज्ञप्त्युपपत्स्यन्ते इति । परन्तु निःश्रेयसमात्मादेस्तत्त्वज्ञानाद्भवति दृष्टं प्रमाणादिपरिज्ञानाददृष्टं पुनरात्मादेः प्रमेयस्य परिज्ञानादिति न प्रमाणमस्ति । न नास्त्यर्थस्य तथाभावात् अर्थ एवायं तथाभूतो यदात्मादेः प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसमधिगम्यते । यद्वा ह्ययमात्मादि प्रमेयं विपर्ययेणाध्यवसितो भवति । अथ संसारं नातिवर्तत इति । एवं(२) चार्थं द्वितीयसूत्रे प्रतिपादयिष्यामः । यदि पुनः प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसं स्यान्न मोक्ष्यमाणा मोक्षाय घटेरन् न हि कस्यचित् क्वचिच्च तत्त्वज्ञानं नास्तीति तस्मादात्माद्येव प्रमेयं मुमुक्षुणा ज्ञेयमिति । पृथगुपदेशाच्च । यदि प्रमाणाद्येव प्रमेयं स्यात् तस्य च परिज्ञानान्निःश्रेयसं भवेत् । नात्मा-

(१) गतिमत्त्वार्थान्तरं—पा० २ पु० ।
(२) एवं—पा० १ पु० ।

दि प्रमेयं पृथगुपदिष्टं स्यात् । प्रमेयार्थावधारणार्थायां चोत्तरसूत्र-
प्रक्रियायां प्रमेयस्य विहितत्वादाद्येन सूत्रेणाकुशलः सूत्रकारः
स्यात् । तच्चैतदुत्तरसूत्रेणानूद्यत इति भाष्यम् । हेयहानोपायाधि-
गन्तव्यभेदाच्चत्वार्यर्थपदानि सम्यग्बुद्ध्वा निःश्रेयसमधिगच्छती-
ति । हेयं दुःखं तस्य निर्वर्त्तकमविद्यातृष्णे धर्माधर्मौ चेति । हानं
तत्त्वज्ञानं तस्योपायः शास्त्रम् । अधिगन्तव्यो मोक्षः । एतानि
चत्वार्यर्थपदानि सर्वास्वध्यात्मविद्यासु सर्वाचार्यैर्वर्ण्यन्त इति ।
संशयाद्यग्रहणं पृथक् प्रमेयान्तर्भावादिति चेत् । न विद्याप्रस्थान-
भेदज्ञापनार्थत्वादिति । संशयादयः प्रमेयेऽन्तर्भवन्तीति पृथक् ते न
वक्तव्याः । न विद्याप्रस्थानभेदज्ञापनार्थत्वात् । चतस्र इमा
विद्या भवन्ति ताश्च पृथक्प्रस्थानाः । अग्निहोत्रहवनादिप्रस्थाना
त्रयी । हलशकटादिप्रस्थाना वार्त्ता । स्वाम्यमात्यभेदानुविधायिनी
दण्डनीतिः । संशयादिभेदानुविधायिनी आन्वीक्षिकी । तस्याः
संशयादिप्रस्थानमन्तरेणात्मविद्यामात्रमियं स्यात् ततः किं स्यात्
अध्यात्मविद्यामात्रत्वादुपनिषद्विद्यावत् त्रय्यामेवान्तर्भाव इति च-
तुष्ट्वं निवर्त्तते(१) तस्मात् पृथगुच्यन्त इति । तत्र संशयस्तावद्वस्तु-
स्वरूपानवधारणात्मकः प्रत्ययः । अनवधारणात्मकश्च प्रत्ययश्चेति
व्याहन्यते । न व्याघातः स्वरूपावधारणात् स्वरूपमस्यावधार्यते
अस्ति मे संशयज्ञानमिति । वस्तुस्वरूपं तु नानेन परिच्छिद्यते ।
तदुभयमनवधारणात्मकश्च प्रत्ययश्चेति । कथं न्यायस्याङ्गं भव-
तीति । यस्मान्नानुपलब्धे न निर्णीते न्यायः प्रवर्त्तते । उपलब्धो-
ऽनिर्णीतश्चेति व्याहतम् । यद्युपलब्धो नानिर्णीतोऽथानिर्णीतो नो-
पलब्ध उपलब्धोऽनिर्णीतश्चेति व्याहतम् । नास्ति व्याघातः सा-
मान्येनोपलब्धो विशेषतोऽनिर्णीत इति । पुनरपि यथोपलब्धस-

(१) निवर्त्तत—पा० ३ पु० ।

शिनष्टि तथा प्रमाणतर्कसाधनोपालम्भ इति ।

छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इत्यभिधानाद्वादे निग्रहस्थानप्रतिषेधो विशेषाविधानात् ततश्चानुपालम्भो वाद इति ? । प्रमाणतर्कसाधनोपालम्भ इत्यभिधानाद्वादे ऽपि निग्रहस्थानानीत्यदोषः । उपालम्भग्रहणात् समस्तनिग्रहस्थानप्रसक्तौ सञ्ज्ञाभेदमात्रम् ?—यद्युपालम्भग्रहणाद्वादे निग्रहस्थानानि विद्यन्ते इति मन्यसे ननु सञ्ज्ञाभेदमात्रं जल्पाद्वादस्य न विशेषः तथापि निग्रहस्थानानीहापीति ? नोत्तरयोर्नियमार्थत्वात् । यस्मादेवोपालम्भशब्देन समस्तानि निग्रहस्थानानि लभ्यन्ते अत एव नियमार्थे उत्तरे पदे आरभ्येते सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नश्चेति । सिद्धान्ताविरुद्ध इत्यनेन किल पदेन विरुद्धो हेत्वाभासो लभ्यते । तत्र अन्यतोऽधिगतेः—अन्यत एवायं लभ्यते । पञ्चावयवोपपन्न इति पञ्चग्रहणात् न्यूनाधिके लभ्येते अवयवग्रहणात् तदाभासा लभ्यन्त इति लभ्यमानस्यार्थस्य पुनरभिधाने पिष्टं पिष्टं स्यात् तस्मान्नायमर्थः । अथ किमिदं पदं सिद्धान्ताविरुद्ध इत्यनर्थकमेव ? नानर्थकमपसिद्धान्तावरोधात्—

"सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः" *

इति सोऽनेनावरुध्यते तस्मान्नानर्थकम् । कस्मात् पुनरयं नियमो वादे अवयवाभासोऽपसिद्धान्तश्च निग्रहस्थानमिति ? । गुर्वादिभिः सह वादोपदेशान्नियमः—यस्मादयं तत्त्वबुभुत्सुर्गुर्वादिभिः सह त्रिविधं फलमाकाङ्क्षन् वादं करोति ततोऽस्य तत्त्वबुभुत्सावतस्तावत्साधनं वक्तव्यं यावदनेन ज्ञातव्यमप्रतिद्वन्द्वित्वात् । प्रतिद्वन्द्विना सह न वादः, किं तु जल्पः तत्र समस्तनिग्रहस्थानप्रयोग इति युक्तम् । प्रमाणतर्कसाधनोपालम्भ इत्यभिधानात् उभयोः सिद्ध्यसि-

* गौ० सू० अ० ५ आ० २ सू० २३ ।

द्धिप्रसङ्गः ?-यदि प्रमाणतर्कसाधनोपालम्भो वादः उभयोर्वादिप्रतिवादिनोः प्रमाणतर्कसाधनोपालम्भाभिधाने ऽधिकार(१) इत्युभयपक्षसिद्ध्यसिद्धिप्रसङ्गः । नैष दोषः अप्रतिज्ञानात्–नेदं प्रतिज्ञायते उभयोर्वादिनोः प्रमाणानि सन्तीति, अपि तूभाभ्यां साधनं वक्तव्यमेवमभिप्रयन्ते न पुनः साधनमेवैतत् भवतीति, दूषणमप्येवम् ।

अपरे तु स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं वाद इति वादलक्षणं वर्णयन्ति । अत्र च पक्षविशेषणार्थमुपात्तयोः स्वपरशब्दयोरनुपपत्तिर्विकल्पानुपपत्तेः समासासम्भवाच्च । एतौ खलु स्वपरशब्दौ परिग्रहवर्जनार्थौ ? वा स्याताम्, ? साधनीयदूषणीयार्थौ वा, ? पूर्वोत्तरपक्षार्थव्यवस्थापकौ वा ? पक्षप्रतिपक्षावद्योतकौ वा ? प्रथमद्वितीयपक्षाभिधायकौ वा ? एकस्य वाऽनेकविशेषणाभिसम्बन्धिनोऽनेकशब्दाभिधानमिति ? । तत्र परिग्रहपरिवर्जनार्थता तावदनुपपन्ना, किमोर्थासम्भवात् । न परिग्रहार्थतायां किमोर्थः सम्भवति 'कस्यायं स्वो भविष्यति कश्च स्वार्थ' इति स्वीकरणं परिग्रहार्थः यस्य स्वीकारो भवति तस्य स्व इति । तदेव चिन्त्यते किं तत् स्वीकरणमिति । ममेति ममत्वोत्पत्तिकारणभावाभावौ स्वपरशब्दार्थः ? निर्दिष्टः स्वार्थो न पुनरस्य स्वार्थो, न हि शास्त्रकारस्य स्वः परो वा सम्भवति यदर्थमिदं स्यादिति । यच्च यस्य स्वं भवति तत्तस्यसिद्ध्यर्थं कञ्चिदुपकारं करोति, न पुनः स्वामिनः पक्षेण कश्चिदुपकारः क्रियते तस्मात् परिग्रहवर्जनार्थौ तावत् स्वपरशब्दौ न भवतः । साधनीयदूषणीयार्थौ स्वपरशब्दाविति चेत्-अथापीदं स्यात् साधनीयः स्वपक्षो दूषणीयः परपक्ष इति । अहो शब्दार्थकौशलं साधनीयः साध्यः स्यात् साधनीयः स्वपक्ष

(१) नाधिकार २ इति पु० पा० ।

इति कुत एतत् ? लक्षणं चैतत् पक्षस्य साधयितुमिष्टः पक्ष इति साधनीयशब्देनापि तदेवोच्यते, व्यवच्छेदार्थं चेदमुच्यते स्वपक्षः परपक्ष इति । परपक्षाश्चायं स्वशब्देन व्यवच्छेद्यमानोन समानमर्थं शक्नोति वक्तुम्, व्यर्थं वा विशेषणम् । सामान्यशब्दा अपि विशेषे वर्तन्त इति(१) इष्टमेतत् ? न ते सामान्यशब्दा ये विशेषेषु वर्तन्त इति । किन्तु प्रकरणादिभेदानुविधायिनो विशेषशब्दा एव । अपि च साधनीयः पक्षः स्वपक्षः दूषणीयः पक्षः परपक्षः । तदेतदपि न बुद्ध्यामहे साधनीयशब्दस्य पक्षविषयत्वात् साधनीयः पक्षःस्वो भवतु, दूषणं तु न कदाचित् परपक्षेण सम्बध्यते परपक्षस्य तादवस्थ्यात् । अथ दूषणस्य को विषयः ? कस्यचित् स्थापना विषय इति किञ्चिद्दूषणं स्वपरपक्षाभ्यामसम्बद्धमेव । कतमद्दूषणं स्थापनया सम्बद्ध्यते ? । का चेयं स्थापनेति ? स्थापना नाम पञ्चावयवं पक्षसाधकं वाक्यम्, वाक्यदोषो दूषणं, तद्वाक्यं न्यूनमधिकं च भवति अवयवाभासोपपन्नञ्च, तदुद्भावनं दूषणमेतत् स्थापनया सम्बध्यते तद्विषयत्वात् । शेषं तु दूषणं न स्थापनया न स्वपरपक्षाभ्यां सम्बद्धम् उत्तरदोष आक्षेपभावाश्चेति । सत्यं न साक्षात् पक्षस्य दूषणेनाभिसम्बन्धः स्थापनानिवृत्तिद्वारेण तु प्रवर्तमानं दूषणं ( न पक्षं निवर्तयति ) स्थापनानिवृत्तेः परपक्षं दूषयतीत्युच्यते ? उपचरितशब्दप्रयोगो लक्षणेऽनुपपन्नो लक्षणस्य तत्त्वविषयत्वात् तत्त्वव्यवच्छेदकं लक्षणम् न पुनरुपचरितशब्दप्रयोगेन व्यवस्थापितं । यदि च पारम्पर्येण प्रवृत्त्या प्रवर्तमानं दूषणं परपक्षं निवर्तयति तदेवं युक्तं कर्तुं परपक्षासिद्ध्यर्थं वचनं वाद इति । एवमभिधीयमाने किं भविष्यतीति ? लघु च सूत्रं भवतीत्युभयोश्च साधनदूषणयोः पारम्पर्येण परपक्षासिद्ध्यर्थतेति । अथ माभूदुभय-

(१) इत्यदृष्टमेतत् इति २ पु० पा० ।

म्र पारम्पर्यमिति ? स्वरूपत एवं वक्तव्यं— पक्षस्थापनयोः सिद्ध्यसिद्ध्यर्थं वचनं वाद इति। एवं हि विस्पष्टता लक्षणस्य यथाविषयं चाभिसम्बन्ध इति । स्थापनयापि न सर्वं दूषणं सम्बध्यत इति दोषतादवस्थ्यम् ? न दोषतादवस्थ्यं कस्यचित् सम्भवात् । किञ्चिद् दूषणं स्थापनया सम्बध्यत इति, सामान्याभिधानेऽपि सामर्थ्यान्नियमः तस्मादिदमनुपपन्नं साधनीयदूषणीयार्थौ स्वपरशब्दाविति। स्वपरशब्दौ पूर्वोत्तरपक्षार्थौ भविष्यत इति ? यदुक्तम्भवति पूर्वोत्तरपक्षाविति तदुक्तं भवति स्वपरपक्षाविति। न युक्तमेतदपीति साधनदूषणयोर्नियमाभ्युपगमादते साधनदूषणैरित्येतास्मिन् सूत्रे साधनदूषणयोर्नियमाभिधानं स्वपक्षसाधनं परपक्षे दूषणमिति । एतस्मिंश्च नियमे उत्तरपक्षविषयं दूषणं प्राप्नोति तेनोत्तरपक्षवादी स्वमेव पक्षं दूषयतीति(१) प्राप्तम् । स्वपक्षश्चोत्तरवादिनः पूर्वपक्षादन्य इति स्वपरशब्दाभ्यां पूर्वोत्तरपक्षयोरभिधानमिति न पदार्थो न परिभाषा न च रूढिः। एतेन पक्षप्रतिपक्षार्थता प्रथमद्वितीयपक्षार्थता च व्याख्याता । एक एवायं पक्ष इति विशेषणद्वययोगात् साध्यतया दूष्यतया च विशेष्यमाणः स्वपरशब्दवाच्य इति ? युक्तमेतद्द्विवचनं तु न युक्तम् । एकस्यानेकविशेषणयोगो न प्रतिषिध्यते द्विवचनं तु न भवतीति ब्रूमः न ह्येकस्यानेकविशेषणाभिसम्बन्धे सति द्विवचनबहुवचने भवतः नहि देवदत्तं छत्रदण्डाभ्यां सम्बद्धं समुपलभ्य वक्तारो भवन्ति छत्रिदण्डिनावागताविति । तदेवं विकल्पानुपपत्तेः स्वपरशब्दानुपपत्तिः ।

समासासम्भवाच्च— स्वपरपक्ष इति समासपदमेतत् तत्र स्वाद्विशेषणविशेष्यस्वरूपानवगतेर्न षष्ठीसमासः यत्र पुनः षष्ठी

(१) तेनोत्तरपक्षं बाधयतीति प्राप्तमिति २ पु. पा. ।

समस्यते तत्र विशेषणं विशेष्यात् पृथगवधार्यते यथा राजपुरुष इति । भेदाच्च—यत्र च विशेषणविशेष्यभावो भवति तत्र भेदो दृष्टो राजपुरुषवदेव । असत्यपि भेदे दृष्ट इति चेत् असत्यपि भेदे दृष्टः षष्ठीसमासः तद्यथा सेनापतिः पानकाङ्गमिति ? तच्च नानभ्युपगमात्—को हि सुस्थात्मा(२) पानकशब्दार्थमङ्गेभ्यो नार्थान्तरं प्रतिपद्यते सेनां च सैनिकेभ्य इति । यथा च सेनादीन्यर्थान्तरभूतानि तथोक्तं गुणगुणिवाद इति । अथ मन्यसे स्वार्थः स्वशब्दस्यार्थः साधनीयोऽर्थश्च पक्षशब्दस्येति ? तत्रापोदितत्वात् । यथा स्वार्थवाचकः शब्दो न भवति तथोक्तम्, तस्माच्च षष्ठीसमासः । एतेन कर्मधारयः प्रत्युक्तः स्वश्चासौ पक्षश्चेति विशेषणस्वरूपासिद्धेर्भेदाभावाच्च । एतेन बहुव्रीहिरपि प्रत्युक्तः । साधयितृविषयं च साधनं प्राप्नोति अतो न बहुव्रीहिः । ननु च साधनीयार्थता स्वार्थः पक्षविशेषणत्वेन सम्भवति ? न सम्भवति पर्यायत्वात्—साधनीयः पक्ष इति पर्याय एव, न च पर्यायशब्दैः समानाधिकरणो बहुव्रीहिः सम्भवति । नहि भवति वृक्षतरुं छिनत्तीति । विरोधाच्च । यदि तावदयं पक्षशब्दः स्वपक्षाद्भिद्यते (पर)पक्षवचनं प्रतिज्ञेति व्याघातः । किं कारणम्, प्रतिज्ञायाः स्वपक्षविषयत्वात् । अथाभिन्नस्तथापीदं न प्राप्नोति स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं वाद इति । न चान्यः समासः सम्भवति । न चेदं वाक्यम्, तस्मात् स्वपरपक्षयोरित्यसारम् ।

आस्तां तावत् स्वपरशब्दार्थो विशेषणविशेष्यभावश्च स्वपरशब्दयोः । अथ समासः कस्माच्च क्रियते स्वपरपक्षसिद्ध्यसिद्ध्यर्थं वचनं वाद इति ? किमेवं कृते भवति ? स एवार्थो लाघवं च ।

अत्र केचित् परिहारं ब्रुवते—यदि किल समासः क्रियते उभ-

(२) स्वस्थात्मा इति २ पु० पा० ।

याश्रिते सिद्ध्यसिद्धी भवतः । न । दोषवादवस्थ्यात्—नायं दोषोऽसमासकरणेन परिह्रियते । कथमिति ? स्वपक्षसिद्ध्यसिद्ध्यर्थं वचनं परपक्षसिद्ध्यसिद्ध्यर्थं स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थमिति । नासामर्थ्यात्—न ह्ययं समासः समर्थः स्वपक्षसिद्ध्यसिद्ध्यर्थमिति ! कस्मात् ? व्याहतत्वात् यदि सिद्ध्यर्थं यतते असिद्ध्यर्थमिति व्याघातः यद्यसिद्ध्यर्थं यतते सिद्ध्यर्थमिति व्याघातः ? । यद्यसामर्थ्यान्न समासः समासेऽपि तर्हि सामर्थ्यात् नोभयपक्षसिद्ध्यसिद्धिप्रसङ्गः ।

एकवचनबहुवचनप्रसङ्ग इत्यन्ये—यदि किल समासः क्रियेत समासोऽनभिव्यक्तवचनभेदः तस्माद्वचनभेदव्यक्तिनिमित्तोऽसमासः । कथं नाम स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं वादः स्यात् न स्वपरपक्षाणां न स्वपरपक्षस्येति । नासम्भवादेकस्य तावत्सिद्ध्यसिद्ध्यर्थं वचनं नैवास्ति, स्वपरपक्षाणां साधनमनुमानमेकमिति कथाऽप्येवं नास्त्यतोऽस्थाने आशङ्का ।

अनित्यः समासविधिरित्यपरे—अपरे समासविधेरनित्यतां वर्णयन्त एवमाहुः—नायमवश्यं विधिः सर्वत्र समास इति । क्वचित् समासः क्वचिच्च वाक्यम् यथा च राज्ञः पुरुषः, राजपुरुष इति च समासः । यदि उभयप्राप्तिरसमासः कस्मात्—अनित्यः समासविधिरिति एवं ब्रुवतोक्तं भवति प्राप्तमुभयम् । अथोभयप्राप्तौ कस्मादसमास इति। समासः कस्मादित्यनिवृत्तोऽनुयोगः ? नानिवृत्तो लाघवार्थत्वात् समासे लाघवमेवासमासे गौरवम् । अनुगमार्थं च शब्दानामुपादानमिति गुर्वभिधाने प्रयोजनं वाच्यम् । वर्णे गुरुलाघवानभ्युपगम इति चेत् ? नायं परिहारोऽनुयोगस्यानिवृत्तेः । वर्णे गुरुलाघवानुयोगं न प्रतिपद्यामह इति चेत् न निवर्ततेऽनुयोगः कस्मादिति ? । शास्त्रत्वेन च वादविधानम-

भ्युपगम्यते न च वर्णे गुरुलाघवमाश्रीयत इति न युक्तम् ।

सिद्ध्यसिद्ध्यर्थमित्येतदपि न युक्तम् । कस्मात् ? द्वेधाऽनुपपत्तेः अयं खलु सिद्धिशब्दः कल्प्यमानो द्वेधा कल्प्येत व्यक्तावुत्पत्तौ वा, तत्र तावदुत्पत्तौ युज्यते प्रतिज्ञादिकस्य साधनस्य साधनभावव्हानियमङ्गात् नहि प्रतिज्ञादिसाधनेन वस्तूत्पाद्यते, किं तु विद्यमानप्रकाशकत्वं साधनार्थः स हीयते सिद्धावुत्पत्तौ कल्पितायामिति । व्यक्तारिति चेत् नाधिकरणाधारत्वात्— अथ मन्यसे सिद्धिर्व्यक्तिर्नोत्पत्तिः ? युक्तमेतदुत्तरं तु व्याहतं भवति अधिकरणप्रत्यायनं सिद्ध्यसिद्धी इति । ये चैतेऽधिकरणप्रत्यायनलक्षणे सिद्ध्यसिद्धी तेऽधिकरणे वर्तमाने कथं पक्षस्य भवत इति पञ्चम्यर्थो वाच्यः । नायं(२) दुर्वचः तद्विषयत्वात्—तयोः सिद्ध्यसिद्ध्योः पक्षो विषयः अत-
१ स्तद्विषयत्वात्तस्येति ? । न युक्तमेतत् । ये ते सिद्ध्यसिद्धी पक्षविषये ते किं तावत् पक्षे सिद्धे उतासिद्धे ? यदि तावत् सिद्धे, नाधिकरणप्रत्यायनं सिद्धिः, किन्तर्हि ? यतस्तत्प्रत्यायनं सा सिद्धिः । कुतश्च तद्भवति ? अर्थस्य तथाभावात्—यस्मात् सोऽर्थस्तथा भवति । कथं तथा भवति ? यथा प्रमाणैरभिसम्बद्ध इति— यत् प्रमाणैरविसंवादित्वं स तथाभावः । अथासिद्धे पक्षेऽधिकरणप्रत्यायनं भवति ? साधनप्रयोगात् प्रागधिकरणप्रत्यायनमस्तीति वादवैयर्थ्यं स्यात् । पक्षस्य सिद्धिरधिकरणप्रत्यायनम् असिद्धिस्तु कथम् ? नहि परपक्षासिद्धिर्दूषणेन क्रियत इत्युक्तम् । स्थापनानिवृत्तेरुपचार इति चेत्—स्यान्मतिर्दूषणं प्रयुज्यमानं साक्षात् स्थापनां निवर्तयति स्थापनानिवृत्तेस्तु परपक्षनिवृत्तिरुपचर्यत इति ? न । प्रयोजनाभावात्— नहि प्रयोजनव्यतिक्रमेण मुख्यार्थव्यतिक्रमो लभ्यते,

(१) स चायमिति २ पु. पा ।

अपि तु प्रमाणासम्भवेनोपचारो मञ्चाः क्रोशन्तीति यथा, लोकप्रयुक्तशब्दविषयश्चोपचारः लोकगत्या शब्दार्थः, न चेदं लौकिकं वाक्यं स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं वादः ।

अपरे तु प्रतिज्ञातार्थाज्ञापनं पक्षस्यासिद्धिं वर्णयन्ति । तथाप्यधिकरणविषयं, न निवर्तते प्रसङ्गः, कथं– पक्षस्यासिद्धिरिति सिद्धिरप्रसङ्गः तस्मात् सिद्ध्यसिद्धी पक्षधर्मावेव यत एतद्भवति सिद्धः पक्षोऽसिद्धश्चेति । एवं सति द्रष्टृस्थे सिद्ध्यसिद्धी इति व्याघातः । यदि सिद्ध्यसिद्धी पक्षधर्मौ द्रष्टृस्थे सिद्ध्यसिद्धी इति व्याहतं भवति । अथ माभूद्व्याघात इति द्रष्टृस्थे एव ते ? तथापि पक्षस्य व्यक्त्यव्यक्ती सिद्ध्यसिद्धी इति व्याहतं भवति । अथ तथातथात्वे पदार्थस्य सिद्ध्यसिद्धी ? तथाप्यधिकरणप्रत्यायनं सिद्ध्यसिद्धी इति व्याहतं भवति । के पुनरेते व्यक्त्यव्यक्ती ? वस्तुधर्मावभिधानप्रत्ययहेतू यत एव तावभिधानप्रत्ययौ व्यक्तो ऽव्यक्तश्चेति भवतः ते व्यक्त्यव्यक्ती इति । अर्थशब्दानुपपत्तिर्विकल्पानुपपत्तेः–अर्थशब्दः खलु प्रवर्तमानस्त्रेधा प्रवर्तते उद्देशप्रयोजनाभिधेयविषयत्वेन, उद्देशे तावदर्थशब्दो यथा ब्राह्मणार्थं भक्तमिति । एवं चतुर्विधवाक्यसङ्ग्रहः । प्रयोजनेऽर्थशब्दः किमर्थमागतोऽसीति । अभिधेयेऽर्थशब्दो यथा गौरित्यभिधानस्य कोऽर्थ इति । तत्र तावदुद्देशो सम्भवति युक्तायुक्तत्वेनेति विशेषितत्वात्–स्वपक्षस्य युक्तत्वेन परपक्षस्यायुक्तत्वेनेत्येवं विशेषिते क्व उद्देशशब्दार्थः न ह्ययं युक्तायुक्तशब्दो दूषणाभावे साधनाभावे वा सम्भवति साधनयोगो युक्तता दूषणयोगोऽयुक्ततेति । अथ पुनः पदार्थस्य तथात्वातथात्वे युक्तायुक्तत्वे युक्तत्वं तथाभावोऽयुक्तत्वमतथाभाव इति ? तथापि उभयोः कर्मतयोपादानात् युक्तत्वेनाधिकरणप्रत्यायनमयुक्तत्वेन चेति व्याघा-

तः नहि प्रत्याय्यं प्रसाधनं भवतीति । अथ प्रयोजनेऽर्थशब्दः? तथापि साधनदूषणाभासवादिनोऽवादिता स्यात् । किं कारणम्, साधनदूषणाभासयोः सिद्ध्यसिद्ध्यप्रयोजनत्वात् नहि साधनदूषणाभासयोः सिद्ध्यसिद्धी प्रयोजनम् । एवं च तद्वादी अवादी स्यात् तथा चावादी निगृह्यत इति दोषः । अथाभिधेयेऽर्थशब्दप्रयोगः अभिधानस्वभावानवधृतेरिति? अयुक्तमेतदपि, नहि ग्रन्थकारभाष्यकाराभ्यां विशेषितमेवं प्रकारमभिधानं सिद्ध्यसिद्ध्योर्वाचकमिति । ननु विशेषितं येन सिद्ध्यसिद्धी अभिधीयेते तत्तयोर्वाचकमिति? सत्यमुक्तम्, एवं तु सिद्ध्यसिद्धी इत्येतेऽभिधाने वादः प्राप्तः । न चान्योऽर्थशब्दस्यार्थ इति, तस्मादर्थशब्दोऽप्ययुक्त इति । सिद्ध्यसिद्ध्यर्थं वचनं वाद इति ब्रुवाणेन पूर्वमुत्तरं वा नालोचितम् । नैयायिकहेतुप्रतिषेधेन विशेष्यं वचनमित्यभ्युपगमसिद्धं इदं पुनः सूत्रं(मिति) समस्तं वचनविशेषणार्थमिति व्याघातः । तदेवमेतानि सूत्रपदानि विचार्यमाणानि स्वतन्त्र(व्या)घातकानीति लोकं च बाधन्त इति । एवं तावत् सौत्राणि पदानि स्वेन न्यायेनासम्बद्धानि । यथा च वृत्तिपदानि असम्बद्धानि तथेदमुच्यते । स्वस्य पक्षस्येति स्वार्थासिद्धेरयुक्तम्, स्वार्थश्च प्रतिषिद्धः अतोऽयुक्तं स्वस्य पक्षस्येति । यदपि षष्ठीसप्तमीद्विवचनयोस्तुल्यरूपत्वात् षष्ठीस्वज्ञापनार्थं स्वस्य पक्षस्येति तदप्ययुक्तम् । अधिकरणार्थासम्भवात्—नहि पक्षव्यतिरेकेण पक्षे किञ्चित् साध्यं सम्पद्यति तस्मादप्रसक्तः सप्तम्यर्थः तदप्रसक्तौ विशेषणानर्थक्यमिति ।

युक्तायुक्तत्वाऽनुपपत्तिश्च विकल्पानुपपत्तेः—युक्तायुक्तत्वे खलु साधनदूषणे वा स्याताम्, साधनदूषणाभ्यां वा योगः, पदार्थस्य वा तथातथात्वे इति । तत्र ताव-

न साधनदूषणे युक्तायुक्तत्वे, कस्मात्? साधनदूषणयोः पृथगभिधानात्—ते साधनदूषणैरिति पृथगुक्ते साधनदूषणे, युक्तायुक्तत्वशब्दाभ्यां च साधनदूषणयोरभिधानमिति न साधनदूषणैरिति सूत्रमनुच्चार्यं चरितार्थत्वादिति। अथ मन्यसे तयोरेव युक्तायुक्तयोर्विशेषणार्थं ते साधनदूषणैरिति। न। प्रथमाभिधानप्रसङ्गात्। यदि युक्तायुक्तत्वविशेषणार्थं ते साधनदूषणैरिति सूत्रे? प्रथमैव व्याख्या ते साधनदूषणानीति। नहि विशेषणविशेष्यभावे भवति नीलमुत्पलैरिति। योग इति चेत्—अथ साधनदूषणाभ्यां योगो युक्तत्वायुक्तत्वे इत्येवं चेन्मन्यसे तन्न अनिर्देशात् न साधनदूषणाभ्यां योगो निर्दिष्ट एवं विध इति, अनिर्देशादयुक्तमेतत्। साधनेन योग इति च कदा भवति यदासौ निर्णीतः पदार्थः तदा च न साधनार्थः कश्चिदस्तीति न युक्तायुक्तत्वेनाधिकरणप्रत्यायनमिति व्याघातादतो न युक्तो योगः। अथ पदार्थस्य तथातातथाते युक्तायुक्तत्वे? तदपि न। करणार्थस्यासम्भवात्—ये तथात्वातथात्वलक्षणे युक्तायुक्तत्वे ते व्यवच्छेद्ये न तु व्यवच्छेदस्य साधने। तस्मात् करणार्थो नास्त्यतो युक्तायुक्तत्वस्येति युक्तं वक्तुमिति।

अधिकरणप्रत्यायनमिति च न युक्तम् शास्त्रसम्बन्धासङ्गतत्वात्—शास्त्रसम्बन्धं कुर्वाणेनोक्तं सन्देहविपर्ययप्रतिषेधार्थः शास्त्रस्यारम्भ इत्येतन्निरपेक्षेणेदमुच्यते अधिकरणप्रत्यायनं सिद्ध्यसिद्धी इति। न च प्राश्निकेषु संशयविपर्ययौ स्तः परिच्छेदकत्वात्—तस्मान्न प्राश्निकाः प्रत्याय्या इति। यच्चोक्तं प्राश्निकप्रत्यायनादेव वादिप्रत्यायनं कृतं भविष्यतीति। तत्प्रत्यायनाद्वादिप्रत्यायनं भविष्यतीति किं कारणम्, प्रतिवादी किल स्वपक्षरागात् सन्तमप्यर्थं न प्रतिप-

घते ? । सन्तमप्यर्थं न प्रतिपद्यते इति व्याहतमुच्यते । कथं चान्यथा प्रतिपन्नः साक्षित्वाभिधीयते । अथ प्रतिपद्यमानोऽपि परस्य न कामकारं ददाति तथापि न प्रतिपद्यत इति व्याहतमुच्यते । यच्च प्राश्निकप्रत्यायनात् तत्प्रसाधनमिति । तदपि न, प्रतीतेः कारणभेदात्—प्राश्निकप्रतीतेरन्यानि कारणानि अन्यानि प्रतिवादिप्रतीतेरिति । न चान्यविषयस्य करणस्यान्यत्र क्रियेति । नियमाभावाच्च । न चायं नियमः प्राश्निकप्रत्यायनार्थ एव वादः प्राश्निकानन्तरेणापि गुर्वादिभिः सह वादो दृष्ट इति । यदा तु नायं(१) तत्त्वबुभुत्सुर्लाभपूजाख्यातिकामो वादमारभते तदा प्राश्निकैः प्रयोजनमस्तीति । सत्यमस्ति प्रयोजनं वादस्तु न भवतीति । न । त्रैविध्यानभ्युपगमात्— एक एवायं कथामार्गः तस्य प्रयोजनं तत्त्वावबोधो लाभादयश्च । न । प्रतिषेधात्— प्रतिषिद्धः स्तुतिमानलाभलिप्सोर्वादः । यदपीदमुच्यते ।न। त्रैविध्यानभ्युपगमादिति ? नानभ्युपगमायत्तः पदार्थसद्भावः अपि तु सद्भावे सत्यभ्युपगम इति यथा च त्रैविध्यं कथामार्गस्य तथा लक्षणभेदाद्वादाद् जल्पवितण्डयोर्भेदमुपपादयिष्यामः । तस्मादज्ञात्वा विक्षेपमुच्यते त्रैविध्यानभ्युपगमादिति । यच्चोक्तं पक्षसिद्धिविषयं प्रसाधनं पक्षसिद्धिशब्देनोपचरितं यथा शून्यताविषयः समाधिः शून्यतेति । न कामत उपचारो लभ्यते अपि तु प्रमाणासम्भवेन, लोकप्रयुक्तशब्दान्वाख्यानमुपचारः उक्तं च नोपचरितशब्दप्रयोगो लक्षणे उपपन्न इति । तदर्थं वचनमित्येतदपि किल चतुर्विधवाक्यज्ञापनार्थमुक्तम् साधनं साधनाभासो दूषणं दूषणाभासश्च सम्पत्स्यत इति । तदयुक्तम् युक्तायुक्तत्वेनेतिविशेषितत्वात् एव विशेषिते एतस्मिन् कुतश्च-

(१) त्वयं इति २ पु. पा. ।

तुर्विधवाक्यसंग्रह इति । अधिकरणं पुनर्वो वादिप्रतिवादिभ्यामधिकृत इत्यधिकरणार्थो वक्तव्यः न हि वादे प्राश्निकाधारं किञ्चिदस्तीति । प्रत्यायनाधारत्वादधिकरणमिति चेत् नोक्तोत्तरत्वात्–उक्तोत्तरमेतत् पक्षविषयं प्रत्यायनं न प्राश्निकविषयमिति। तस्मिन् सति भावादिति चेत् नान्यथापि दर्शनात्–अन्यथापि गुर्वादिभिः सह दृष्टो वाद इति । (१)तद्वादे परीक्षा का कस्य केति वक्तव्यम् ? । साधनदूषणप्रयोगः पक्षस्थापनाविषयो वाद इति, तस्य परीक्षा साधनदूषणतदाभासपरिज्ञानम्, तदर्थमधिकारः उभयोः तदिममिति सम्यगर्थो नास्ति । यदपि प्राश्निकप्रतिवादिनोः प्रियाप्रियवचसि वादप्रसङ्ग इति चोद्यं कृतं प्रतिसमाधानमुक्तम् तस्मिद्धयसिद्धिभ्यां साक्षात् पारम्पर्येणासम्बन्धाद्युक्तायुक्तविशेषणाद्यसम्बद्धमुक्तरेण स्वसङ्गतपदार्थाभिधायिनो दत्तः स्वहस्तः पूर्वापरयोरसम्बन्धादिति । यदि स्वसङ्गतस्याप्युत्तरं वाच्यम् तत एवं वक्तव्यम् न सूत्रार्थापरिज्ञानादिति । तदेतत्सूत्रं विचार्यमाणं सह वार्त्तिकेन युक्त्या सङ्गच्छत इति यथान्यायमेवास्तु ॥

**यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः ॥ २ ॥**

यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः । समस्तं वादलक्षणं छलजातिनिग्रहस्थानसाधनोपालम्भश्च जल्प इति(२) । यथोक्तोपपन्न इति न युक्तम् जल्पे निग्रहस्थाननियमस्यानभ्युपगमात्– यथैवमुच्येत प्रमाणतर्कसाधनोपालम्भः सि-

(१) यदि प्राश्निका न सन्ति इति ता. टीकाऽनुसारेणाधिकमपेक्षितम् ।

(२) साधनोपालम्भश्छलजल्प—पा० २ पु० ।

द्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इति ? न युक्तमेवं भवितुम् । सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न इति च पदयोरुपालम्भप्रयणात् समस्तनिग्रहस्थानप्रसक्तौ नियमार्थत्वात्–नियमार्थे एते पदे सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न इति । जल्पे च नियन्तव्यं न किञ्चिदस्ति, तस्मान्नियमार्थे एते पदे नातिदेष्टव्ये इत्यतो न वक्तव्यं यथोक्तोपपन्न इति। नैष दोषः । सम्भवतोऽतिदेशात्–यदत्र सम्बध्यते तदतिदिश्यते। किञ्च सम्बध्यते ? प्रमाणतर्कसाधनोपालम्भ इत्येतत्, तस्माद्यथोक्तोपपन्न इति लक्षणमात्रस्यातिदेशः–यथाऽन्यत्र "अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिरिति"(१) "अनेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यात"मिति (२)न स्वरूपविशेषोऽतिदिश्यत इति, अपि त्वनेकद्रव्यसमवायमात्रं स्वगतो विशेषः सामर्थ्यात्, तथेहापि यत् समर्थं तदतिदिश्यते समर्थं च लक्षणं, तस्मात् तदतिदिश्यते । न नियमार्थे पदे नियन्तव्यस्याभावात् । अथवा यथोक्तोपपन्नेनोपपन्नो यथोक्तोपपन्नोपपन्न इति प्राप्ते गम्यमानत्वादेकस्योपपन्नशब्दस्य लोपः यथा गोरथ इति । केन पुनरयं गम्यत इति? उक्तं सामर्थ्येनेति । न हि नियमार्थयोः पदयोर्जल्पे सम्भवः तस्मान्न ते अतिदिश्येते इति । भाष्यमिदानीं कथं ? न।सूत्रपाठानुक्रमज्ञापनार्थत्वाद्भाष्यस्य–एतस्मिन् सूत्रे यदुपपन्नं लक्षणत्वेन तदतिदिश्यत इति। छलजातिनिग्रहस्थानैर्न कस्यचित् साधनमुपालम्भो वा युक्तोऽयुक्तोत्तरत्वात् । छलं तावत् न साधनोपालम्भायालम् कस्मात् ? अयुक्तोत्तरत्वात्– अयुक्तमुत्तरं छलं तत्र, प्रमाणोप-

(१) वैशेषिक–सू० अ० ४ आ० १ सू० ८।
(२) वैशेषिक–सू० अ० ४ आ० १ सू० ९।

लम्भायेति, एवं जातिः । अङ्गभाव इति चेत्— अथापीदं स्यात् यत्तत् प्रमाणतर्कैः साधनं यो वा उपालम्भः तस्यैतानि प्रयुज्यमानानि छलजातिनिग्रहस्थानानि रक्षणार्थत्वादङ्गं भवन्तीति ? एतदप्युक्तोत्तरत्वादनुपपन्नम् । किमर्थं तर्हि प्रयोगः ?— यद्येतानि छलजातिनिग्रहस्थानानि साधनोपालम्भयोर्न साधनमङ्गं वा किमर्थमेनेषामुपपादनमिति ? साधनविघातार्थम्— साधनं विहनिष्यामीति अनया धियाऽयहुनः प्रवर्तते । यत्र चैतानि छलजातिनिग्रहस्थानानि प्रयुज्यन्ते न स वादः, न पुनरेतदभिधीयते छलजातिनिग्रहस्थानानि साधनमङ्गानि वेति, साधुसाधनोपादाने च परेणाकुलितबुद्धिः छलादीनि प्रयुङ्क्ते कदाचिच्छलादिभिराकुलीकृतस्य पराजयोऽपि स्यात्, न पुनरेतानि तत्त्वबुभुत्सुना वक्तव्यानि, किं तु विजिगीषुणेति । सोऽयं पक्षप्रतिपक्षपरिग्रहश्छलजातिनिग्रहस्थानप्रयोगाप्रयोगाभ्यां भिद्यमानो वादो जल्पो वितण्डा च भवति ।

अत्रापि विरुद्धौ धर्मावेकाधिकरणस्याविति समानम् । विरुद्धयोर्धर्मयोरेकाधिकरणत्वानुपपत्तिः उभयस्वभावासम्भवात्—यदि विरुद्धावेकाधिकरणौ धर्मौ भवतः तदैकं वस्तूभयस्वभावं प्राप्तम्, न चैतदस्ति, तस्मान्न विरुद्धौ धर्मावेकाधिकरणाविति ? नाध्यारोपितस्वरूपधर्मप्रतिपत्त्या तदुपपत्तेः—एकस्मिन् धर्मः स्वरूपेण एकस्मिन्नध्यारोपितस्वरूपप्रवृत्तिः तस्मादुभयधर्मा धर्मीति युक्तम् । एकधर्मिस्थौ विरुद्धार्थाविति दपि न युक्तामहे को विरुद्धार्थ इति ?। (न) । स्वरूपाविपर्ययोपपत्तेः स्वरूपाभावविपर्ययोविरोधः न पुनर्यथा वध्यघातकभावो वेति ॥

स प्रतिपक्षस्थापनाहीनो वितण्डा ॥ ३ ॥

स प्रतिपक्षस्थापनाहीनो वितण्डा । प्रतिपक्षस्थापनाहीन

इति यावदुक्तम्भवति द्वितीयपक्षवादी वैतण्डिको न कञ्चित् पक्षं स्थापयतीति ।

अपरे तु ब्रुवते दूषणमात्रं वितण्डेति—दूषणमात्रमिति मात्रशब्दप्रयोगाद्वैतण्डिकस्य पक्षोऽपि नास्तीति । अयुक्तं चैतत् चतुर्वर्गस्याभ्युपगमात् दूषणमभ्युपगच्छन् दूष्यमभ्युपैति अयथार्थावबोधं प्रतिपद्यते प्रतिपादयितारं प्रतिपत्तारं च, दूषणमात्राभ्युपगमे सति सर्वमेतन्न स्यात् दूषणमात्राभ्युपगमाच्छेपमर्थतोऽवगम्यत इति वितण्डा वितण्डेत्येव वक्तव्यम्—यया वितण्ड्यते सा वितण्डेत्यनुगतार्थया सञ्ज्ञयैव परप्रतिपत्तिविघातः क्रियत इति । तस्मात् यथान्यासमेवास्तु न्याय्यम् ॥

**सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः ॥ ४ ॥**

हेतुलक्षणाभावादहेतवो हेतुसामान्याद्धेतुवदाभासमानास्त इमे सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः । किं पुनर्हेतुभिरहेतूनां सामान्यं येन हेतुवदाभासन्त इति ? प्रतिज्ञानन्तरं प्रयोग' सामान्यं—यथैव हेतवः प्रतिज्ञानन्तरं प्रयुज्यन्ते एवं हेत्वाभासा अपीत्येव सामान्यम् । अन्यतमलिङ्गधर्मानुविधानं वा—यद्वा यत्साधनस्य लिङ्गस्य त्रैविध्यं तदेकतमधर्मानुविधानम्, द्विलक्षणस्यान्यतरधर्मानुविधानं वा विवक्षितम् । साधकासाधकत्वे तु विशेषः हेतोः साधकत्वं धर्मोऽसाधकत्वं हेत्वाभासस्य । किं पुनस्तत् ? समस्तलक्षणोपपत्तिरसमस्तलक्षणोपपत्तिश्च । कः पुनरस्य सूत्रस्यार्थः ? विभागोद्देशो नियमार्थ इत्युक्तम् । किं पुनर्विभागोद्देशेन नियन्तव्यम् ? अनेकधा प्रसृतस्य हेतुहेत्वाभासस्य विस्तरः सङ्क्षेप्तव्य इति । कियता पुनर्भेदेनायं हेतुहेत्वाभासः प्रसृत इति ? कालपुरुषवस्तुभेदानुविधानेनापरिसंख्येयः सामान्यतः साध्यव-

स्वरूपग्रहेण हेतुहेत्वाभासभेदः प्रपञ्च्यमानः षट्सप्ततिशतम् । तत्र साध्यव्यापकधर्मभेदः षोडशधा । साध्यैकदेशवृत्तिधर्मोऽप्येवम् । एवं साध्यावृत्तिधर्मभेद इति । विशेषणविशेष्यासिद्धिभेदाच्चतुःषष्टिः । एवं समर्थासमर्थविशेषणविशेष्यभेदादिति ।

तत्र साध्यव्यापकधर्मभेदानां षोडशानामुदाहरणानि—तत्र साध्यतज्जातीयान्यव्यापकः प्रमेयत्वान्नित्योऽनित्यो वेति १ । साध्यतज्जातीयव्यापको विपक्षैकदेशवृत्तिः गौरयं विषाणित्वात् २ । साध्यतज्जातीयव्यापको विपक्षावृत्तिः अनित्यः शब्द उत्पत्तिधर्मकत्वात् ३ । साध्यव्यापकस्तज्जातीयावृत्तिः विपक्षव्यापकः नित्यः शब्दः उत्पत्तिधर्मकत्वात् ४ । साध्यव्यापकस्तज्जातीयावृत्तिः विपक्षैकदेशवृत्तिः नित्यः शब्दः सामान्यविशेषवत्त्वे सत्यस्मदादिबाह्यकरणप्रत्यक्षत्वात् द्व्यणुकवत् ५ । साध्यव्यापकस्तज्जातीयविपक्षावृत्ति(१)र्यथा नित्यः शब्दः सामान्यविशेषवत्त्वे सति श्रावणत्वात् घटादिवत् ६ । साध्यव्यापकस्तज्जातीयैकदेशवृत्तिः विपक्षव्यापकश्च अगौरयं विषाणित्वात् ७ । साध्यव्यापकस्तज्जातीयविपक्षैकदेशवृत्तिः नित्यः शब्दोऽस्पर्शवत्त्वात् ८ । साध्यव्यापकस्तज्जातीयैकदेशवृत्तिर्विपक्षावृत्तिः अनित्यः शब्दः सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वात् सामान्यविशेषवत इति सामान्यविशेषसमवायानां निराकरणम्, अस्मदादिप्रत्यक्षत्वादिति परमाणूनां, बाह्यकरणप्रत्यक्षत्वादित्यात्मनः ९ । साध्यतज्जातीयव्यापकोऽविद्यमानविपक्षः सिद्धान्तभेदेनैकान्तवादिनः अनित्यः शब्द उत्पत्तिधर्मकत्वात् १० । साध्यव्यापकस्तज्जातीयैकदेशवृत्तिरविद्यमानविपक्षः अनित्यः शब्दो बाद्य(कृ-

---

(१) तज्जातीयश्च विपक्षश्चेति द्वन्द्वः तयोरवृत्तिः तथा चाविद्यमानसपक्षविपक्ष इत्यर्थः ।

रण)न्द्रियप्रत्यक्षत्वात् ११। साध्यव्यापकस्तज्जातीयावृत्तिरविद्यमानविपक्षः अनित्यः शब्दः श्रावणत्वात् १२। साध्यव्यापकोऽविद्यमानसजातीयो विपक्षव्यापकः नित्यः शब्द उत्पत्तिधर्मकत्वात् १३। साध्यव्यापकोऽविद्यमानसजातीयो विपक्षैकदेशवृत्तिः नित्यः शब्दो बाह्येन्द्रियप्रत्यक्षत्वात् १४। साध्यव्यापकोऽविद्यमानसजातीयो विपक्षावृत्तिः नेदं निरात्मकं जीवच्छरीरम् अनिन्द्रियाधिष्ठानकत्वप्रसङ्गात् १५। पक्षव्यापकोऽविद्यमानसपक्षविपक्षः सर्वं नित्यं प्रमेयत्वात् १६। त एते पक्षव्यापकाः षोडश। एषां पञ्च हेतवः, शेषा हेत्वाभासाः, तत्रान्वयव्यतिरेकिणौ द्वौ विपक्षावृत्ती तृतीयनवमौ एकान्तवादिनोन्वयिनावेव दशमैकादशौ व्यतिरेकी(१) पञ्चदश इति।

अथ साध्यैकदेशवृत्तयः—साध्यैकदेशवृत्तिस्तज्जातीयविपक्षव्यापकः पृथिव्यप्तेजोवाय्वाकाशानि अनित्यानि अगन्धवत्त्वादिति१। साध्यैकदेशवृत्तिस्तज्जातीयव्यापको विपक्षैकदेशवृत्तिश्च सामान्यविशेषवदस्मदादिबाह्यकरणप्रत्यक्षे वाङ्मनसे अनित्यत्वात्२। साध्यैकदेशवृत्तिस्तज्जातीयव्यापको विपक्षावृत्तिः अनित्ये वाङ्मनसे उत्पत्तिधर्मकत्वात्३। साध्यैकदेश(शा)वृत्तिस्तज्जातीयावृत्तिः विपक्षव्यापकः (अ)नित्ये वाङ्मनसे उत्पत्तिधर्मकत्वात्४। साध्यैकदेशवृत्तिस्तज्जातीयावृत्तिः विपक्षैकदेशवृत्तिः सामान्यविशेषवदस्मदादिबाह्यकरणप्रत्यक्षे वाङ्मनसे नित्यत्वात्५। साध्यैकदेशवृत्तिस्तज्जातीयविपक्षावृत्तिः अनित्यः शब्दो विभागजविभागासमवायिकारणकत्वात् ६। साध्यतज्जातीयैकदेशवृत्तिः विपक्षव्यापकः अनित्याः परमाणवोऽगन्धवत्त्वात्७। साध्यतज्जातीयविपक्षैकदेशवृत्तिः अनित्ये वाङ्मनसे अमूर्तत्वात् ८। साध्यतज्जातीयैकदेशवृत्तिर्विपक्षावृत्तिः अनित्ये वाङ्मनसे सामान्यवतोऽस्मदादिबाह्यकरण-

---

(१) अनन्वयी इति २ पु. पा.।

प्रत्यक्षत्वात् ९। साध्यैकदेशवृत्तिः तज्जातीयव्यापकः अविद्यमान-विपक्षः सिद्धान्तभेदाश्रयेण अनित्ये रूपविज्ञाने अमूर्तत्वात् वेदनादिवत् १०। ( साध्यतज्जातीयैकदेशवृत्तिरविद्यमानविपक्षः अनित्ये शब्दमनसी श्रावणत्वात् १०। ) साध्यैकदेशावृत्तिर-विद्यमानसजातिः अनित्ये चक्षुर्विज्ञाने (अ)मूर्तत्वात् रूपादिव-दिति ११। साध्यैकदेशवृत्तिस्तज्जातीयावृत्तिरविद्यमानविपक्ष अनित्ये शब्दमनसी श्रावणत्वात्१२। साध्यैकदेशवृत्तिरविद्यमान-सजातिर्विपक्षव्यापकः (अ)नित्ये वाङ्मनसे उत्पत्तिधर्मकत्वात्१३। साध्यैकदेशवृत्तिरविद्यमानसजातिर्विपक्षैकदेशवृत्तिश्चानित्ये चक्षु-र्विज्ञाने मूर्तत्वात् १४। साध्यैकदेशवृत्तिरविद्यमानसजातिर्वि-पक्षावृत्तिश्च नेदं निरात्मकं शरीरमनिन्द्रियाधिष्ठानत्वमसद्भावात् १५। साध्यैकदेशवृत्तिरविद्यमानसपक्षविपक्षः सर्वमनित्यं मूर्त-त्वादिति १६। एते च साध्यैकदेशवृत्तयः षोडश यथोक्ताः सर्वे हेत्वाभासाः ॥

अथ साध्यावृत्तयः। साध्यावृत्तिस्तज्जातीयविपक्षव्यापकः अनित्या पृथिवी अगन्धवत्त्वात् १। साध्यावृत्तिस्तज्जातीयव्यापको विपक्षैकदेशवृत्तिश्च अनित्यः शब्दोऽश्रावणत्वात् २। साध्यावृ-त्तिस्तज्जातीयव्यापको विपक्षा(क्ष)वृत्तिः अर्थः शब्दः अश्रो: त्रग्राह्यसामान्यवत्त्वात्३। साध्यतज्जातीयावृत्तिर्विपक्षव्यापकः अर्थः शब्दः असामान्यवत्त्वात्४। साध्यतज्जातीयावृत्तिर्विपक्षवृत्तिश्च(१) कारणवान् शब्दोऽनर्थत्वात् ५। साध्यतज्जातीयविपक्षावृत्तिः नित्यः शब्दोऽसत्त्वात् ६। साध्यावृत्तिस्तज्जातीयैकदेशवृत्तिर्विपक्ष-व्यापकः अस्पर्शः शब्दो द्रव्यत्वात् ७। साध्यावृत्तिस्तज्जाती-यविपक्षैकदेशवृत्तिः कारणवान् शब्दो मूर्तत्वात् ८। साध्यावृ-

(१) विपक्षैकदेशावृत्तिश्च इति २ पु० पा०।

त्तिस्तज्जातीयैकदेशवृत्ति(१)र्विपक्षाद्वृत्तिः आश्रयवान् शब्दश्राक्षुषत्वात् ९ औलूक्यपक्षे । साध्याद्वृत्तिस्तज्जातीयव्यापकोऽविद्यमानविपक्षः सिद्धान्तभेदाश्रयेण अनित्यः शब्दोऽश्रावणत्वात् १० । साध्याद्वृत्तिस्तज्जातीयैकदेशाद्वृत्तिरविद्यमानविपक्षः अनित्यः शब्दो मूर्तत्वात् ११ । साध्यतज्जातीयावृत्तिरविद्यमानविपक्षःअनित्य. शब्दोऽसत्त्वात् १२ । साध्यावृत्तिरविद्यमानसजातिर्विपक्षव्यापकः नित्यः शब्दोऽश्रावणत्वात् १३ । साध्यावृत्तिरविद्यमानसजातिर्विपक्षैकदेशवृत्तिः नित्यः शब्दो मूर्तत्वात् १४ । साध्यावृत्तिरविद्यमानसजातिर्विपक्षावृत्तिः नित्यः शब्दोऽसत्त्वात् १५ । साध्यावृत्तिरविद्यमानसमानविपक्षः अनित्यं सर्वमसत्त्वात् १६ । त एते षोडश साध्यावृत्तयो हेत्वाभासाः विशेषणविशेष्यासिद्धिभेदाच्चतुःषष्टिर्भवन्तीत्युक्तम् । तत्कथं ? व्यापकाव्यापकविशेषणयोगात् य एव साध्यव्यापकाः षोडश ये च पक्षैकदेशवृत्तयः ते विशेषणविशेष्यासिद्धिभेदेन चतुःषष्टिर्भवन्तीति ।

तत्र व्यापकानां तावदुदाहरणानि । अनित्यः शब्दोऽनभिधेयत्वे सति प्रमेयत्वात् विशेषणासिद्धः । प्रमेयत्वे सत्यनभिधेयत्वादिति विशेष्यासिद्धः । एवं सर्वेषु साध्यव्यापकेषु विशेषणविशेष्यासिद्धभेदो द्रष्टव्यः । तान्येव चोदाहरणानि । साध्यैकदेशवृत्तीनामुदाहरणम्—पृथिव्यप्तेजोवाय्वाकाशान्यनित्यानि अनभिधेयत्वे सति अगन्धवत्त्वात् विशेषणासिद्धः । अगन्धवत्त्वे सत्यनभिधेयत्वादितिविशेष्यासिद्धः । एवं सर्वेषु साध्यैकदेशवृत्तिषु । एवमसमर्थविशेषणासमर्थविशेष्याश्चतुःषष्टिरेव द्रष्टव्याः । यथा अनित्यः शब्दः कृतकत्वे सति प्रमेयत्वात् प्रमेयत्वे सति कृतकत्वादिति । एवं शेषेषूदाहरणेषु । एवं सन्दिग्धविशेषणविशेष्यभेदा अपि द्रष्टव्याः ।

(१) पक्षैकदेशवृत्तिरिति २ पु० पा० ।

यथा मयूरशब्दोऽयं षड्जादिमत्त्वे सति अवर्णात्मकत्वात् अवर्णात्मकत्वे सति षड्जादिमत्त्वात् । त एते उभयपक्षसम्प्रतिपन्ना विद्यमानसाध्यधर्मा उदाहृता इति । एवमन्यतरासिद्धा इति व्यापकाव्यापकभेदेन द्वात्रिंशकं(१) शतम् । ते च पुनर्व्यधिकरणसन्दिग्धासमर्थविशेषणविशेष्यभेदेन द्वानवतं शतम् । एवमप्यसिद्धाश्रयोभयान्यतरपक्षाप्रसिद्ध्या द्वात्रिंशकं शतं ते च पुनः पूर्ववदेव द्वानवतं शतम् । यथाऽग्निमान् देशो धूमवत्त्वात् अस्ति चात्मा इच्छादिगुणत्वात् । असमर्थाव्यापकासिद्धविशेषणानामुदाहरणम्—अनित्यः शब्दः प्रयत्नानन्तरीयकत्वे सति कृतकत्वात् । अव्यापकासमर्थविशेष्याणामुदाहरणम्—अनित्यः शब्दः प्रत्ययभेदभेदित्वे सत्युपलभ्यमानत्वात् । व्यधिकरणविशेष्याणामुदाहरणम्—अस्ति प्रधानं भेदानामन्वयदर्शनात् । व्यधिकरणविशेषणानामुदाहरणम्—रूपादिशब्दाश्चन्दनशब्दादत्यन्ताभिन्नार्थाः समुदायसमुदायिसम्भवे सति तेन व्यपदेशात् । एतदेव व्यधिकरणविशेषणविशेष्यस्योदाहरणं विपर्ययेण । अन्यथासिद्धोदाहरणम् । अन्येषां अभ्यासान्नित्यः शब्दः । सन्दिग्धासिद्धविशेषणानामुदाहरणम् यथा सन्दिह्यमानधूमादिभावोऽग्निमान् देशो धूमवत्त्वे सति प्रकाशकत्वात् विपर्ययेण सन्दिग्धविशेष्या वक्तव्याः । एवं सन्दिग्धासिद्धासिद्धा उभयान्यतरासिद्धा व्यापकाव्यापकभेदेन चतुःषष्टिर्भवन्तीति । ते च पुनः पूर्ववद्भेदेन शतत्रयं चतुरशीतम् । एवमन्यथासिद्धभेदो द्रष्टव्यः । एवं विरुद्धविशेषणविरुद्धविशेष्याश्च सर्वत्र द्रष्टव्या इति । एषां तूदाहरणानि हेत्वाभासवार्त्तिके द्रष्टव्यानि स्वयं चाभ्यूह्यानि । त एते

---

(१) द्वाभ्यामूना त्रिंशदिति व्याख्यातं तात्पर्यटीकायां वाचस्पतिमिश्रैः ।

हेत्वो(१) हेत्वाभासाश्चासङ्कीर्णविशेषणविशेष्यभेदेन द्वे सहस्रे द्वात्रिंशके(२) असिद्धादिसमुच्चयेनानन्तो भेद इति । साध्यावृत्तपक्षत्वसत्त्वान्न विशेषणयोगिन इत्यतो नाभिधीयन्ते । त एते विद्यमानसाध्यव्यापकाव्यापकधर्माः(३) प्रपञ्चत उक्ताः । तत्र मुख्यासिद्धभेदाः षोडश ये (ते) पक्षावृत्तयः । अनैकान्तिकास्त्वसङ्कीर्णा मुख्यतः षडेव । साध्यव्यापकवर्गे विरुद्धाश्चत्वार एव । (तस्मिन्) अन्तिमस्तु पक्षमात्रधर्मत्वात् अनुपसंहार्येव । शेषा हेत्वाभासाः तेऽसिद्धानैकान्तिकविरुद्धा अव्यापकासिद्धभेदेन(४) सङ्कीर्णा उदाहरणेषु स्वयमूह्या इति ।

केचित्तु विरुद्धाव्यभिचारिणमनैकान्तिकं वर्णयन्ति । तस्यासत्त्वात्—नायमस्तीत्युक्तम् । उपेत्य तस्य पञ्चविंशतिधा भेद पञ्चानां हेतूनां सरूपासरूपप्रतिसन्धानात् पञ्च पञ्चका भवन्तीति । तेषां तु सर्वेषां नोदाहरणानि सन्तीति नोदाह्रियन्ते । त एते हेत्वाभासाः सङ्क्षेपेणैतावता भेदेन भेदवन्तस्तेषां सङ्ग्रहार्थं हेत्वाभासानां विभागोद्देशार्थं सूत्रम् । लक्षणत एव पञ्चत्वं गम्यत इति चेत्—यान्येतानि पञ्च हेत्वाभासानां लक्षणसूत्राणि तैरेव पञ्चत्वं गम्यत इति नियमार्थं सूत्रमनर्थकम् ? । नानर्थकम् लक्षणस्येतरेतरव्यवच्छेदकत्वात्—व्यवच्छेदकं लक्षणं न पुनर्नियमार्थम्—न हि नियमो लक्षणेन गम्यत इति ॥

अनैकान्तिकः सव्यभिचारः ॥ ५ ॥

---

(१) तत्र तेत्र हेत्वभावो–पा० २ पु० । पत्वाभावो–इति क्वचित् ।
(२) द्वात्रिंशे द्वे सहस्रे भवत इति तात्पर्यटीकायाम् ।
(३) अव्यापक इति २ पु० नास्ति ।
(४) तेऽसिद्धानैकान्तिका विरुद्धाव्यापकप्रसिद्धाव्यापकभेदेन इति २ पु० पा० ।

तेषामनैकान्तिकः सव्यभिचारः । एकस्मिन्नन्ते नियत ऐकान्तिकः विपर्ययादनैकान्तिकः । कः पुनरयं व्यभिचारः ? साध्यतज्जातीयान्यद्वृत्तित्वम्—यत् खलु साध्यतज्जातीयद्वृत्तित्वे सति अन्यत्र वर्तते तद्व्यभिचारि, तद्वृत्तित्वं व्यभिचारः सर्वोऽयं पदार्थभेदोऽन्तद्वयेऽवतिष्ठते अन्यत्र प्रमेयात्,(१) नित्यश्चानित्यश्च व्यापकश्चाव्यापकश्च इत्येवमादिः।तत्र यो हेतुरुपात्त उभावन्तावाश्रित्य प्रवर्तते सोऽनैकान्तिकः ।

अनैकान्तिक इति किं पुनरयं पर्युदास उत प्रसज्यप्रतिषेध इति ? किं चातः ? यदि पर्युदासः सर्वानैकान्तिकता—ऐकान्तिकादन्योऽनैकान्तिक इति ब्रुवता भवता सर्वोऽनैकान्तिकः प्राप्तः, एवं चैको हेत्वाभास इति प्राप्तम् । अथ प्रसज्यप्रतिषेधः ? तथाप्यैकान्तिकाभावोऽनैकान्तिक इति प्राप्तम्—तस्य व्यभिचारोऽर्थो नास्तीति अयुक्तोऽनैकान्तिको हेत्वाभासः ?। नायं पर्युदासपक्षः किन्तु प्रसज्यप्रतिषेधः। प्रसज्यप्रतिषेधो ऽभाव इति चेत् ? नाभावो धर्मविशेषकत्वात्—धर्मोऽयं विशिष्यते—य एकान्ते सन्नियतो धर्म इति न भवति,(२) न पुनरभावः—अभावे विशेषणविशेष्यासम्भवान्नाभाव एकान्तसन्नियतो नानैकान्तिक (३) सन्नियतः । कथम् ? अब्राह्मणवदिति—यथा अब्राह्मणशब्दः प्रसज्यप्रतिषेधविषयत्वेन प्रवर्तमानो यदुत्तरपदं तत्प्रतिषेधतीति न पुनरभावं प्रतिपादयति तथेहाप्यसद्दोषः । उदाहरणं—नित्यः शब्दः अस्पर्शवत्त्वात् शब्दस्यास्पर्शत्वमिति पष्ठ्या भेदः प्रदर्श्यते । किं पुनस्तत् ? स्पर्शानाश्रयस्य स्वात्मसत्तानुभवोऽस्पर्शत्वम् स्पर्शानाधारस्य सत्तासम्बन्धो वा, उभयं च

(१) प्रमेयत्वादिति २ पु० पा०। टीकासंमतस्तु प्रमेयादित्येव ।
(२) स नियतो धर्मो भवति इति २ पु० पा० ।
(३) एकान्तसन्नियतोऽतो ऽनैकान्तिक इति २ पु० पा० ।

शब्दव्यतिरिक्तमिहार्थवती षष्ठी। कुतः पुनरेतत्? तद्भावे भावात् तदभावेऽभावादिति—यत्र खलु स्पर्शवत् सत्तामनुभवति न तत्रास्पर्शशब्दः प्रयुज्यत(१)इति। यत्रासत् तत्रापि न प्रयुज्यते यदस्पर्शि सत्तानुभावि तत्र प्रयुज्यत इति। वाक्यार्थाभ्यनुज्ञानाच्च पदार्थाभ्यनुज्ञा—स्पर्शानाधारस्य वस्तुनः सत्तासम्बन्ध इति यो वाक्यार्थः स एवास्पर्शवत्त्वशब्दस्यार्थः। अतिदेशानुपपत्तिरनुक्तत्वादिति चेत्—अनैकान्तिकः सव्यभिचार इति न क्वचिदनैकान्तिक उक्तः इहानैकान्तिकग्रहणात् सव्यभिचारो गम्येत(२) अतो न युक्तमनैकान्तिकः सव्यभिचार इति? नेदमयुक्तम्—लोकतस्तदधिगतेः—यत् पुनर्लोकतो न गम्यते तत्र शास्त्रमर्थवत्, यत् पुनर्लोकत एव गम्यते तत्रोपदेशोऽनर्थकः लोकतश्चेतद्गम्यते उभयान्तसम्भवतोऽनैकान्तिक इति। यदि च यल्लोकतो गम्यते तदनुक्तमिति मन्यसे दुःखादीन्यपि दर्शयितव्यानि किमिदं दुःखमिति, तस्मात् पेलवमेतदिति। अव्यापकत्वादलक्षणमेतदिति चेत्—अथापीदं स्यादनैकान्तिकलक्षणेन न सर्वोऽनैकान्तिको व्याप्यते यथा असाधारणमिति। नानेनैव सङ्ग्रहात्। कथमिति? व्यावृत्तिद्वारेणाभिधीयमानोऽप्युभयान्तव्यावृत्तेरनैकान्तिक इति।

अपरे पुनः प्रकरणसममनैकान्तिक एवान्तर्भावयन्ति। कथमिति? अनित्य आत्मा शरीरादन्यत्वादिति शरीरादप्यन्यन्नित्यमनित्यं च दृष्टमतोऽनैकान्तिक इति। तैस्तु न लक्षणव्यभिचारोऽवगतो नोदाहरणव्यभिचार इति, अनैकान्तिकः सव्यभिचार इत्येतल्लक्षणं

(१) प्रयुज्यत इत्यस्य स्थाने सर्वत्र प्रसज्यत इति २ पु० पा०।
(२) यत इदानीमनैकान्तिकग्रहणानुपपत्तिरनुक्तत्वात्सव्यभिचारो गम्येत इति २ पु० पा०।

व्यभिचारिणः, यदि चानेन प्रकरणसमसङ्ग्रहो भवति प्राप्तस्तर्हि लक्षणस्य व्यभिचारः न पुनरुदाहरणव्यभिचारोऽनैकान्तिकलक्षणव्यभिचार इति। (न) लक्षणस्य तूभयं दोषः लक्ष्याव्याप्तिरलक्ष्यव्याप्तिश्चेति वक्ष्यमाणकं च प्रकरणसमस्य लक्षणमीक्षितव्यम्।

**सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ॥ ६ ॥**

सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध इति। कोऽस्य सूत्रस्यार्थः? अभ्युपगतार्थविरोधी विरुद्धः। एवं च सर्वानुक्तविरुद्धसङ्ग्रहः–यावान् कश्चन विरुद्धभेदः सर्वोऽसावनेन सङ्गृहीत इति। यस्मादभ्युपगतं बाधते अभ्युपगतेन बाध्यते। नन्वेवमेको हेत्वाभासो विरुद्धः प्राप्नोति? सत्यमेक एव हेत्वाभासो विरुद्धः तस्य तु सामान्येन विरुद्धत्वेन संगृहीतस्य पञ्चधोपदेशो यथा प्रमेयमित्यनेन षोडशपदार्था इति। पृथगभिधानं तर्हि विरुद्धस्य न कर्तव्यम्? न नकर्तव्यं–सामान्यतोऽधिगतस्य विशेषज्ञापनार्थं–यथा प्रमेयस्यैव। तत्रानैकान्तिकादिर्हेत्वाभासो द्विरूपोऽनैकान्तिकादिर्विरुद्धश्च। एतस्मिंस्तु विरुद्धतेत्यसाधारणतया तृणोलपादिन्यायेन निष्कृष्याभिधीयते। तस्मादनैकान्तिकादिषु निमित्तद्वयसमावेशात् संज्ञाद्वयसमावेशः विवक्षितसजातीयान्यवृत्तित्वेनानैकान्तिकत्वम् हेतुविषयस्वरूपबाधारूपेण तु विरुद्धः। एवं सर्वत्र। उदाहरणम् "तदेतत् त्रैलोक्यं व्यक्तेरपैति नित्यत्वप्रतिषेधात्, अपेतमप्यस्ति विनाशप्रतिषेधात्"(१) विनाशप्रतिषेधादित्यनेन (न) नित्यमभ्यनुज्ञातं नित्यत्वप्रतिषेधादित्यनेन प्रतिषिद्धम्। एते ते वाक्ये परस्परार्थबाधिते तयोश्च परस्परार्थबाधा विरोधः। प्रतिज्ञाहेत्वोर्वा विरोधः–यो वा प्रतिज्ञाहेत्वोर्विरोधः स विरुद्धो हेत्वाभासः। ननु प्रतिज्ञाविरोधः पृथगुपदिष्टो निग्रहस्थाने पृथक् क हेत्वाभासः तस्मान्न

(१) योगभाष्यस्यैतद्वाक्यम्।

प्रतिज्ञाहेत्वोर्विरोधो वक्तव्य इति । नैष दोषः । उभयाश्रितत्वाद्विरोधस्य । विवक्षातोऽन्यतरनिर्देशः प्रतिज्ञाहेत्वोर्विरोध इति प्रतिज्ञाहेतू आश्रित्य उभयाश्रितो भवति, तत्र यदा प्रतिज्ञया विरोधो विवक्षितस्तदा प्रतिज्ञाविरोध इत्युच्यते यदा प्रतिज्ञाया हेतुविरोधो हेतोर्वा प्रतिज्ञाविरोधकत्वं तदा विरुद्धो हेतुरित्यतः प्रतिज्ञाविरोधो हेतुविरोधो वेत्यदोषः । हेतुविरोधोदाहरणम्—नित्यः शब्द उत्पत्तिधर्मकत्वात्, प्रतिज्ञाविरोधस्योदाहरणम्—नास्त्यात्मेति, प्रतिज्ञाहेतुविरोधोदाहरणम्—गुणव्यतिरिक्तं द्रव्यम् अर्थान्तरस्यानुपलब्धेः, हेतुविरोधोदाहरणम्—नास्त्येको भावः समूहे भावशब्दप्रयोगादिति समूह इति ब्रुवाणेनैकोऽभ्युपगतो भावो भवति एकः समुच्चयो हि समूह इति ॥

**यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ॥ ७ ॥**

यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः । कस्मात् प्रकरणचिन्ता ? तत्त्वानुपलब्धेः—यस्मादुपलब्धतत्त्वेऽर्थे निवर्तते चिन्ता तस्मात् सामान्येनाधिगतस्य या विशेषतोऽनुपलब्धिः सा प्रकरणचिन्तां प्रयोजयति । उदाहरणं—नित्यः शब्दोऽनित्यधर्मानुपलब्धेः अत एव प्रकरणमित्यतो न हेतुः । नन्वयं साध्याविशिष्ट एव यथा शब्दस्य नित्यत्वं साध्यं तथाऽनित्यधर्मानुपलब्धिरपीति ? नाविशिष्टः तस्यैव प्रकरणप्रवृत्तिहेतोर्धर्मस्य हेतुत्वेनोपादानात्. यत्र साध्येन समानो धर्मो हेतुत्वेनोपादीयते स साध्याविशिष्टः, यत्र पुनः प्रकरणप्रवृत्तिहेतुरेव स प्रकरणसमः ।

ये तु संशयहेतुत्वात् प्रकरणसमानैकान्तिकयोरभेदं वर्णयन्ति—तेषां प्रत्यक्षानैकान्तिकप्रकरणसमानामभेदः प्राप्नोति

प्रत्यक्षमपि संशयकारणमिति । समूहः संशयस्य कारणमित्यतो न प्रत्यक्षे प्रसङ्गः ?—सामान्यदर्शनं विशेषाप्यवस्था विशेषस्मृतिश्च समूह इति संशयस्य कारणम्, नैकं प्रत्यक्षमतो न प्रत्यक्षप्रसङ्गः ? समूहः कारणमित्यभिधानादप्रतिषेधः—समूहः कारणमित्येवं ब्रुवता न प्रत्यक्षस्य संशयकारणत्वं प्रतिषिद्धं भवति तस्मात् प्रसङ्गस्तदवस्थ एवेति । उभयधर्मानुपलब्ध्यावन्यतरधर्मोपादानं प्रकरणसमार्थः । यत्र खलूभयविशेषानुपलब्धिस्तत्रान्यतरविशेषस्योपादानं यत्प्रकरणापनोदाय स प्रकरणसमो हेत्वाभासः उभयविशेषानुपलब्धेरभिधानाशक्यत्वात् न ह्युभयविशेषाऽनुपलब्धिः शक्या दर्शयितुम् । शरीरादन्यत्वं तु न सूत्रार्थः न ह्ययं शरीरादन्यत्वमुपलभमानोऽपि यदा तत्त्वमुपलभेत तदा प्रवर्तेत इति, यदा तत्त्वं नोपलभते शरीरादन्यत्वमुपलभमानोऽपि तदा प्रवर्तेत इति । शरीरादन्यत्वं चाऽनैकान्तिकं अतश्च न सूत्रार्थः ॥

साध्याविशिष्टः साध्यत्वात् साध्यसमः ॥ ८ ॥

साध्याविशिष्टः साध्यत्वात् साध्यसमः । साध्येनाविशिष्टो यः साधनधर्मः साध्यवत् प्रज्ञापयितव्यः स साध्यसमो हेत्वाभासः । तस्योदाहरणम्—द्रव्यं छाया गतिमत्त्वादिति । यथैव द्रव्यत्वं छायायाः साध्यं तथा गतिमत्त्वमपीति । गतिमत्त्वं देशान्तरदर्शनादिति चेत्—अथापीदं स्यात् गतिमतीयं छाया देशान्तरे दर्शनादिति—यत् खलु देशान्तरेषूपलभ्यते तद्गतिमत् यथा कुम्भः तथा छाया तस्माद् गतिमतीति ? नाश्रयासिद्धत्वात्—एवमप्याश्रयासिद्धो हेतुः सति द्रव्यभावे छायाया देशान्तरे दर्शनं समर्थं स्यात् द्रव्यभावस्त्वसिद्धः तस्मादाश्रयासिद्धो हेतुः । उपेत्य देशान्तरे दर्शनं तस्यान्यथापि सिद्धेरसिद्धेः—यत्तु देशान्तरे दर्शनं छायायास्तदन्यथा

भवति अन्यथाभवन्नार्थं साधयति । कथमन्यथा ? आवरणसन्ताना-दसन्निधिसन्तानस्तेजस इति । आवरके द्रव्ये सर्पति तेजसोऽस-न्निधिविशिष्टं द्रव्यं यदुपलभ्यते तत्तु छायेत्युच्यते ।

सोऽयमसिद्धस्त्रेधा भवति प्रज्ञापनीयधर्मसमान आश्रयासिद्धः अन्यथासिद्धश्चेति । नित्यः शब्दोऽस्पर्शत्वादित्येतत्र नोदाहर-णम्—न ह्यस्पर्शत्वं शब्दस्य ज्ञापनीयं नाश्रयासिद्धं नान्यथा-सिद्धमिति । यथा चास्माभिः सूत्रं वर्णितं तथा चोदाहृतम् । तथायमसम्बद्धो दोषः न सूत्रार्थो विज्ञातो नाक्षरार्थो न हे-त्वाभासो न दृष्टान्ताभास इति ॥

कालात्ययापदिष्टः कालातीतः ॥ ९ ॥

कालात्ययापदिष्टः कालातीतः । यस्यापदिश्यमानस्य काला-त्ययेनैकदेशो युज्यते स एकदेशात्ययात् कालात्ययापदिष्टः कालातीत इत्युच्यते । उदाहरणं—नित्यः शब्दः संयोगव्यङ्ग्य-त्वादिति उपलब्धिकाले संयोगो नास्ति, सोऽयं संयोगो हेतुविशे-षणत्वेनोपात्त उपलब्धिकालमत्येति यदोपलभ्यते तदा संयोगो नास्ति दारुवृश्चने दारुपरशुसंयोगनिवृत्तौ शब्दोपलब्धिरिति । नन्वयमनैकान्तिक एव संयोगव्यङ्ग्यत्वादिति—अनित्यमपि संयो-गेन व्यज्यमानं दृष्टं यथा घट इति ? न, संयोगव्यङ्ग्यत्वेनावस्था-नस्य साध्यत्वात्—न भूयो नित्यः शब्द इति, अपि त्ववतिष्ठते शब्द इति प्रतिज्ञार्थः, तथा च संयोगव्यङ्ग्यत्वादित्ययं हेतुर्नानैकान्ति-कः, न ह्यनवस्थितं किञ्चित् संयोगेन व्यज्यमानं दृष्टमिति ।

अवयवविपर्यासवचनमपि न सूत्रार्थः सामर्थ्यात् न हि पश्चाद-भिधीयमानो हेतुरुदाहरणसाधर्म्यादित्येतद्धेतुलक्षणं जहाति अज-हद्धेतुलक्षणं न हेत्वाभासो भवितुमर्हतीति । अवयवविपर्यासवचन-

समासक्रालमिति(१) निग्रहस्थानमुक्तम्, तदेव पुनरुच्यत इति । समीकृतेऽभिधानान्निग्रहस्थानमिति चेत् ?—अथ मन्यसे यस्मात् समीकृते पश्चादभिधीयते ततो न निग्रहस्थानमिति ?, केन समीकृत इति वक्तव्यम् ? यदि हेत्वनभिधानेन समीकृतः ? किमत्र हेतोरसामर्थ्यम् ? एतदस्यासामर्थ्यं यदयं पश्चादभिधीयत इति ? नैतद्धेतोरसामर्थ्यं यदयं पश्चादभिधीयत इति, अपि तु वक्तुरिति, न हि स्वतन्त्रो हेतुः साधनमपि तु साधयितृतन्त्रस्तस्य हेतुदोषः सामर्थ्याद्येत्युक्तम् । तस्मादवयवविपर्यासवचनं न सूत्रार्थो न समीकृताभिधानमिति ॥

वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥ १० ॥

वचनविघातोऽर्थविकल्पोपपत्त्या छलम् । वचनविघातो यः क्रियते सामान्यशब्दस्य विशेषानेकसम्बन्धित्वे सति अविवक्षिताध्यारोपेण छलं तद्वेदितव्यम् ।

तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं चेति ॥ ११ ॥

तत्त्रिविधमिति नियमार्थम्—पूर्ववदनेकधा भिन्नं छलं संगृह्यत इति ।

अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् ॥ १२ ॥

अविशेषाभिहिते ऽर्थे इति सूत्रम् । अविशेषाभिहितं सामान्यश्रुति वाक्यं पदं वा अविशेषाभिहितमित्युच्यते । वाक्यं सामान्यश्रुति यथा नवकम्बलोऽयमिति । पदं सामान्यश्रुति यथा अश्वोऽश्व इति । अविशेषशब्दानभिधानं प्रयोगाभावात्—न ह्यविशेषशब्देन कस्यचिदभिधानं सम्भ-

(१) गौ० सू० ५ अ. २ आ. ११ सू० ।

वर्तते, न चास्य प्रयोगो युक्त इति, वाक्यं च सर्वमुच्चरद्विशेषमेव प्रत्यायपतीति सामान्यप्रत्यायनमयुक्तम् ? न, प्रकरणादीनन्तरेण श्रुतिमात्राच्चदुपपत्तेः–यदा प्रकरणादिनिरपेक्षं वाक्यमुच्चार्यते श्वेतो धावतीति तदा वाक्यं श्रुतिसामान्यात् श्रोतुः सम्मोहः सम्मोहे सत्यविवक्षितमर्थमध्यारोप्य प्रतिषेधति । एवं पदेऽपीति । अर्थग्रहणं शब्दनिराकरणायार्थविषयं छलं न शब्दविषयमिति, न ह्ययं प्रतिपेदुं शक्नोति नायं नवकम्बलशब्द इति। तस्य प्रसङ्गस्थानं—ज्ञात्वाऽज्ञात्वा वा प्रयोगात् प्रतिषेधानुपपत्तिः–यदि तावन्नवकम्बलस्यार्थं बुद्ध्वा नायं नवकम्बल इति प्रत्यवतिष्ठते तदार्थान्तरमाह अन्यदुच्यतेऽन्यत्प्रतिषिध्यत इति । अथ पुनर्नैव नवकम्बलस्यार्थं बुध्यते तथाप्यज्ञानमिति ।

**सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम् ॥ १३ ॥**

सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम् । सामान्यस्य विवक्षितार्थातिक्रमोऽतिसामान्यमुदाहरणम् विद्याचरणसम्पन्नो ब्राह्मण इति । परन्तु ब्राह्मण्यं विद्याचरणसम्पन्नत्वे हेतुरिति कृत्वा प्रत्यवतिष्ठते स्तुत्यर्थे वाक्येऽन्यथाकारं प्रत्यवस्थानम् । उभयथा दोषो बुद्ध्वाऽबुद्ध्वा वेति ॥

**धर्मविकल्पनिर्देशे ऽर्थसद्भावप्रतिषेध उपचारच्छलम् ॥ १४ ॥**

धर्मविकल्पनिर्देश इति सूत्रम् । धर्मविकल्पनिर्देशशब्देनाभिधानधर्मो द्वेधाऽभिधीयते प्रधानं भाक्तश्च, मञ्चा इति काष्ठसंघातेषु प्रधानम्—मञ्चशब्दः क्रोशनाक्रियाया असम्भवमीक्षित्वा स्थानिषु पुरुषेषु भाक्तः । सोऽयमभिधानाभिधेयव्यवहार एवं व्य-

वतिष्ठते(१) य एतस्मिन्नन्यथाकारप्रतिषेधः तदुपचारच्छलमिति ।
अस्यापि पूर्ववत् प्रतिषेधो ज्ञात्वाऽज्ञात्वा वेति ॥

**वाक्छलमेवोपचारच्छलं तदविशेषात् ॥ १५ ॥**

**न तदर्थान्तरभावात् ॥ १६ ॥**

वाक्छलमेवोपचारच्छलमिति सूत्रम् । एकत्वमविशेषात् । कोऽविशेषः ? इहाप्यर्थान्तरकल्पना तत्रापीति ? न, तदर्थान्तरभावात् । अविशेषादित्यस्य हेतोरनेन सूत्रेणासिद्धतामुद्भावयति । कथमसिद्धिः ? एकत्र वस्तुसद्भावः प्रतिषिध्यते नैव क्रोशन्ति मञ्चा इति एकत्र वस्त्वभ्यनुज्ञाय कम्बलयोगमभ्युपगम्य कम्बलस्यानेकता धर्मः प्रतिषिध्यत इति । यत्र धर्मः प्रतिषिध्यते यत्र धर्मी सोऽयमतिमहान् विशेषः ।

अथ मन्यते किं नोऽनेन(२) विशेषेण इहाप्यर्थान्तरकल्पना तत्रापीति ।

**अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः ॥१७**

अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः । कोऽस्य सूत्रस्यार्थः ? विरोधः द्वित्वमभ्यनुज्ञायमानं निवर्तयति । कतमेन पुनर्न्यायेन द्वित्वमभ्यनुज्ञायमानं वाक्छलमेवोपचारच्छलं तयोरेकत्वं ब्रुवता सामान्यच्छलमप्यदिसभ्यनुज्ञातं भवति विशेषणानर्थक्यं वा, यदि सर्वं छलमेकमेवेत्यभ्युपगमः वाक्छलमेवोपचारच्छलं तदविशेषादिति व्यर्थं विशेषणम् । कथमेकत्वप्रसङ्गः ? किञ्चित्साधर्म्याद्यथनर्थान्तरकल्पना अविशेषादेकत्वम् (सर्वच्छलमेकं) प्राप्नोति किञ्चित्साधर्म्यादिति । किं पुनस्तत् ? वचनविघातः अर्थविकल्पोपप-

(१) व्यवस्थित इति २ पु० पा० ।
(२) कथं मन्यसे किं तेऽनेन इति २ पु० पा० ।

चिश्च तत् सर्वस्मिँस्स्थल(१) इति ॥

साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥ १८ ॥

साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः । साधर्म्येण प्रत्यवस्थानं वैधर्म्येण प्रत्यवस्थानं जातिरिति । प्रथमपक्षानुयोगं(२) दर्शयति स्थापनायां सत्यां प्रतीपमवस्थानं प्रत्यवस्थानं प्रतिपक्षवदिति । सूत्रार्थस्तु यथाश्रुति न पुनरुदाहरणसाधर्म्येण उदाहरणवैधर्म्येण वेति । किमर्थमिदमुच्यते ? व्यापकार्थं—यदि यथाश्रुति सूत्रार्थो भवति तदा सर्वजातयो व्याप्यन्ते येन केनचित् साधर्म्यं येन केनचिद्वैधर्म्यमिति । लक्षणे जातीनामव्यापकत्वं तु दोषः । भाष्ये उदाहरणसाधर्म्यमुदाहरणवैधर्म्यं चोदाहरणार्थमिति यथा चोदाहरणेन एवमनुदाहरणेनापीति ॥

विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् ॥ १९ ॥

विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् । अन्यथा स्थितस्यान्यथाऽभिहितस्य अप्रतिपत्तिर्विप्रतिपत्तिश्च स्वपरार्थोत्तरा संवित्तिरप्रतिपत्तिः(३) समर्थे साधने । निग्रहस्थानमाप्तौ कथमप्रतिपत्तिः विप्रतिपत्तिः ?—पदार्थं साधयिता समर्थेन साधनेनोपात्तेन परेण जात्यादिभिराकुलीकृतः उत्तरं न प्रतिपद्यते तदा कथमप्रतिपत्तिः कथं वा विप्रतिपत्तिरिति ? तदाऽपि साधनस्यैव सामर्थ्यापरिज्ञानादसमर्थमेतत् साधनमित्यप्रतिपत्तिर्विप्रतिपत्तिरिति ॥

तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् ॥ २० ॥

तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् । ता एता जातयः कि-

---

(१) तस्मिँश्छल इति २ पु० पा० ।

(२) प्रथमपक्षाप्रयोगमिति २ पु० पा० ।

(३) सम्प्रतिपत्तिरिति २ पु० पा० ।

पक्षो भवन्ति कियन्ति वा निग्रहस्थानानि इत्यवधारणार्थमाह । तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वमिति । साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पात् तयोश्च विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पाद्बह्व्यो जातयो बहूनि निग्रहस्थानानि भवन्ति। कतमा जातयः साधर्म्यप्रत्यवस्थानात् कतमाश्च वैधर्म्यप्रत्यवस्थानात् कतमानि निग्रहस्थानानि विप्रतिपत्तिविकल्पात् कतमानि वाऽप्रतिपत्तिविकल्पाद्भवन्तीति प्रतियोग(१) विशेषलक्षणेषूपपरीक्षणीयानीति । एते प्रमाणादयः पदार्था उद्दिष्टा लक्षिताश्च यथोद्देशं च यथालक्षणं च परीक्षा वर्त्तिष्यत इति ॥

तन्त्रप्रतिज्ञा संसारस्तन्निष्ठाचिश्च संविदा ।
उद्देशो लक्षणं चैव तत्त्वानामिह कीर्तितम्(२) ॥

इति—औद्द्योतकरे न्यायसूत्रवार्त्तिके प्रथमाध्याये द्वितीयमाह्निकम्(३) ॥

समाप्तश्चायं प्रथमोऽध्यायः ॥

---

(१) पर्यनुयोगमिति क्वचित् ।
(२) कीर्तनम्—पा० २ पु० ।
(३) औद्द्योतकरे न्यायवार्त्तिके प्रथमोऽध्यायः समाप्त — पा० २ पु० ।



# न्यायवार्त्तिके

## द्वितीयोऽध्यायः ।

ॐ नमः परमात्मने ।

त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः उद्देशो लक्षणं परीक्षा चेत्युक्तम् । तत्रोद्देशलक्षणे पूर्वाध्याय एव व्याख्याते परीक्षा वर्तिष्यत इति । तत्र यथोद्देशस्तथा लक्षणं तथा परीक्षेति स्थानवती परीक्षावचनमिति । पूर्वं प्रमाणमुद्दिष्टं लक्षितं च पूर्वमेव तत्परीक्ष्यत इत्यवसरप्राप्तानि तानि विलङ्घ्य संशयः परीक्ष्यते । किमर्थं क्रमभेदः ? परीक्षाङ्गत्वात् पूर्वं संशयः परीक्ष्यते तथा चोक्तम्— "*विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः*"। ननु चोक्तं नायं निर्णये नियमो विमृश्य पक्षप्रतिपक्षाभ्यां सर्वत्र निर्णय इति, वादे पक्षप्रतिपक्षाभ्यामेव, शास्त्रे च विमर्शवर्जमिति । शास्त्रे चायं विचारः तस्मान्न संशयपूर्वक इति, संशयपूर्वको हि विचारस्तर्कविषय एव, नायं तर्कविषय इति । सत्यम् न निर्णये नियमो, विचारे(तु) हि नियमो, निर्णय एवं चान्यथा च, विचारः संशयपूर्वक एव । यदप्युक्तम् वादे शास्त्रे च विमर्शवर्जमिति, वादिप्रतिवादिनावधिकृत्य तदुक्तम् । शास्त्राभ्युपगमे च वादिप्रतिवादिनोर्न संशयः उभयोर्निश्चितत्वात् । शास्त्रे च न संशयः । निश्चितस्य वस्तुनः शास्त्राभ्युपगमेनाभ्युपगमात् । तत्र वादिप्रतिवादिनौ तावद्विचारयतः किं नित्यसाधनं बलीयः आहोऽनित्यसाधनमिति । शास्त्रेऽपि च विचारः साधनसामर्थ्यासामर्थ्यपरिज्ञानार्थम् । तत्र संशय इति । तस्मात् संशयपूर्वक एव विचारस्तन्मूलकत्वात् परीक्षा-

विधेः संशयः पूर्वं परीक्ष्यत इति । तत्र संशयो वस्तुस्वरूपानव-धारणात्मकः प्रत्ययः । निरुक्तिव्याघात इति चेत्—अनवधार-णात्मकश्च प्रत्ययश्चेति व्याहतम् । न । प्रत्ययस्य स्वरूपानवधार-णाद्व्यवच्छेदात्मकत्वं स्वरूपमस्य (व्यत्र)परिच्छिद्यते । न पुनर-नेन विषयस्वरूपमवधार्यत इति सोऽयं संशयः । समानधर्मोपपत्ते-रित्येवमादिभ्यस्तस्याक्षेपः ॥

**समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसाया-द्वा न संशयः ॥ १ ॥**

समानानेकधर्माध्यवसायादित्येवमादि सूत्रम् । तस्य यथा-श्रुत्युत्थानमिति । समानस्य धर्मस्याध्यवसायात् संशयो न समान-धर्ममात्रादुपलभ्यमानो धर्मः संशयहेतुरिति धर्मधर्मिग्रहणे वा संशयाभाव इति । समानमनयोर्धर्ममुपलभ इति धर्मधर्मिग्रहणे क संशय इति । धर्मिणोऽर्थान्तरभावाद्वा न संशयः न ह्यन्यस्मिन्नु-पलब्धे ऽन्यत्र संशय इति । अथवा न समानधर्माध्यवसायः संश-यस्य कारणं व्यवच्छेदात्मकत्वात् संशये च तदभावादिति । एतेनानेकधर्माध्यवसायादिति व्याख्यातम् । अधिगतानधिग-तयोर्न संशयः अधिगते वस्तुनि संशयो न युक्तः निर्णीतत्वात् नानधिगते अदृष्टत्वात् । न समानधर्माध्यवसायात एव संशयः सत्य-प्यभावात्—सत्यपि समानधर्माध्यवसाये न दृष्टः संशयः यथा कृ-तकत्वाच्छब्दे । न । समानधर्माध्यवसायादेव संशयोऽन्यथापि भावात्—अन्यथापि दृष्टः संशयः यथा विरुद्धाव्यभिचारिधर्म-द्वयसन्निपाते । तत्रानुपलब्धेश्च संशयः यथा प्रकरणसमे । एकवृत्तित्वाच न समान—एकवृत्तिरयं धर्मो न चैकवृत्तिः स-मानो भवितुमर्हतीति ॥

**विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च ॥ २ ॥**

एतेन विप्रतिपत्त्यव्यवस्थाध्यवसायादिति प्रत्युक्तम्। विप्रतिपत्त्यव्यवस्थाध्यवसायान्न संशयो न विप्रतिपत्तिमात्रादव्यवस्थामात्राद्वा ॥

**विप्रतिपत्तौ च सम्प्रतिपत्तेः ॥ ३ ॥**

विप्रतिपत्तौ च सम्प्रतिपत्तेः न विप्रतिपत्तिरस्तीति सूत्रार्थः ॥

**अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः ॥ ४ ॥**

अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थाया नाव्यवस्था विद्यत इति सूत्रार्थः ॥

**तथाऽत्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः ॥ ५ ॥**

तथाऽत्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः समानधर्मादीनां सातत्यान्नित्यः संशय इति सूत्रार्थः ॥

अस्योत्तरम्।

**यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये नासंशयो नात्यन्तसंशयो वा ॥ ६ ॥**

यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये नासंशयो नात्यन्तसंशयो वा। न सूत्रार्थापरिज्ञानादिति सूत्रार्थः। यत्पुनरेतद्धर्मधर्मिग्रहणे संशयाभाव इति ? तत्रापरिज्ञानात्—न ब्रूमो योऽसौ धर्म्युपलभ्यते तस्य धर्ममुपलभ इति, अपि तु यौ मया पूर्वं स्थाणुपुरुषावुपलब्धौ तयोरयं समानो धर्म उपलभ्यत इति। एतेनैकधर्मित्वादिति परिहृतम्। यत्पुनरेतदर्थान्तराध्यवसायादन्यत्र संशय इति ? नानभ्युपगमात्।

अपरे न अर्थान्तरभावमात्रं मया संशयहेतुत्वेनोपादीयते, किं त्वर्थान्तर विशेषः। कः पुनरयं विशेषः ? धर्मधर्मिभावः—धर्म उपलब्धे धर्मिणि संशय इति परिहारं मन्यन्ते। न

पुना रूपस्पर्शयोर्धर्मधर्मिभाव इति । अयं च न परिहार इति (तच्च न) पश्यामः । किं कारणम् ? । अर्थान्तरभावस्यानिवृत्तेर्यथैव रूपस्पर्शयोरर्थान्तरभावस्तथा धर्मधर्मिणोरपीति । न युक्तोऽर्थान्तरदर्शनादर्थान्तरे संशयः । अत्रापि तदेवोत्तरम् नाभ्युपगमादिति । न ब्रूमोऽर्थान्तरदर्शनादर्थान्तरे धर्मिणि सन्देहः अपि तु समानधर्मादिविशिष्टधर्मिदर्शनात् विशेषवति धर्मिण्येव संशय इति । यदप्येतत्सारूप्याभावादिति ? विशेषानवधारणमुभयोः सारूप्यम्—यथैव समानधर्मदर्शनेन विशेषो नावधार्यत इति तथा संशयेनापीति । कारणसद्भावात् कार्यसद्भाव इति न सारूप्यनिर्देशोऽयमपि तु कार्यकारणधर्मनिर्देशः । तथा च कार्यान्तरेष्वप्येतदस्तीति । न हि किञ्चित् कार्यं कारणसद्भावमन्तरेण सम्भवतीति । एतेनानेकधर्माध्यवसायादिति प्रतिषेधः परिहृतः । य एव समानधर्माध्यवसाये परिहारः स एवानेकधर्माध्यवसायेऽपीति । यत्पुनरेतदधिगतानधिगतयोरभावादिति ? तत्त्वापरिज्ञानादिति—न ब्रूमोऽन्यस्मिन्नधिगते ऽन्यत्र संशय इति, अपि तु सामान्यतोऽधिगते धर्मिणि विशेषानवधारणात्मकः प्रत्ययः संशय इति । यत्पुनरेतत् सत्यप्यभावादिति ? न समानार्थापरिज्ञानात् । न हि कृतकत्वं समानो धर्मोऽन्यथा समानधर्मस्याभिधानात् । समानो धर्म इति विवक्षिततज्जातीयान्यवृत्तिर्यः स समानो न पुनः कृतकत्वमेवम् । यत्पुनरेतत् समानधर्माध्यवसायादेवान्यथाऽपि दर्शनादिति ? तन्न, प्रतिषेधादनवधारणाच्च । विरुद्धाव्यभिचारिधर्माध्यवसायात् संशय इति प्रतिषिद्धमेतदनवधारणेनैव तत्त्वानुपलब्धेरिति प्रत्युक्तम् । न चैतदवधार्यते समानधर्मदर्शनादेव नान्यस्मादिति अन्यस्मादपि संशयोऽनेकधर्माध्यवसायादित्युक्तम् । विप्रतिपत्त्यव्यव-

यः प्रत्ययनियमहेतुः स सम्बद्धोऽर्थप्रत्यायको दृष्टः यथा प्रदीपः । शब्दश्चैवंधर्मा, तस्माच्छब्दोऽपि सम्बद्धोऽर्थप्रत्यायक इति । यद्वा प्रत्ययः पक्षीकर्तव्यः सम्बद्धाभ्यां शब्दार्थाभ्यां वस्तुप्रत्ययो भवतीति नियमात् कुण्डलीति प्रत्ययवदिति ॥

न सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य ॥ ५६ ॥

न सामयिकत्वाच्छब्दादर्थे सम्प्रत्ययस्य । न सम्बन्धकारितं शब्दार्थव्यवस्थानं, किं तर्हि ? समयकारितं, कः पुनरयं समयः ? । अभिधानाभिधेयनियमनियोगः समययुक्ते(१) शब्दार्थव्यवस्था भवतीति । कश्चित् च सम्बन्धोनुज्ञात इति पदवोचाम समयं तदवोचाम इति । सेयं शब्दार्थव्यवस्थाऽन्यथापि भवतीत्यहेतुः । अयं च वाच्यवाचकभावलक्षणः सम्बन्धः स्वाभाविकशब्दार्थसम्बन्धवादिनाप्यनुज्ञेयः । न हि स्वाभाविकसम्बन्धवादिनोऽनुपयुक्तशब्दार्थसम्बन्धस्य शब्दग्रहणाद्विशेषप्रत्ययो भवति । स पुनः समयः कुतः प्रत्येतव्यः ? यदज्ञानाल्लोकतश्चेति तदिदं समयशास्त्रं शब्दस्याविलोपार्थं प्रणीतम् । लोकतश्च समयो बोद्धव्यः मात्रादिस्तेषु तेष्वर्थेषु तांस्तान् शब्दान् प्रयुञ्जानानुपलभ्य सोऽपि तथैव शिक्षितस्तांस्तानेव शब्दांस्तेषु तेष्वर्थेषु प्रयुङ्क्ते न पुनरेनं लिपिमिव कश्चित् शिक्षयतीति ॥

जातिविशेषे चानियमात् ॥ ५७ ॥

जातिविशेषे चानियमात् । न स्वाभाविकः शब्दार्थयोः सम्बन्धः—यदि स्वाभाविकः शब्दार्थसम्बन्धोऽभविष्यत्त जातिविशेषे शब्दार्थव्यवस्थाऽभविष्यत् । अस्ति तु यथाकामं प्रयोगो जातिविशेषे यथाकामं प्रयोगो दृष्टः न तु स्वाभाविकेन सम्बन्धेन

(१) तस्मिन्स्तुप्युक्ते—पा० १ पु० ।

सम्बद्धानां जातिविशेषे व्यभिचारो दृष्टः न हि प्रदीपोऽस्माकमन्यथा प्रकाशयत्यन्यथा जातिविशेष इति । जातिविशेषशब्देन पुनर्देशोऽभिधीयत इति ॥

( इति शब्दस्यानुमानाद्भेदः । )

**तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः ॥ ५८ ॥**

तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्य इति सूत्रम् । तदित्यधिकृतशब्दाभिधानाच्छब्दविशेषाधिकारः यस्मात् प्राप्तमपि प्रकरणेन शब्दं तच्छब्देन पुनरभिधत्ते, तत्र ज्ञापयति शब्दविशेषं प्रतीयं चिन्ता न तु शब्दमात्रम् । अन्यथैव वक्तव्यम्—अप्रमाणं शब्दोऽनृतव्याघातपुनरुक्तदोषेभ्य इति । अप्रामाण्यमर्थस्याप्रत्यायकत्वम्, अनृतत्वमयथार्थाभिधानम्, व्याघातः पदयोर्वाक्ययोर्वा सहासम्भवः, पुनरुक्तं पूर्वाभिहितार्थाभिधानम् । उदाहरणानि भाष्ये । तत्रानृतत्वे हेतुः फलादर्शनम् । अग्निहोत्रं जुहुयादिति विधिवाक्यम् । अस्य व्याघातः कालासम्भवेन उदितानुदितसमयाध्युषितप्रतिषेधो, न चान्यः कालो विद्यते यत्राग्निहोत्रहवनं स्यात् । उदितानुदितसमयाध्युषितवाक्यानां वा परस्परविरोधः । प्रथमोत्तमोत्तमयोस्त्रिरभिधाने पुनरुक्तम् । उदाहरणं भाष्ये । दृष्टान्तद्वेनैतानि वाक्यान्युपन्यस्य एककर्तृकत्वेन शेषवाक्यानामप्रमाणत्वमिति । अग्निहोत्रादिवाक्यानां वा प्रमाणत्वप्रतिषेधो वैदिकत्वेन तदन्यवाक्यवत् । पुनरुक्तयोर्वा पूर्वमुत्तरं वा न वाच्यमेकेन प्रतीयमानत्वात्(१) ॥

**न कर्मकर्तृसाधनवैगुण्यात् ॥ ५९ ॥**

---

( १ ) प्रणीयमानत्वात्—पा० १ पु० ।

न ¹ कर्मकर्तृसाधनवैगुण्यात् । यच्चावदनृतत्वादप्रमाणानि वेदवाक्यानि फलादर्शनादिति ? तदत्र सम्प्रधार्यम् । किं फलादर्शनं वेदवाक्यानामप्रमाणत्वादाहो कर्मकर्तृसाधनवैगुण्यादिति ? । वयं तु ब्रूमः (न) कर्मकर्तृसाधनवैगुण्यादिति, फलादर्शनात् तु कारणानामसामर्थ्यं गम्यते, इष्टेः कारणसाधनत्वाच्चाऽविरोधः । न चेयमिष्टिरेषा साक्षात् पुत्रकारणत्वेनाभ्युपगम्यते, अपि तु पितराविष्ट्या संप्रयुज्यमानौ पुत्रं जनयत इति । तत्र न ज्ञायते किं पित्रोरसादृगुण्यात् पुत्रजन्म न भवति ? आहोस्विदिष्टेरसादृगुण्यादिति ? । मन्त्राश्चेष्टिसाधकत्वेन प्रयुज्यमाना इष्टयङ्गं भवन्ति(१) तत्रापि न ज्ञायते किमिष्टिमन्त्राणां वैगुण्यान्न सम्पन्ना ? आहो दर्भेन्धनादेः(२) कारणस्य वैगुण्यादिति ?—यथैव मन्त्राणां न्यूनाधिकभावेन प्रयुज्यमानानामिष्टिर्न निर्वर्त्यते तथा दर्भेध्मादेरपि साधनस्य वैगुण्यादिति ? । न केवलं साधनवैगुण्यादेवेष्टेरनभिनिर्वृत्तिरस्यथेष्टिः साधयितुः कर्मणश्चासादृगुण्यादिति ? । उपेत्येष्टिसम्पदं(३) न केवलैवेष्टिः कारणमित्युक्तम् । तत्र पुत्रजन्मादर्शनेन न युक्तं मनुष्यधर्मणो वक्तुम् मन्त्राणामसामर्थ्यान्न पुत्रानुत्पत्तिरिति । उभयथा दृष्टत्वात् सन्देह इति चेत् ? न अभ्युपेतहानेः । अथ मन्यसे त्रिकारणं पुत्रजन्म, तत्रान्यतरकारणवैकल्यात् पुत्रो न भवतीति कारणवैकल्यं गम्यते—तत्र यथैव पित्रोर्वैगुण्यात्—पुत्रानुत्पत्तिस्तथा मन्त्राणामप्रमाणत्वादिति सन्दिह्यते ? । नाभ्युपेतहानेः—पूर्वं भवताऽभ्यधायि वेदोऽप्रमाणमिति, अधुना त्वभिधीयते सन्दिग्धं प्रमाणत्वमित्येवं ब्रुवता—

(१) सम्भवन्ति—पा० १ पु० । (२) दर्भेध्मादे—पा० १ पु० ।
(३) उपेत्येष्टिसम्पदम्—पा० १ पु० ।

पूर्वो वादस्त्यक्तो भवति । समानमिति चेत् ?—अथ मन्यसे समानमेतद्भवतोऽपि—किं पित्रोर्वैगुण्यात् पुत्राजन्म ? वेदवाक्यानामप्रामाण्याद्वेति सन्दिह्यते ? । नासाधनात्—न मयैतत् साध्यते वेदवाक्यानि प्रमाणमप्रमाणं वेति, भवता तु साध्यते । तत्र मया भवतः साधनान्यतरवैकल्यात्(१) पुत्राजन्म न भवतीति सन्दिग्धो हेतुरुपदिश्यते तत्सहकारित्वाच्चोपदेशो दारुमथनवदिति । नेष्टिरिष्टेः साक्षात्कारणत्वेन पुत्रजन्मन उपादिश्यते, अपि तु 'पुत्रकाम इष्टिं कुर्वीत' इति । यथा'ऽग्निकामो दारुणी मथ्नीया'दिति उपदेशास्तत्र कर्तृकर्मणोर्वैगुण्यादग्निर्न भवतीति नोपदेशवैयर्थ्यं तथेहापीत्यदोषः । सामस्त्ये फलनिष्पत्तिदर्शनाच्च—यत्र समस्तानि कारणानि तत्र फलाभिनिर्वृत्तिर्दृष्टेत्यदोषः । यच्चेदं वाक्यं "तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्य"इति । तदपि वेदवाक्यस्य पक्षीकृतत्वादव्यापकम् । अथ यान्येवंधर्मकाणि वाक्यानि तानि पक्षीक्रियन्ते ? तेष्वप्येषां धर्माणां विशेषणत्वेनोपयुक्तत्वादप्रामाण्यप्रतिपादको हेतुर्वक्तव्यः । अनृतत्वादप्रामाण्यमिति चेत् ? किमिदमनृतत्वं नाम ? यद्ययथार्थाभिधानं ? नन्वयमेव प्रतिज्ञार्थोऽप्रमाणमिति । अनृतत्वं वाऽसिद्धमित्युक्तमेतत् ॥

यत् पुनरेतद्व्याघातदोषादिति—

अभ्युपेत्य कालभेदे दोषवचनात् ॥ ६० ॥

अभ्युपेत्य कालभेदे दोषवचनान्न व्याघातः । अग्न्याधानकाल एवायं नियमपरिग्रहः—'उदिते होतव्यमनुदिते होतव्यं समयाध्युषिते होतव्य'मिति । सोऽयमभ्युपेत्य कालं यदाऽतिक्रामति

(१) वैगुण्यात् इति २ पु० पा० ।

तदाऽभ्युपेतकालातिक्रमाभिन्द्यते निन्दावचनेन। न च व्याघातः उभयप्रतिषेधानभिधानान्नेदमन्यथा, यदि पुनरेतदुभयप्रतिषेधाभिधानं स्यात् भवेदयं प्रसङ्गो व्याघात इति, न पुनरेतानि प्रतिषेधवाक्यानि उदिते होतव्यमित्येवमादीनि, तस्मादप्रसङ्गोऽयमिति। अथ पुनरेतानि वाक्यानि होमविधेः प्रतिषेधकानि स्युः? तदोदितादिग्रहणं व्यर्थमेवं हि वक्तव्यम्—अग्निहोत्रं जुहुयादिति यद्वाक्यं तन्न कर्त्तव्यमिति। एवं च सङ्गतार्थता—यथैतद्व्याख्यानमेवं पूर्वोत्तरे वाक्ये सङ्गते भवतः हवनमनूद्य कालविशेषविधानादिति। एवमेतन्न पुनर्यथाऽस्माभिर्व्याघातोऽभिधीयत इति नियमहेतुर्वक्तव्यः? इदमेवोदितादिवाक्यं नियमहेतुः। कथमिति?। इदं पुनर्वाक्यं(तावद्वक्तव्यं) कामतो वा कल्प्येत अभिहितं वाऽनूद्यत? इति। अभिहितानुवादो न्यायः। तत्र हि प्रमाणानामविसंवादादिति न व्याघात इति॥

यत्पुनरेतत् पुनरुक्तदोषात्? न पुनरुक्तदोषः—

अनुवादोपपत्तेश्च॥ ६१॥

अनुवादोपपत्तेः। पुनरुक्तं नाम तस्यैवार्थस्यानङ्गीकृतविशेषस्य सतः पुनर्वचनम्। अनुवादस्तु पुनःश्रुतिसामर्थ्यादङ्गीकृतविशेषस्यार्थस्य वादः। एवं सति यथोक्तो न दोषः। उदाहरणं भाष्ये। पुत्रकामेष्टिवाक्यानि प्रमा वेदैकदेशत्वात् "भूमिरावपनं मह"दिति वाक्यवत् इतश्च पदादिनियमात् "द्वादश मासाः संवत्सर" इति वाक्यवत्। इतश्च कर्तृविशेषाभिहितत्वात् "अग्निर्हिमस्य भेषज"मिति वाक्यवत्॥

वाक्यविभागस्य चार्थग्रहणात्॥ ६२॥

समस्तानि वा वेदवाक्यानि पक्षीकृत्याभिधीयन्ते प्रमाणं

वेदवाक्यानि अर्थविभागवत्त्वात् मन्त्रादिवाक्यवत्—यथा मन्त्रादिवाक्यान्यर्थविभागवन्ति, अर्थविभागवत्त्वे सति प्रामाण्यं, तथा च वेदवाक्यान्यर्थविभागवन्ति तस्मात् प्रमाणमिति ॥

विभागश्च त्रिविधो भवति—

**विध्यर्थवादानुवादवचनविनियोगात् ॥ ६३ ॥**

विध्यर्थवादानुवादवचनविनियोगात् । त्रिधा खलु ब्राह्मणवाक्यानि भवन्ति विधिवचनानि, अनुवादवचनानि, अर्थवादवचनानि च ॥

**विधिर्विधायकः ॥ ६४ ॥**

तत्र विधिर्विधायकः । यद्वाक्यं विधायकं–देशकं स विधिः । विधिस्तु नियोगोऽनुज्ञा वा–यद्वाक्यं विधत्ते इदं कुर्य्यादिति स नियोगः। अनुज्ञा तु–यत् कर्तारमनुजानाति(१) तदनुज्ञावाक्यम्, यथाऽग्निहोत्रवाक्यमेवैतत् साधनावाप्तिपरिप्रापूर्वकत्वमनुजानाति ॥

**स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ॥६५॥**

स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः । एषामुदाहरणानि भाष्ये ॥

**विधिविहितस्यानुवचनमनुवादः ॥ ६६ ॥**

विधिविहितस्यानुवचनमनुवादः । विध्यनुवचनं चानुवादः । विधिविहितानुवचनं च । पूर्वः शब्दानुवादः परोऽर्थानुवादो, यथा पुनरुक्तं द्विविधं शब्दपुनरुक्तमर्थपुनरुक्तं च । शब्दपुनरुक्तमनित्यो ऽनित्य इति । अर्थपुनरुक्तमनित्यो निरोधधर्मक इति ॥

**नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः ॥६७॥**

नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः । कोऽस्य

(१) यत्कुर्वाणकमनुजानाति इति २ पु० पा० ।

सूत्रस्यार्थः ? । प्रतीतार्थशब्दाभ्यासोऽनुवादपुनरुक्तयोः साम्यम्, पुनरुक्तेऽपि प्रतीतार्थः शब्दोऽभ्यस्यते, अनुवादेऽप्येव, अतः प्रतीतार्थशब्दाभ्यासादुभयमसाधिवति ॥

**शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ॥ ६८ ॥**

शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेष इति । यथा शीघ्रं गम्यतां शीघ्रतरं गम्यतामिति तरपा क्रियातिशयो गम्यते तथाऽनुवादलक्षणेनाप्यभ्यासेन क्रियातिशयोऽभिधीयत इति । अस्य प्रयोगः । अर्थवाननुवादलक्षणोऽभ्यासः प्रत्ययविशेषहेतुत्वात् शीघ्रतरगमनोपदेशवदिति । यथा(१) शीघ्रशब्दाच्छीघ्रतरशब्दः प्रयुज्यमानः प्रत्ययविशेषहेतुत्वान्न पुनरुक्तदोषं लभते(२) तथाऽनुवादलक्षणोऽप्यभ्यासः प्रत्ययविशेषहेतुत्वान्न पुनरुक्तदोषं लप्स्यत इति । कः पुनरसौ विशेषो भवतीति ? वक्तव्यस्तदुच्यते । आद्ये पचतुशब्दप्रयोगे पाको निर्वर्तनीय इति पक्तुः प्रत्ययो भवति, द्वितीयात् तु पचतुशब्दादवधारणप्रत्ययो भवति, मयैव पक्तव्यमिति, सातत्यप्रत्ययो वा भवति सततं मया पक्तव्यमिति, अध्येषणप्रत्ययो वा भवति मामेवायमधिकुरुत इति । आशुप्रत्ययो वा भवति आशु मया पक्तव्यमिति, एवं श्रोतुः । यथा च श्रोतुस्तथा वक्तुरप्येते (एव) प्रत्यया भवन्तीति । पुनरुक्ते तु न कश्चिद्विशेषो गम्यत इति महान् विशेषः पुनरुक्तानुवादयोः । एवमन्योऽप्यनुवादस्य प्रयोगो वाच्ये वोद्धव्य इति ॥

किं पुनः प्रतिषेधहेतूद्धारादेव प्रमाणता वेदवाक्यानां सिद्धा ? न । न किं कारणम् ? । न साधनमन्तरेण सिद्धिरस्तीति ।

(१) अथ इति २ पु० पा० ।
(२) न भवति इति २ पु० पा० ।

कुतस्तर्हि ? प्रमाणतः । किंतत् प्रमाणम् ? अर्थविभागवचनम्—

मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्य-
माप्तप्रामाण्यात् ॥ ६९ ॥

मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् । चशब्दः पूर्वहेत्वनुकर्षणार्थः । यथा मन्त्राऽऽयुर्वेदवाक्यानि पुरुषविशेषाभिहितत्वात् प्रमाणं, तथा वेदवाक्यानीति पुरुषविशेषाभिहितत्वं हेतुः । किमायुर्वेदस्य प्रामाण्यं ? यत् तदायुर्वेदेनोपदिश्यते—इदं कृत्वेष्टमधिगच्छति इदं कृत्वाऽनिष्टं जहाति, तस्यानुष्ठीयमानस्य तथाभावोऽविपर्ययः एतत् प्रामाण्यम् । किंकृतमेतत् ? आप्तप्रामाण्यकृतम् । किं पुनराप्तानां प्रमाणत्वम् ? साक्षात्कृतधर्मता—यं ते पदार्थमुपदिशन्ति स तैः साक्षात्कृतो भवतीति । भूतदया च—यस्मै चोपदिशन्ति तं प्रत्यनुकम्पा भवति । यथापरिज्ञातार्थविख्यापयिषा चास्य भवति(१) । एतेन त्रिविधेन विशेषणेन विशिष्टो वक्ता आप्तः । तेन च उपदेशः क्रियते स प्रमाणमिति । दृष्टार्थवाक्याविसंवादेन वा शेषानुमानं—यद्वाक्यं दृष्टार्थं यथा वा "ग्रामकामो यजेत"इत्येवमादि तेन शेषानुमानं प्रमाणमिति(२) । लौकिकमपि वाक्यमनेनैव त्रिप्रकारेण विशेषणेन(३) विशिष्टस्य वक्तुः प्रमाणं भवति । अस्य प्रयोगः । प्रमाणं वेदवाक्यानि वक्तृविशेषाभिहितत्वात् मन्त्रायुर्वेदवाक्यवदिति । एककर्तृकत्वेन वा मन्त्रायुर्वेदवाक्यानि पक्षीकृत्यालौकिकाविषयप्रतिपादकत्वेन वैधर्म्यहेतुर्वक्तव्यः ।

पौरुषेयत्वमसिद्धं नित्यत्वादिति चेत् ?—अथ मन्यसे नित्यानि

---

(१) यदि भवति—पा० १ पु० ।
(२) प्रमाणत्व इति—पा० २ पु० ।
(३) विशेषेण इति—पा० २ पु० ।

वेदवाक्यानि नित्यत्वाचेषां प्रामाण्यं तस्मात् पौरुषेयत्वमसिद्धम् ? । नासिद्धत्वात्—सिद्धे नित्यत्वे एतद्युक्तं, तत्तु न सिद्धमतो न युक्तमेतत् । यदि न नित्यानि कथं प्रमाणं ? प्रमेयप्रतिपादकत्वात् प्रमाणं न नित्यत्वात् ।

केचित्तु ब्रुवते न किञ्चिन्नित्यं प्रमाणमस्तीति प्रमाणत्वादेवानित्यानीति ? । तत्तु न सम्यगिति पश्यामः नित्यमपि प्रमाणं यथा मनः आत्मा च, प्रमाणशब्दस्य समुदायवाचित्वात्—अयं खलु प्रमाणशब्दः समुदाये वर्तते । तत्र नित्यमनित्यं चानेकं समुदापि प्रमाणस्याङ्गत्वात् प्रमाणमित्युच्यते यथा प्रदीपः एवं च नित्यमपि प्रमाणमस्तीति । यदा च परमाण्वादि नित्यमितरवस्तुसाधकत्वेनोपादीयते तदा परमाण्वादेर्नित्यस्य प्रमाणभावात् प्रमाणत्वादनित्य इत्ययं नैकान्तो भवतीत्यनुत्तरमेतत् ।

तस्माद्युक्तमर्थविभागवत्त्वादनित्यत्वं लौकिकवाक्यवदिति— यथार्थविभागवन्ति लौकिकवाक्यानि तथा च वेदवाक्यानि तस्मान्न नित्यानीति । लौकिकान्यपि नित्यानीति चेत्—अथ मन्यसे यान्यप्येतानि लौकिकवाक्यानि अर्थविभागवन्ति तान्यपि नित्यानीति ? अर्थविभागो न स्यात् योऽयमर्थविभागो लौकिकवाक्ये स न स्यात्, इष्टस्तु । तान्यनित्यानीति चेत् ? विशेषहेतुर्वक्तव्यः तुल्ये चार्थविभागवत्त्वे तुल्ये चार्थप्रतिपादकत्वे लौकिकान्यनित्यानि वैदिकानि नित्यानीति विशेषहेतुर्वक्तव्यः ? । तुल्यं भवतोऽप्यनित्यत्वे विशेषहेतुर्वक्तव्य इति ? । उक्तोऽर्थविभागवत्त्वं हेतुः । इतश्च वर्णवत्त्वाद्वर्णवन्ति लौकिकवाक्यानि अनित्यानि तथा च वेदवाक्यानि, तस्मात् तान्यप्यनित्यानि । इतश्च सामान्यविशेषवत्त्वे सति श्रोत्रग्राह्यत्वात्

लौकिकवाक्यवत् । इतश्च पदवत्त्वात् लौकिकवाक्यवत् । दर्शनस्य परार्थत्वादिति चेत् ?–अथ मन्यसे दर्शनं परार्थं दर्शनशब्द उच्चारणार्थः उच्चारणं परप्रतिपादनार्थम्, न हि कश्चिदात्मप्रतिपत्तये शब्दमुच्चारयति, यदि चायं नित्यो भवति शब्दादर्थप्रत्ययो युक्तः, अथानित्य उत्पन्नप्रध्वंसी ततोऽस्य श्रोतुः नित्यमपूर्वः श्रोत्रविषयमेति, न चापूर्वश्रवणात् प्रतिपत्तिर्युक्ता, न हि नारिकेलद्वीपवासिनोऽप्रसिद्धगोश्रवणात् ककुदादिमदर्थप्रतिपत्तिर्भवति, तथा चानित्यवादिनः सर्वे शब्दाः (तथा) तस्मादस्यापि शब्दात् प्रत्ययनियमो न प्राप्त इति ? । नानेकान्तात्–क्षणविध्वंसिषु प्रदीपादिषु अपूर्वस्य *प्रत्यायनं दृष्टमिति ? । नोदाहरणवैधर्म्यात् प्रदीपोऽनाख्यातः प्र*-काशनीयार्थसम्बन्धात् प्रकाशनीयार्थसम्प्रतिपत्तिं करोति न पुनरनाख्यातः शब्द इति । कः पुनरेवमाह अनाख्यातः शब्दः प्रतिपादयति इति ? । सम्बन्धस्यादर्शनादाख्यानमनुपपन्नम् । उक्तमेतद्यथा न शब्दार्थयोः प्राप्तिलक्षणः सम्बन्धोऽस्तीति । वाच्यवाचकभावलक्षणस्तु पौरुषेयः सम्बन्धः स च कृतक इति । स च संसारानादित्वात् लोकतोऽवगम्यते । ये तु संसारमादिमन्तं वर्णयन्ति त एवमुपालभ्याः । अथ योऽयमभिलापो नित्या वर्णा(वेदा) इति, स कथंसम्प्रदायस्याविच्छेदात् तान्येव वेदवाक्यानि मन्वन्तरचतुर्युगान्तरेषु सम्प्रदायाभ्यासाविच्छेदेन प्रवर्तन्ते तदपेक्षया लौकिकाः शब्दान् प्रयुञ्जन्ते नित्या वेदा इति । यथा नित्याः पर्वताः नित्याः सरित इति । तन्मन्वादिवाक्येषु समानम् । कुत एवं सम्प्रदायाविच्छेदात् नित्यत्वं न पुनर्नित्यत्वादेव ? अनित्यत्वोक्तप्रमाणाविघातात्–यानिमयाऽनित्यत्वे प्रमाणान्युपन्यस्तानि तानि न विहन्यन्ते तेषामविघातादनित्यत्वे सति सम्प्रदायाविच्छेदात् नित्यत्वोपचार इति ॥

इति–श्रीउद्द्योतकरे न्यायवार्त्तिके द्वितीयस्याध्यायस्याद्यमाह्निकम् ॥

## अथ द्वितीयमाह्निकम् ।

### न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात् ॥१॥

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति सूत्रम् । तस्याक्षेपः न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात् । अस्यार्थः अयथार्थोऽयं प्रमाणोद्देश इति । न चत्वार्येव प्रमाणानि ऐतिह्यार्थापत्तिसम्भवाभावा अपि प्रमाणानीति । संशयव्युदासार्थं वा ऐतिह्यादय उपदिश्य प्रतिषिध्यन्ते । प्रत्यक्षादीनि च प्रमाणानि ऐतिह्यादीनि चेति केचित् मन्यन्ते तत्र श्रोतुः संशयः स्यात् किं विद्यमाना ऐतिह्यादयो नोक्ता अथाऽविद्यमाना इति ? । विधिन्यूनतापरिहारार्थं वा प्रकरणम् । विद्यमानान्यैतिह्यादीनि नोक्तानीति विधिवाक्यहीनं (शब्द) शास्त्रं स्यात् । दोषवतां दोषानभिधानात् दोषहीनं वा शास्त्रं स्यात् । इत्यत उद्दिश्य निवर्त्यन्ते—दोषवन्त ऐतिह्यादय इत्यतो नाभिधीयन्त इति । दोषस्तर्हि वक्तव्यः ? अथ दोषो नाभिधीयते दोषहीनं शास्त्रमिति तत्परिहारार्थं प्रकरणमुपक्षिप्यते । प्रत्यक्षादिष्वन्तर्भावप्रदर्शनार्थं वा—ऐतिह्यादीनि प्रत्यक्षादिष्वन्तर्भावयितुं ये यत्रान्तर्भवन्ति तत्र तेषां प्रदर्शनार्थं प्रकरणमिति । सिद्धत्वादनारम्भः ?—नन्वयमर्थः चत्वार्येव प्रमाणानीत्यस्मिन्नेव विभागोद्देशसूत्रे सिद्ध इति सिद्धत्वात् पुनरनारम्भ इति ? । न । अवधारणप्रयोजनस्य इतः (अ) सिद्धेः—येन न्यायेन चत्वार्येव प्रमाणानीत्येतदवस्थाप्यते स न्याय इह प्रकरणे वर्ण्यत इति तस्मादारभ्यमेवेति ।

किमिदमैतिह्यं नाम ? अनिर्दिष्टवक्तृकं प्रवादपारम्पर्यमिति होचुर्वृद्धाः कथयन्तीति। अर्थादापत्तिरर्थापत्तिः—आपत्तिः—प्राप्तिः प्रसङ्गः यस्मिन् वाक्ये विधीयमानादर्थादन्योऽर्थ आपद्यते साऽर्था-

पत्तिः—यथाऽसत्सु मेघेषु वृष्टिर्न भवतीति, किमत्रार्थादापद्यते सत्सु भवतीति । सम्भवो नामाविनाभाववर्तिनोऽर्थस्य ग्रहणादन्यसत्ताविज्ञानम्—यथा द्रोणस्य ग्रहणादाढकस्य सत्तेति । अभावो नाम प्रत्यनीकस्य ग्रहणात् तद्विरोधिनो ग्रहणम्—यथा विद्यारके वाय्वभ्रसंयोगे सति गुरुत्वप्रतिबन्धादपां पातः प्रतिषिद्धः तदपामपातेन विरोधिनं वाय्वभ्रसंयोगं प्रतिपद्यते इति ।

तान्येतान्यैतिह्यादीनि एवम्भूतानीति लक्षणाभेदादेतेष्वेवान्तर्भवन्ति इति न पृथगुच्यन्ते । विषयाभावाच्च—न प्रत्यक्षादिप्रमाणव्यतिरेकेण विषया ऐतिह्यादीनां सम्भवन्त्यतश्च न प्रमाणान्तराणि । अथ प्रयोजनभेदाद् भिद्यन्त इति मन्यसे ? एवं तर्हीष्टत्वं निवर्तते—यदभ्युपगतं प्रमाणाष्टत्वं, तन्निवर्तते प्रयोजनभेदात् प्रमाणभेदमभ्युपगच्छत इति । एककरणश्च प्रयोजनभेदो दृष्ट इत्यनेकान्तः । यथैकं चक्षुरनेकनीलादिभिन्नरूपग्रहणप्रयोजनमिति । इन्द्रियानेकत्वं वा । अथ प्रयोजनभेदान्नेदं मन्यसे ? एकमिन्द्रियमनेकं प्राप्नोति । अथ विषयसामान्याव्यतिरेकादेकमिन्द्रियं ? न युक्तस्तर्हि प्रतिषेधो न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यादिति ॥

यद्येतानि प्रमाणानि न प्रमाणान्तराणि क्व तर्ह्यन्तर्भवन्तीति वक्तव्यम् ? अन्तर्भावप्रदर्शनार्थं सूत्रम्—

शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः ॥ २ ॥

शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः । शब्द ऐतिह्यमन्तर्भवति समानलक्षणत्वात्न शब्दलक्षणमैतिह्यान्निवर्तते सोऽयं भेदः सामान्येन संगृहीतः । अनुमानेऽर्थापत्तिसम्भवाभावानामन्तर्भावः समान-

नलक्षणत्वात्। कथमर्थापत्तिरनुमानेन संगृह्यते ? । द्वयोरेकतरप्रतिषेधस्य द्वितीयाभ्यनुज्ञाविषयत्वात् । यत्र यत्र द्वयोर्वस्तुनोरेकतरद्वस्तु प्रतिषिध्यते तत्र तत्र द्वितीयाभ्यनुज्ञा दृष्टा–यथा दिवा न भुङ्क्ते इत्यभिधानाद्रात्रौ भुङ्क्ते इति गम्यते ।

एके तु ब्रुवते नेयमर्थापत्तिर्दिवा न भुङ्क्ते इति । अत्र किलाऽवधारणद्वयं दिवा न भुङ्क्ते एव, दिवैव न भुङ्क्ते इति चो, भयमपसौ न वक्तव्यं रात्रौ भुङ्क्ते इति ? । एतत्तु न सम्यगसम्भवात्–दिवा न भुङ्क्ते एव इत्ययमर्थोऽसम्भवेन निराकृतः न हि कश्चिद्दिवा न भुङ्क्त एव भुञ्जानोऽपि तावन्न भुङ्क्त एव किं पुनरभुञ्जान इति । तस्मादसम्भवेनार्थस्य निराकृतत्वात् कालप्रतिषेधोऽनेन दिवा न भुङ्क्त इति । अन्यथाऽनर्थकं स्यात् क्रियान्तरप्रतिषेधनिवृत्तेरसम्भवेन निराकृतत्वात् कालप्रतिषेधस्यानभ्युपगमात् अनर्थकं वाक्यम् । भवत्वनर्थकं किं नो बाध्यते ? यदभ्युपगतं तन्निवर्तते । किं चाभ्युपगतम् ? क्रियान्तरप्रतिषेधो (यत्र) न कालप्रतिषेध इति । न चेदनर्थकं तस्माद्द्वयोरेकतरप्रतिषेधे द्वितीयाभ्यनुज्ञानादनुमानमेवार्थापत्तिः । कतमदेवानुमानं ? सामान्यतोदृष्टम् । एतेन सम्भवाभावौ व्याख्यातौ । सम्भवोऽनुमानम्, अभावोऽप्यनुमानमेव । तच्च वर्णितम् । अनयोरपि सामान्यतोदृष्ट एवान्तर्भाव इति । तदेवमन्तर्भावात् पृथगनुपदेश इति । ( मन्यसे )

सत्यमेतानि प्रमाणानि न तु प्रमाणान्तराणीत्युक्तम्, तत्रार्थापत्तेः प्रमाणभावाभ्यनुज्ञा नोपपद्यते—

अर्थापत्तिरप्रमाणमनैकान्तिकत्वात् ॥ ३ ॥

तथाहि इयमर्थापत्तिरप्रमाणमनैकान्तिकत्वात् । येयं भवताऽर्थापत्तिः प्रमाणत्वेन प्रतिपाद्यते सा नप्रमाणं, अप्रमाणमिति नार्थस्यैकदापि प्रतिपादिका । यथा मेघेष्वसत्सु वृष्टिर्न भवतीति

अर्थादापन्नं सत्सु भवतीति, सत्स्वप्येकदा न भवतीति अनैकान्तिकी ? । अर्थापत्तिमात्रस्य पक्षीकरणे ऽनैकान्तिकत्वमव्यापकम्-यदि तावदर्थापत्तिमात्रं पक्षयसि ततोऽर्थापत्तेरनैकान्तिकत्वमशक्यम् । अथानैकान्तिकी या सा पक्षीक्रियते ? तदाभ्युपगमो वयमपि ब्रूमोऽनैकान्तिक्यप्रमाणमिति(१) हेतुश्च नास्ति—हेतोः प्रतिज्ञाविशेषणत्वात्—यदनैकान्तिकं तदप्रमाणमिति प्रतिज्ञा तत्र हेतुर्नास्ति, न चापमर्थः साध्य इति हेत्वभावः व्याघातश्चाभ्युपगमात् । याऽनैकान्तिक्यर्थापत्तिः सा प्रमाणं न भवतीति ब्रुवता ऐकान्तिकी सा प्रमाणमित्यभ्युपगतं भवति । अनर्थकं चेदमभिधानम्—*याऽनैकान्तिक्यर्थापत्तिः सा न प्रमाणमिति* ॥

यामपि भवानर्थापत्तिं मन्यते साऽपि नानैकान्तिकी—

**अनर्थापत्तावर्थापत्त्यभिमानात् ॥ ४ ॥**

अनर्थापत्तावर्थापत्त्यभिमानात् । नेयमर्थापत्तिरनैकान्तिकी । अर्थापत्तिश्च सत्सु मेघेषु वृष्टिर्भवतीति । सेयमनैकान्तिकी कथं न सत्सु भवत्येवेति अपि तु सत्सु भवतीति । यत्तु सत्सु मेघेषु वृष्टिर्न भवतीति ? कारणप्रतिबन्धोऽसौ, न तदर्थापत्तेः प्रमेयम्, किं त्वस्याः प्रमेयं कारणे सति (कार्यं) भवतीति । सेयमनैकान्तिकी कथं स्यात् । यद्यसत्यपि कारणे कार्यमुत्पद्यते तत्तु न दृष्टमिति न कदाचिदनैकान्तिकत्वम् ॥

**प्रतिषेधाप्रामाण्यं (वा) चानैकान्तिकत्वात् ॥ ५ ॥**

प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात् । योऽयं भवता प्रतिषेधः क्रियते अर्थापत्तिर्न प्रमाणम् अनैकान्तिकत्वात्—अयमप्यनैकान्तिकः सत्ताऽप्रतिषेधात् नानेन प्रतिषेधेनार्थापत्तेः

( १ ) ऐकान्तिकी प्रमाणमिति–पा० १ पु० ।

सत्ता प्रतिषिध्यते । कथं न सत्ताप्रतिषेधः ? यस्मादर्थापत्तेर्विशेषः प्रतिषिध्यते नार्थापत्तिमात्रं तेन सत्ताऽप्रतिषेधादनैकान्तिको भवति। अथ मन्यसे न प्रतिषेधस्य सत्त्वं विषयः किं तु प्रमाणत्वम्, सोऽयं प्रतिषेधः स्वविषये प्रवर्तमानो नानैकान्तिको भवितुमर्हतीति ?। अनैकान्तिको हि नाम स ज्ञेयो यः स्वविषयतज्जातीयान्यवृत्तिः, न चानैकान्तिकत्वं प्रामाण्यप्रतिषेधेऽस्ति, तस्मान्नानैकान्तिकः प्रतिषेध इति ॥

तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् ॥ ६ ॥

तत्प्रमाण्ये वा नार्थापत्त्यप्रामाण्यम् । यदि स्वविषयतज्जातीयान्यवृत्तिरनैकान्तिक इति मन्यसे ? अर्थापत्तिरपि तर्ह्यनैकान्तिकी न भवति, न ह्यसति कारणे कार्यमुत्पद्यमानं दृष्टमिति । तदिदं सूत्रं व्याघातदेशनार्थम् । यदुक्तं भवता स्वविषयादन्यत्र वर्तमानमनैकान्तिकं भवति अर्थापत्तिश्चानैकान्तिकीति व्याहतम् । अज्ञानं वा । अथाबुद्ध्यैवानैकान्तिकव्यवहारमिदमुच्यते अर्थापत्तिरप्रमाणमनैकान्तिकत्वादिति ?। तत्रोपेक्षया वर्तितव्यम्—नोन्मत्तवाक्यानि प्रतिसन्धेयानीति ।

नाभावप्रामाण्यं प्रमेयासिद्धेः ॥ ७ ॥

नाभावः प्रमाणं विषयाभावात्—यदविषयं तदप्रमाणम्, यथा गोशब्दोऽश्वप्रतिपादने, तथा चाभावस्तस्मादप्रमाणम् । कश्चित्प्राहाभावः प्रमाणम्, अपि त्वभावविषया प्रतिपत्तिः प्रमाणम्, तथा प्रमीयत इति। कः पुनरस्या विषयोऽभाव इत्युक्तम्। तत्रानेकधाभिन्नस्याभावप्रपञ्चस्योदाहरणार्थं सूत्रम्—

लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धेः(१) ॥ ८ ॥

(१) सिद्धिरिति २ पु० पा० ।

लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धेः । अलक्षितानि वासांस्यानयेति प्रयुक्तः उभयसन्निधौ येषु वासःसु लक्षणानि न पश्यति तानि लक्षणाभावेनैव प्रतिपद्यते, प्रेषणसम्प्रतिपत्त्योरेकविषयत्वात्, प्रतिपद्य चानयति प्रतिपत्तिहेतुश्च प्रमाणम् । तस्मात् सिध्यत्यभावस्य प्रमेयम् ॥

**असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः ॥९॥**

असत्यर्थे नाभाव इति चेत् ?—अथ मन्यसे यत्र यद्भवति तत्र तस्याभावो, न चालक्षितेषु वासःसु लक्षणानि भवन्ति, तस्मात्र तत्र न भवन्तीति ? नापरिज्ञानात्—न भवताऽस्मदभिप्रायोऽवोधि—न ब्रूमो यत्र यद्भवति तत्र तन्न भवतीति, अपि तु लक्षितानि वासांस्युपलभमान इतराणि लक्षणाभावविशिष्टानि प्रतिपद्यत इति । अयथार्थोऽयमुपालम्भः प्रयुज्यत इत्येत उक्तार्थं सूत्रम् नान्यलक्षणोपपत्तेरिति ॥

**तत्सिद्धेरलक्षितेष्वहेतुः ॥ १० ॥**

तत्सिद्धेरलक्षितेष्वहेतुः । यानि तानि लक्षितेषु वासःसु लक्षणानि *तानि न कस्यचिन्न सन्तीति यानि च सन्ति* तेषामभावो व्याहतः ? अत्रोक्तम् नापरिज्ञानादिति । अस्य चार्थस्य ज्ञापनार्थं सूत्रम् ॥

**न लक्षणावस्थितापेक्षासिद्धेः ॥ ११ ॥**

न लक्षणावस्थितापेक्षासिद्धेः । न ब्रूमो यानि भवन्ति तेषां तत्रैवाभाव इति । अपि तु केषु चिल्लक्षणान्यवस्थितान्यपेक्ष्य येषु तानि न भवन्ति तानि लक्षणाभावेन प्रतिपद्यत इति॥

**प्रागुत्पत्तेरभावोपपत्तेश्च ॥ १२ ॥**

प्रागुत्पत्तेरभावोपपत्तेः । अभावद्वैतं खलु भवति प्रागु-

त्पत्तेरविद्यमानता ऊर्ध्वं च विनाशादविद्यमानतेति । तत्र योऽयं विनाशादभावो लक्षणानामलक्षितेषु वासःसु सोऽनुपपन्नो नेतर इति । असमर्थे नाभावस्तत्सिद्धेरलक्षितेष्वहेतुरिति उभे अप्येते छलसूत्रे । छलस्योक्तमुत्तरं ज्ञात्वाऽज्ञात्वा वाऽसम्बन्धत्वमज्ञानं वेति तस्मादप्रयोज्यं छलमिति ।

( प्रमाणचतुष्टयपरीक्षा । )

"आप्तोपदेशः शब्द" इति प्रमाणभावे विशेषणं ब्रुवता नानाप्रकारः शब्द इति ज्ञाप्यते । कथं ? नासति भेदे विशेषणमर्थवद् न चानर्थकं विशेषणं युक्तमिति—युक्तो नानाभूतः शब्दो विशेषणसामर्थ्यादिति । तस्मिन् सामान्येन विचारो नित्योऽनित्यो वा, विचारः—परीक्षा—

विमर्शहेत्वनुयोगे च विप्रतिपत्तेः संशयः ॥१.३॥(१)

विमर्शहेत्वनुयोगे च विप्रतिपत्तेः संशयः । विप्रतिपत्तिशब्दस्योक्तोऽर्थः । तत्राकाशगुणः शब्दः महत्त्ववदभिव्यक्तिधर्मैत्येके—एके तावद् ब्रुवते नित्यः शब्द इति अविनश्यदाधारैकद्रव्याकाशगुणत्वात्—यदविनश्यदाधारैकद्रव्यमाकाशगुणश्च तन्नित्यं दृष्टम्, यथाऽऽकाशमहत्त्वम्, तथा शब्दस्तस्मान्नित्य इति । सोऽयं नित्यः सन्नाभिव्यक्तिधर्मा तस्याभिव्यञ्जकाः संयोगविभागनादा इति । गन्धादिसहवृत्तिर्द्रव्येषु सन्निविष्टो गन्धादिवदवस्थितोऽभिव्यक्तिधर्मेत्यपरे—अपरे पुनर्ब्रुवते गन्धादिभिः सह सन्निविष्टः शब्दो गन्धादिवदेवाभिव्यज्यते तस्याभिव्यञ्जका भूतविशेषाभिघाता इति । आकाशगुणः शब्दः उत्पत्तिनिरोधधर्मेति

(१) विश्वनाथपञ्चाननमते नेदं सूत्रं किन्तु भाष्यम् । न्यायसूचीग्रन्थे तु "त्रयोदशभिः सूत्रैः" प्रमाणचतुष्टप्रकरणमित्युक्तं किन्त्विदं सूत्र न दृश्यते तत्र १२ सूत्राणि वर्तन्ते ।

चान्ये—अन्ये पुनर्वर्णयन्ति अनित्यः शब्द आकाशगुण उत्पत्तिनिरोधधर्मक इति । महाभूतसंक्षोभजः शब्दोऽनाश्रित उत्पत्तिनिरोधधर्मेति चापरे । अतः संशयः किमत्र तत्त्वमिति ।

अनित्य इत्येतत् तत्त्वम् । किमिदमनित्यत्वं नाम ? यतोऽनित्य इति भवति । किं पुनः तत् ? प्राक्प्रध्वंसाभावाविसेके—एके तावद्वर्णयन्ति यस्य प्राक्प्रध्वंसाभावौ स्तस्तदनित्यमिति । नासम्बन्धात्—न हि प्राक्प्रध्वंसाभावाभ्यां भावः सम्बद्ध्यत इति । अनुत्पन्नविनष्टयोश्च प्रसङ्गात् । यदि च प्राक्प्रध्वंसाभावावनित्यतेति मन्यसे ? अनुत्पन्ने वस्तुनि प्रागभावोऽस्ति ऊर्ध्वं च वस्तुनः प्रध्वंसाभावोऽस्ति इत्यसति प्राक्प्रध्वंसाभावेऽनिमित्ततोऽनित्यप्रत्ययः स्यात् । अनित्यस्य भावोऽनित्यतेति प्राक्प्रध्वंसाभावयोरभावत्वाद्भावशब्देनानभिधानम् । अनित्यं नाम यस्य नास्त्यत्यन्तं भावः तस्यानित्यस्य यो भावः साऽनित्यता, प्राक्प्रध्वंसाभावौ च भावप्रतिषेधौ न चाभावो भावाभिधानेन(अभिधातुं)वक्तुं युक्तः। तस्मान्न प्राक्प्रध्वंसाभावावनित्यतेति। षष्ठ्यर्थश्च नास्ति "तस्य भावस्तत्त्वतलौ"विति तस्येति धर्म्यपदिश्यते, भाव इति धर्मिणो धर्मः न चाभावो धर्मः न च धर्मकाले तच्छब्दवाच्यो धर्मी विद्यते । न चाविद्यमानस्य षष्ठ्या योग इति। अथ यद्भवति तस्मात्प्राङ्न भवति ऊर्ध्वं च न (प्र)भवतीति मन्यसे ? एवमपि न किञ्चित् प्रतिषिद्धम्,वयमपि ब्रूमः यत् प्राङ्न भवति तदूर्ध्वं न भवतीति। षष्ठ्यर्थस्तु पूर्ववन्नास्ति । घटस्य प्रागभावो घटस्य प्रध्वंसाभाव इति एतत् कथम् ? नात्र षष्ठ्या सम्बन्धोऽभिधीयते अपि तु प्रागिदं वस्तु नासीद(नास्ति)पश्चाज्जातमित्यर्थः। ऊर्ध्वं च विनाशादिदं वस्तु न भविष्यतीति अनित्यमित्युच्यते

तस्य च भावोऽनित्यतेति। वर्तमाने चाऽसम्भवात्। यदि च प्राक्प्रध्वंसाभावावनित्यतेति मन्यसे वर्तमाने वस्तुनि न प्रागभावो न प्रध्वंसाभाव इति अनित्य इत्यभिलापो न स्यात्। पाठकादिशब्दवदिति चेत् ?—अथ मन्यसे यथाऽमी पाठकादिशब्दास्त्रिकालविषयास्तथाऽयमनित्यशब्दस्त्रिकालविषयो भविष्यतीति!। न, ण्वुलस्त्रिकालविषयत्वात् ण्वुलम्त्ययः त्रिकालविषयो दृष्टः पाठको भवति पाठको भविष्यति पाठको ऽभूदिति। त्यपः त्रिकालविषयत्वमिति चेत् ?—अथ मन्यसे त्यपो ऽपि त्रिकालविषयत्वमिति ? तत्र नादर्शनात् न ह्यतस्यनित्ये अनित्य इति प्रयोगं पश्यामः। तस्मात् त्यपस्त्रिकालविषयत्वमयुक्तमिति। अतो न प्रागभावप्रध्वंसाभावावनित्यतेति।

विनाशहेतुभाव इत्यन्ये—अन्ये पुनर्ब्रुवते विनाशहेतोरस्तित्वमनित्यतेति। एतत्तु न युक्तमसति भावात् प्राग्विनाशहेतुभावात् अनित्यप्रत्ययो दृष्टः अनुपजातकपालविभागेषु घटादिषु। यदि विनाशहेतुभावोऽनित्यता स्याद्वर्तमानेषु घटादिषु न स्यात्। न ह्यसति ज्वरे ज्वरितप्रत्ययो दृष्टः विनाशहेतुभावाच्च विनाशहेतुरस्तीति युक्तः प्रत्ययो नानित्य इति। न हि गोत्वादश्वप्रत्ययो भवतीति। अथ मन्यसे यस्य विनाशहेतुरस्ति तद्विनाशवत् यच्च विनाशवत् तदनित्यमिति ? एतदपि न बुद्ध्यामहे यस्य विनाशो हेतुरस्ति तद्विनाशवदिति, किन्तु यस्य विनाशहेतुरस्ति तद्विनाशहेतुमदिति युक्तं वक्तुम्। न चान्येन योगादन्यनिमित्तः प्रत्ययो युक्तः न हि दण्डयोगात् कुण्डलीति भवति। विनाशवच्छरीरमितिप्रयोगदर्शनाद्युक्तमिति चेत् ?—अथ मन्यसे विनाशवच्छरीरमिति दृष्टः प्रयोगो न चासति सम्बन्धे प्रयोगो भवितुमर्हति ?। न, मतुपोऽसत्त्वदर्शनात् नायं मतुप् क्वचिदप्यसत्सु

दृष्टो न ह्यसता कुण्डलेन कुण्डलीति भवति । न चासता विनाशेन सम्बन्धोऽस्ति तद्विनाशवच्छरीरमित्ययुक्तः प्रयोगः । दृष्ट इति चेत् ?—अथ मन्यसे दृष्टोऽयं प्रयोगो विनाश्येतच्छरीरमेतेऽध्रुवा विषया इति ?, नोपचारात्—विनाशीत्युपचारेण प्रयोगः विनाशो यस्यावश्यन्तया भविष्यति इति। अध्रुवा विषया इत्यनित्यतैवोच्यते, तस्मान्न विनाशहेतुभावोऽनित्यता ।

उपलब्धिलक्षणप्राप्तस्य अत्यन्ततिरोभावोऽनित्यतेत्यन्ये—अन्ये पुनरनित्यताशब्दार्थमन्यथा वर्णयन्ति यदुपलब्धिलक्षणप्राप्तं वस्तु तेनैवात्मनाऽत्यन्तं नोपलभ्यते तिरोभूतं तदनित्यमित्युच्यते ?। एतत्तु शून्यमभिधानम्, उपलब्धिलक्षणप्राप्तमत्यन्ततिरोभूतं नोपलभ्यत इति ब्रुवाणः सिद्धान्तं बाधते । न हि किञ्चिद्वस्त्वत्यन्तं नोपलभ्यत इति सिद्धान्तः । अनुपजातविशेषस्य च वस्तुनस्तिरोभावो न युक्त इत्यनेकधा वर्णितम् । तस्मादियमनित्यता न युक्ता ।

ये पुनर्वर्णयन्ति—स एव भावोऽभूत्वा भवन् भूत्वा चाभवन्ननित्य इत्युच्यते सा चावस्था भावप्रत्ययेनानित्यतेत्यभिधीयते ? । एतत् तु न युक्तम्, स्वार्थे भावप्रत्ययस्यादर्शनात्—न हि कश्चित् स्वार्थे भावप्रत्ययो दृष्टः । विनयादिवदिति चेत् ? न, अनभ्युपगमात् । ननु च "विनयादिभ्यष्ठग्" इति स्वार्थे प्रत्ययो दृष्टः विनय एव वैनयिकमिति ? नानभ्युपगमात् । नायं स्वार्थे प्रत्ययोऽपि तु विनयेन योगो वैनयिकमित्युच्यते एवं सर्वत्र द्रष्टव्यम् । अनुपलभ्यमानभेदानामप्यनुमानतो भेदोऽनुमेयः—*यांश्चापि भवाननुपलभ्यमानभेदान् प्रत्ययान् स्वार्थे* मन्यते तेष्वप्यनुमानतो भेदोऽनुमेयः । किमनुमानं ? षष्ठ्या भेदविषयत्वं—सर्वा षष्ठी भेदविषये दृष्टेति यथा चानर्थान्तरे षष्ठी

नास्ति तथोक्तं गुणगुणिभाववाद इति ।

तत्किमिदानीमनित्यतेयं शब्दोऽनभिधेय एव ? नानभिधेयः अवध्यपेक्षानपेक्षाभेदात् सचैवोभयथा—योभयान्तपरिच्छिन्नवस्तुसत्ता साऽनित्यतेति । या तूभयान्तानवच्छिन्नवस्तुसत्ता सा नित्यता । यथा समवाय एकः सन् कार्येण विशिष्यमाणः कारणत्वमभिधीयते कारणेन विशिष्यमाणः कार्यत्वमिति च । कथमिति ? कारणमित्ययं प्रत्ययो नानिमित्तकः कदाचिद्भावात् न च वस्तुनिमित्तोऽवस्तुप्रत्ययः व्यतिरेकित्वात् । न च सत्तातो वैलक्षण्यात् । सत्तातः सादिति स्यात् । अयं तु सत्ताप्रत्ययाद्विलक्षणस्तस्मान्न सत्तातः। इहविशेषणनिमित्तत्वाच्च सम्बन्धनिमित्त–इह तन्तुषु पट इत्याधारविशिष्टः । प्रत्यय उपजायते । न चासति सम्बन्धे इहप्रत्ययेन शक्यं भवितुम् यतोऽयमिहप्रत्ययः स समवायः कार्यसमवाये सति कारणमित्यभिधीयते । यस्य गुणस्य योगादस्मिन्नर्थे शब्दनिवेशास्तदभिधाने त्वतलौ । कार्यसमवायस्य भावादेतद्भवतीति कार्यसमवायः कारणत्वम् । एतेन कार्यत्वं व्याख्यातम् । कार्यात्मलाभहेतुः समवायः कारणविशिष्टः कार्यत्वं यथा समवाय एवं सत्ताप्येका सती उभयान्तपरिच्छिन्नवस्तुसम्बन्धित्वेनानित्यतेत्युच्यते विपर्ययान्नित्यतेति । एतयाऽनित्यतया योगादनित्यः शब्द इति ॥

आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च(१) ॥ १४ ॥

आदिमत्त्वादादिः योनिः कारणमिति, कारणवत्त्वादनित्य इति सूत्रार्थः । किं पुनरिदं कारणवत्त्वं नाम ? निमित्तकारणभेदानुविधानमुत्पत्तिधर्मकत्वं तदभिव्यङ्ग्येषु नास्ति । न

---

(१) कृतकादुपचाराच्चेति विश्वनाथसम्मतः पाठः ।

हि किञ्चिदभिव्यज्यमानं निमित्तकारणभेदानुविधायि दृष्टमिति। संयोगविभागानन्तरमुपलब्धेः सन्देह इति चेत् ?—अथ मन्यसे संयोगविभागानन्तरमुपलभ्यते शब्दः, सा च तदनन्तरोपलब्धिर्व्यज्यमानस्यापि युक्ता, अतः सन्देहः किमयं संयोगविभागाभ्यां व्यज्यते अथ क्रियत इति ? । न व्यज्यते ऐन्द्रियकत्वात् ।

किमिदमैन्द्रियकत्वम्, ? इन्द्रियप्रत्यासत्तिग्राह्यं ऐन्द्रियकमिति । ततः किं ? यदीन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियकस्ततो न व्यज्यते । न हि व्यज्यमानस्येन्द्रियेण प्रत्यासत्तिर्युक्ता । कथमिति ? न श्रोत्रं तावच्छब्ददेशमुपगच्छति अमूर्तत्वात्— यदमूर्तं तन्निष्क्रियं यथा रूपादि, अमूर्तं चाकाशं तस्मान्निष्क्रियमिति । क्रियाकारणगुणसमवायात् क्रियावत्त्वमिति चेत् ?—अथ मन्यसे यत्र क्रियाकारणं गुणो वर्तते तत् क्रियावद्दृष्टं यथा लोष्टम्, तथा चाकाशं, तस्मादेतदपि क्रियावदिति ? । नानेकान्तात् । क्रियाकारणं च गुणः आत्मनि, न क्रियावानात्मा इत्यनेकान्तः विद्यमानस्यापि न क्रियावत्त्वं(१) महत्परिमाणप्रतिबन्धात्—विद्यमानोऽप्याकाशेऽभिघातो न क्रियाहेतुः महत्परिमाणप्रतिबन्धात् । यदाकाशे वर्तते महत्त्वं तेनैकार्थसमवेतेन तद्वृत्तिरभिघातः प्रतिबध्यत इति । यथा लोष्टगुरुत्वं तदेकार्थवृत्तिना संयोगेनेति । संयोगप्रतिबन्धात् गुरुत्वस्य सापेक्षत्वप्रसङ्ग इति चेत् ?—अथ मन्यसे यदि संयोगेन प्रतिबध्यमानं गुरुत्वं न क्रियामारभते तत्प्रतिबन्धापगमापेक्षमारभत इति ? नन्वेवं गुरुत्वं सापेक्षं क्रियाकारणमिति प्राप्तम्, एवं च शास्त्रव्याघातः निरपेक्षं गुरुत्वं कर्मकारणमिति हि शास्त्रम् ? । न, निरपेक्षस्यान्यथा *व्याख्यानात्—नायं निरपेक्षस्यार्थो गुरुत्वं न*

(१) क्रियाहेतुत्वम्—पा० १ पु० ।

किञ्चिदपेक्षत इति, अपि तु चरमभाविनिमित्तान्तरं नापेक्षत इति, निरपेक्षं गुरुत्वं कर्मकारणमिति नास्ति व्याघातः। तथा च शास्त्रं "संयोगाभावे गुरुत्वात् पतन"मिति(१)। त्रिपर्याभावाच—न क्रियाकारणसमवायमात्रं क्रियावत्त्वे हेतुः, अपि तु क्रियाकारण(गुण)समवाये सति मूर्त्तिः। यदि क्रियाविषयो मूर्तिर्भवति क्रियाकारणं गुणोऽप्रतिबद्धो भवति तदा क्रियोत्पद्यत इति। तस्मादक्रियावत्त्वादाकाशं न गच्छति शब्दोऽपि न गच्छति निष्क्रियत्वादेव। न चाप्राप्तस्य ग्रहणमस्ति सर्वशब्दोपलब्धिप्रसङ्गात्। परिशेषात् तु सन्तानसिद्धिःतत्राद्यः शब्दः संयोगविभागहेतुकः तस्माच्छब्दान्तराणि कदम्बगोलकन्यायेन सर्वदिक्कानि, तेभ्यः प्रत्येकमेकैकः शब्दो मन्दतरतमादिन्यायेनाश्रयः(२) प्रतिबन्धमनुविधीयमानः प्रादुरस्ति। ततोऽन्त्यस्यातिमान्द्याच्छब्दान्तरोत्पत्तिशक्तिविघातो येन केनचित् प्रतिबन्धाद्भवतीति। अतः शब्दसन्तानोच्छेदः तत्र यः कर्णशष्कुलीमन्तमाकाशदेशं प्राप्नोति स उपलभ्यते नेतर इति तस्मादैन्द्रियकत्वं, तथान्यथा न युक्तमिसनोऽनित्य इति।

एक एवेति चेत् ? न, सर्वैरुपलब्धिप्रसङ्गात्—अथ मन्यसे नैव शब्दान्तराणि यथाऽभ्युपगम्यन्ते, अपि त्वेक एवायं शब्दो वितत्याकाशमवतिष्ठते, स संयोगविभागाभ्यामभिव्यक्तः सन्नुपलभ्यते यथा घटाद्यपवरकाद्यवस्थितं प्रदीपप्रयोगेनेति ?। तच्च न, सर्वैरुपलब्धिप्रसङ्गात् यद्येकः शब्दो विततयावस्थितः संयोगेनाभिव्यक्तः श्रोत्रवतोऽर्थे प्रत्ययं करोतीति मन्यसे ? तदा येन केनचित्र क्कुत्रावस्थितेन शब्दो व्यक्त इति सर्वैः श्रोत्रवद्भिरुपल-

(१) वै० सू० ७ अ० ५ आ० १। (२) तमादिभावेनाश्रया—पा० ३ पु०।

भ्येत, न चोपलभ्यते तस्मात् कल्पनेयम् । एकदेशाभिव्यक्तिरिति चेद् ? न किमः तादात्म्यातादात्म्यानुपपत्तेः । अथ मन्यसे सत्यं विततावस्थितः तस्य त्ववस्थितस्यैकदेशो निमित्तेनाभि व्यज्यत इति ? । न किमस्तादात्म्यातादात्म्यानुपपत्तेः । यांस्तानेकदेशान् शब्दस्य मन्यसे ते किं शब्दात्मका आहो नेति ! किञ्चातः ? यदि शब्दात्मकास्ततोऽनेके शब्दा इति व्याघातः । अथाशब्दात्मकाः ? न तदा शब्दादर्थप्रत्यय इति प्राप्तम् । तेषां स्वभावश्च वक्तव्यः(१) । शब्दस्याकाशवृत्तित्वादेकदेशार्थानभिधानाच्च । एकदेश इति समासपदमेतत् एकश्चासौ देशश्चेति । तत्र देशशब्द आधारार्थः कारणार्थो वा ? । तत्राधारार्थस्तावन्न युक्तः शब्दस्याकाशवृत्तित्वात्—आकाशवृत्तिः शब्दस्तद्गुणत्वात् तस्मादाकाशव्यतिरिक्तो नाधार इति । कारणार्थोऽपि नास्ति अकृतकत्वाभ्युपगमात् अकृतकः शब्द इति स्वयं प्रतिपद्यमाना भवन्तो नार्हन्ति वक्तुं कारणमेकदेश इति । न चान्य एकदेशार्थः सम्भवतीति शून्यमभिधानमेकदेशः शब्दस्य व्यज्यते इति । एकदेशाभिव्यक्तौ चार्थप्रत्ययो न स्याद्वर्णवत्, वर्णाः सर्व एव व्यापका भवन्तीति । एतस्मिन् पक्षे वर्णैकदेशव्यक्तिः, न च वर्णैकदेशः शक्यो निरूपयितुम् । न च निरूपितादपि तस्मादर्थप्रत्ययो भवति वर्णानामर्थप्रत्यायनानभ्युपगमात् । वर्णा अपि तावदेकैकशोऽर्थप्रत्यायका न भवन्ति कुतस्तदेकदेशा इति ।

एतेन यदुक्तं प्रत्युक्तम् । यथैकस्य व्यक्तौ (२) दोष एवमनेकशब्दस्यापि व्यापित्वे दोषाः कोलाहलश्च स्यात् ।

(१) विमोक्तव्यः—पा० ६ पु० ।   (२) व्याप्ताविति सम्भाव्यते ।

कृतकवदुपचाराच्च तीव्रं मन्दमिति कृतकमुपचर्यते तीव्रं सुखं मन्दं सुखमिति उपचर्यते च तीव्रः शब्दो मन्दः शब्द इति। अत्र च प्रयोगः। अनित्यः शब्दः तीव्रमन्दविषयत्वात् सुखदुःखवदिति कृतकवदुपचारादित्यनेन सूत्रेण सर्वानित्यत्वसाधनधर्मसंग्रहः कृतकत्वग्रहणस्योदाहरणार्थत्वात् यथा सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वात् उपलभ्यस्यानुपलब्धिकारणाभावे सत्यनुपलब्धेः गुणस्य सतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वात् इत्येवमादि। तीव्रशब्दस्य तीव्रार्थविषयत्वं न शब्दादिविषयत्वमिति चेत्? अथ मन्यसे तीव्रशब्देन तीव्रार्थोऽभिधीयते न शब्दः, न चान्यविषयः शब्दोऽन्यस्यार्थस्य प्रतिपादक इति? न, शब्दशब्देन समानाधिकरणस्य तीव्रशब्दस्याभिधानात्। सत्यमयं तीव्रशब्दः केवल उच्चारितो द्रव्यगुणकर्मणां समानधर्मं प्रतिपादयति, शब्दशब्दोऽप्युच्चरन्नेकधर्मप्रयोगित्वं शब्दस्याभिधत्ते। यदा पुनरेतौ तीव्रशब्दशब्दौ विशेषणविशेष्यभावापन्नावभिधीयेते तदा तीव्रशब्देन धर्मान्तराणि व्यवच्छिद्यन्ते शब्दशब्देन धर्म्यन्तराणीति उभयशब्दप्रयोगात् शब्दो गम्यते तस्मादुपपन्नं तीव्रशब्दविषयत्वादनित्यः शब्द इति। व्यञ्जकस्य तथाभावात् ग्रहणस्य तीव्रमन्दता रूपवदिति चेत्? नाभिभवोपपत्तेः। शेषं भाष्ये। ग्रहणं निमित्तभेदानुविधायीति चेत्? न ग्रहणभेदस्यैकत्रादृष्टत्वात्। अथ मन्यसे न शब्दो भिद्यते शब्दे त्वभिन्ने ग्रहणं निमित्तभेदानुविधायि भवति ग्रहणभेदाच्चाभिभव इति? न ग्रहणभेदस्यैकत्रादृष्टत्वात्—यथाभिन्नः शब्दो ग्रहणभेदो न प्राप्नोति न ह्यभिन्ने ग्रहणभेदं विषये पश्यामः। अथाभिन्नेऽपि विषये ग्रहणानि भिद्यन्त इति मन्यसे? नित्यं ग्रहणभेदः स्यात्, ततश्च

भिन्नोऽभिन्न इति भिन्नाभिन्नप्रत्ययौ न स्याताम् । अभिभवा-नुपपत्तिश्च ग्रहणयोर्युगपदसम्भवात् न हि ग्रहणे युगपद्भ-वतः । न चैकं ग्रहणमात्मन एवाभिभावकं न चायमभिभवो नास्ति तस्माद्भिद्यते शब्दः ।

अभिभवानुपपत्तिश्च व्यञ्जकसमानदेशस्याभिव्यक्तौ प्राप्त्य-भावात्—व्यञ्जकेन समानदेशोऽभिव्यज्यत इति एतस्मिन् पक्षे नोपपद्यते ऽभिभवः, कस्माद्व्यञ्जकसमानदेशत्वात्—न हि व्यञ्जकसमानदेशेनाप्राप्तः शब्दोऽभिभवितुं शक्यः अप्राप्तत्वात् न ह्यप्राप्तमभिभावकं भवति(अस्ति)। अथाप्राप्तमप्यभि-भावकं भवतीति मन्यसे ? वीणाशब्दानामश्रवणप्रसङ्गः । अप्राप्ताः शङ्खरासभादिशब्दाः अभिभावका इति न कदाचिद्वीणादिशब्दाः श्रूयेरन् । सर्वत्र सन्तीति चेत् ? न पूर्वदोषानुवृत्तेः । अथ मन्यसे यो-ऽभिव्यञ्जकसमानदेशं शब्दमभ्युपैति तस्यैव दोषः अस्माकं तु सर्व एव शब्दाः समानदेशाः तस्माददोषोऽयमिति ? न पूर्वदोषानतिवृ-त्तेः समानदेशत्वे शब्दानां व्यञ्जकेषु नियमो नास्तीति यत्किञ्चिद् व्यञ्जकमुपात्तं सर्वशब्द(स्य) व्यक्तिहेतुरिति पूर्वदोषानतिवृत्ति-रिति । समानदेशत्वे च वीणावेणुशब्दानां शङ्खशब्देन वी-णावेणुशब्दयोरभिभव इति वीणादिशब्दाश्रवणप्रसङ्गः । तस्मा-च्छब्दा एव भिद्यन्त इति । तेषां च भिन्नानां समानदेशत्वे सति ये कर्णशष्कुलीमत्याकाशदेशे युगपत् समवयन्ति तत्र यः पटुः शब्दः स इतरस्याभिभावक इति । अभिभवश्च नाम मन्दस्य पटीयसा ग्रहणादग्रहणमिति । यदि च सन्तानवृत्तिः शब्दः कर्णशष्कुलीमदाकाशदेशं प्राप्तश्च गृह्यते ? दिग्देशप्रत्ययो न प्रा-प्नोति पूर्वेण शब्द उत्तरेण शब्द इति । न हि विषयेषु प्रत्यासी-दत्सु दिग्देशप्रत्ययो दृष्टः गन्धादिवदिति ? । नोपादाननिमि-

मानत्वात्—न हि विद्यमाना आकाशादेः प्रदेशा इति । कथं न विद्यन्ते ? प्रमाणतोऽनुपलब्धेः—यद्याकाशादेः प्रदेशाः स्युः प्रमाणत उपलभ्येरन्निति । कथं प्रमाणतोऽनुपलब्धिः ? विकल्पानुपपत्तेः—प्रदेशशब्देन कारणं वाभिधीयते आधारो वा न कारणप्रकृतकत्वात् यस्मादकृतकमाकाशमतो न कारणार्थः प्रदेशशब्देनोच्यते । नाधारोऽनाश्रितत्वात् अनाश्रितमाकाशं तस्याधारार्थेन शक्यो वक्तुमिति । लोकविरोध इति चेत् ? नान्यथा तदुपपत्तेः—यद्याकाशं निष्प्रदेशं प्रतिपद्यसे ननु लोको विरुध्यते पूर्वभागेन व्याप्त आदित्य इति ? । नान्यथा तदुपपत्तेः संयोगस्याव्याप्यवृत्तित्वे प्रदेशशब्देनाभिधीयमाने न लोकविरोधो यस्माद्यत्संयोगस्याव्याप्यवृत्तित्वं तत्प्रदेशशब्देनाभिधीयते । एतच्च प्रदेशवता द्रव्येणाकाशस्य सामान्यम् । ये (खलु परिच्छिन्ने) अविभातिपन्न आमलकादिके भवतस्तयोर्यः संयोगो वर्तते स ते न व्याप्नोति प्रदेशवती च ते । आकाशसंयोगोऽपि नाकाशं व्याप्नोतीति प्रदेशवद्द्रव्यसामान्यात् प्रदेशवदाकाशमिति भाक्तः प्रयोगः । का पुनरियं भक्तिः ? अतथाभूतस्य तथाभाविभिः सामान्यमुभयेन भज्यत इति भक्तिः । एतस्मात् सामान्यादध्यारोपितप्रदेशवृत्तिः प्रदेशशब्दः यस्मादाकाशस्य प्रदेशवद्भिर्द्रव्यैः सामान्यं संयोगस्याव्याप्यवृत्तित्वमस्त्यतः प्रदेशशब्दोप्याकाशे प्रयुज्यत इति । एवमेतत् न तत्त्वतः । कुत इति चेत् ? न प्रमाणतोऽनुपलब्धेः । अथ मन्यसे आकाशप्रदेशाः प्रदेशवद्द्रव्यसामान्यादाकाश उपचर्यन्ते न पुनस्तत्त्वतस्तदस्तीति(१) न प्रमाणमस्ति ? न प्रदेशस्य प्रमाणतोऽनुपलब्धेः । न ह्याकाशादेः प्रदेशप्रति-

(१) सन्तीति—पा० १ पु० ।

ादकं प्रत्यक्षादि प्रमाणं सम्भवतीति । स्वरूपेणानभिधानाच्च । यद्याकाशस्य प्रदेशाः स्युः ते स्वरूपेण व्यपदिश्येरन् यथा पटस्य प्रदेशाः । के ? तन्तवः, न पुनराकाशस्य प्रदेशाः के इत्युक्ते स्वरूपेण व्यपदेष्टुं शक्या इति । किञ्चोऽनुपपत्तिश्च पूर्ववत् । याँश्चाकाशप्रदेशान् भवान् मन्यते ते किमाकाशात्मका उत नेति ! किं चातः ? यद्याकाशात्मका अनेकमाकाशमिति प्राप्तम् । अथ न ? तेषां स्वभावो वक्तव्यः ? कथं च ते तस्य प्रदेशा इति वक्तव्यम् ? । अनाकाशात्मकाः सन्तः आकाशस्य प्रदेशा इति केनार्थेनाभिधीयन्ते ? तद्यथा तन्तवः पटस्य प्रदेशा इत्युक्ते कारणार्थ आधारार्थश्च गम्यते न पुनराकाशस्य प्रदेशेष्वेतदस्ति । प्रदेशाभावादनाधारः संयोग इति चेन्नानाधारः आकाशाश्रितत्वात् । अथ मनुषे यद्याकाशदेशा न सन्ति आकाशदेशाश्रयः संयोगोऽनाधारः ? न अनाधारः आकाशाश्रितत्वात् । यस्मात् स्वयेवोच्यते आकाशाश्रय इति, तस्मान्नानाधार इति । समानदेशा इति चेत् ? नाबाधनात् । अथ मन्यसे मूर्तिमद्द्रव्यसंयोगा ये आकाशदेशे वर्तन्ते ते प्रदेशाभावात् सर्वे एव समानदेशाः प्राप्नुवन्ति इति । एवं च समानदेशत्वे सति न किञ्चिद्बाध्यत इति । तदेवं प्रदेशवद्द्रव्यसामान्यादाकाशप्रदेश इति भाक्तः प्रत्यय (प्रयोग) इति । निष्प्रदेशत्वात् सर्वेण सर्वशब्दोपलब्धिप्रसंग इति चेत् ? न उक्तोत्तरत्वात् । अथ मनुषे यदि निष्प्रदेशमाकाशं तेन तर्हि सर्वे एव शब्दाः समानदेशा इति सर्वैः सर्वैः शब्द उपलभ्येत, न तूपलभ्यते, तस्मादन्यान्यवृत्तयः शब्दाः सर्वैरग्रहणादङ्गुलिरूपादिव(१)दिति ? ।

(१) संयोगात्—पा० ६ पु० ।

मत्वाद्दिग्देशव्यपदेशस्य—योऽयं शब्देषु दिग्देशव्यपदेशो नायं शब्दनिमित्तः पूर्वापरादिभिन्नेभ्यो निमित्तेभ्य उपजायमानानामेकदेशग्रहणात् तुल्यो दिग्देशव्यपदेशः स्यात् । तस्मान्न शब्दनिमित्तः । कुतस्तर्ह्ययं भवतीति वाच्यम् ? निमित्तभेदात्—यानि निमित्तानि शब्दकारणस्य संयोगस्यानुग्रहकारीणि दिग्देशवन्ति तेषां निमित्तानां भेदाद्दिग्देशप्रसया इति । ये उपलभ्यमाननिमित्ताः शब्दास्तेषु तद्युक्तं येषां तु शब्दानां निमित्तानि नोपलभ्यन्ते तेषु दिग्देशप्रत्ययो न युक्तः ? न न युक्तः शब्दसन्तानस्य निमित्तभेदाभिमुख्येनादौ प्राप्तेः—यः शब्दसन्तानो यस्मान्निमित्तादुपजायते स समन्तात् शब्दान्तराणि सन्तनोति । तत्र यः शब्दविशेष आदौ कर्णशष्कुलीमत आकाशदेशस्य तदभिमुखेन भागेन सम्बद्ध्यते तन्निमित्तः पूर्वापरादि(शब्द)व्यपदेशः इति । यदा पुनराद्यशब्दपरिच्छेदो नास्ति तदा विपर्यय इति ।

एके तु ब्रुवते—नैव शब्देषु दिग्देशप्रसयाः सन्ति । कुतः ? चक्षुर्विषयसिद्धौ दिग्देशाध्यवसायात्(१)—तथाहि जात्यन्धानां पूर्वापरादिप्रत्ययाः शब्दे न सन्तीति । अपरे तु दिग्देशव्यपदेशेन चक्षुःश्रोत्रे अप्राप्यकारिणी इति ब्रुवते । तेषामुक्तमुत्तरं प्रत्यक्षसूत्रं वर्णयद्भिरिति ॥

**न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यव(२)दुपचाराच्च ॥ १५ ॥**

न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च । सूत्रस्य पूर्वहेतुनामनैकान्तिकत्वज्ञापनमर्थः । शेषं भाष्ये ।

**तस्य भाक्तयोर्नानात्वस्य विभागादव्यभिचारः॥१६॥**

---

( १ ) देशाव्यवसायात्—पा० १ पु० ।

( २ ) नित्येष्वनित्यवदिति क्वचित् ।

तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः। नित्यत्वमित्यत्र किं तावत् तत्त्वम्?। उभयान्तापरिच्छिन्नवस्तुसत्तासंस्पर्शः(१) इति। विपर्ययादनित्यत्वमेतच्चाभावे नास्ति। भाक्तं तु तद्भवति नित्य इव नित्यो घटाभाव इति। न पुनर्नित्य एव कालद्वयाननुभवात्। प्रध्वंसाभावो न प्रागस्ति न घटकाले ऽस्ति प्रागभावो न घटकाले न प्रध्वंसकाल इति। कथं तर्हि? नित्य इव नित्य इत्युच्यते भक्त्या। का पुनरियं भक्तिः? प्रागभावस्य कारणाभावः प्रध्वंसाभावस्य विनाशाभावः उभयं चैतन्नित्यविषयं इत्येतत्सामान्यान्नित्य इव नित्यो न पुनर्नित्य एवेति इन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियक इति॥

सन्तानानुमानविशेषणात्॥ १७॥

सन्तानानुमानविशेषणादव्यभिचारः। न वयमैन्द्रियकत्वादित्यनेनानित्यत्वं प्रतिपादयामोऽपि तु शब्दस्याभिव्यक्तिप्रतिषेधामः। न हि व्यज्यमानस्यैन्द्रियकत्वं युक्तमिति पुरस्ताद्दुक्तम्॥

कारणद्रव्यस्य प्रदेशशब्देनाभिधानान्नित्येष्वव्यभिचार (इति)(२)॥ १८॥

कारणद्रव्यस्य प्रदेशशब्देनाभिधानान्नित्येष्वव्यभिचारः(३)। न हि नित्यानां द्रव्याणां प्रदेशशब्देन कारणमुच्यते। आकाशस्य प्रदेश आत्मनः प्रदेश इति नाकाशात्मनोः कारणद्रव्यमभिधीयते यथा कृतकस्य। किमिति नाभिधीयते? अविद्य-

(१) पाठोऽयं मुद्रितभाष्यपुस्तके स च प्रामादिकः वार्त्तिकन्यायसूचीनिबन्धविरोधात्।

(२) व्यभिचारात्—पा० ६ पु०।

(३) सम्बन्धः—पा० १ पु०।

एतच्च न, उक्तोत्तरत्वात्—उक्तोत्तरमेतत्—यथा संयोगस्याव्याप्यवृत्तित्वं तथा शब्दस्यापीति ।

गुणत्वाद्व्यापकमित्येके—एके गुणत्वाद्धेतोः शब्दसंयोगाद्यङ्गुलिरूपवद्व्यापकं प्रतिपद्यन्ते । त एवं प्रष्टव्याः व्यापकत्वमिति कोऽर्थः । यद्याश्रयवृत्तित्वव्याप्तिः(२)न किञ्चिद्बाध्यते । अथान्यच्चभासि । वयं तु व्याप्तमङ्गुलिरूपस्याश्रयोपलब्ध्योपलब्धिं ब्रूमः न पुनः शब्दादय आश्रयोपलब्धावुपलभ्यन्ते तस्मादङ्गुलिरूपवन्न व्यापका इति । समुदितस्यानानामेकसमुदाय्युपलब्धावुपलभ्यनुपलब्धी व्याप्यव्याप्ती एकाश्रयाणामाश्रयोपलब्धाविति । अथ च आकाशे मूर्तिमतां संयोगास्तेषां कांश्चित् केचित् कृतकान् प्रतिपद्यन्ते कांश्चिदकृतकानिति । तत्र कार्यद्रव्यसंयोगः कृतकः संयोगजत्वादुत्पद्यमानस्य कारणसम्बन्धिभिः कार्यस्य संयोगजः संयोग इति । क्रियाजं तु केचिदेच्छन्ति यावद्द्रव्यभावित्वात् संयोगस्य अविभक्तस्य संयोगो नास्तीति नास्त्याकाशे क्रियाजः संयोग इति । अन्याकाशसंयोगमकृतकमिच्छन्ति । तत्रैवाकाशसंयोगस्य तावत् कृतकत्वेऽनुमानम् आकाशेन कृतकसम्बन्धेन सम्बन्धी परमाणुर्मूर्तिमत्त्वादिभ्यो घटादिवदिति । कार्याकाशसंयोगो विप्रतिपत्तिविषयो न यावद्द्रव्यभावी अविनश्यदाधारत्वे क्रियावद्द्रव्यवृत्तित्वे सत्यप्राप्तिप्रतिद्वन्द्वित्वात्(१)मूर्तिमदितरसंयोगवत् । तस्मात् कार्यद्रव्येणाकाशस्य संयोगजः संयोगः क्रियाजश्च परमाणोस्तु क्रियाज इति । विप्रतिपत्तिविषयाविभागिनः आकाशादयः क्रियावद्द्रव्यसंयोगित्वात्(२)

(१) प्रतिसन्धित्वात्—पा० १ पु० ।

(२) क्रियावद्द्रव्यसंयोगित्वाद्विभागित्वं संयोगवत्—पा० ६ पु० ।

परमाणुवत् । यथा परमाणोः क्रियावद्द्रव्यसंयोगा अयावद्द्रव्यभाविनः, संयोगवत्(१)च्छब्दबुद्ध्यादयश्चात्मन्यव्यापकाः संयोगस्य चाव्याप्यवृत्तित्वमात्मनः प्रदेशार्थ इति व्याख्यातम् । एकस्य चानेकमूर्तिमत्प्रदेशवद्द्रव्यसम्बन्धित्वं प्रदेशार्थः । यद्वा यदाकाशस्यैकस्य सतः प्रदेशवताऽनेकेन सम्बन्धित्वं तत्प्रदेशवद्द्रव्यसामान्यं यथा घटादेः ।

कस्मात् पुनः सूत्रकारस्यास्मिन्नर्थे सूत्रं न श्रूयते इति ? । कतमस्मिन्नर्थे ? निष्प्रदेशमाकाशं निष्प्रदेश आत्मेति एतस्मिन्नर्थे ? । अर्थतोऽधिगमेन सूत्रं—यस्मादयमर्थोऽर्थतोऽधिगम्यते ततो न सूत्रित इति । शब्दसन्तानप्रतिपादने वा न सूत्रमर्थतोऽधिगतेः ।

शास्त्रसिद्धान्ताद्वा तदधिगतेः—शास्त्रसिद्धान्तस्तु न्यायसमाख्यातं बहुशास्त्रमनुमानं तेनानुक्तमपि गम्यत इति न सूत्र्यते । अथापीदमस्ति इदं नास्तीति भाष्यम् । कोऽयं पर्यनुयोगस्तस्य को विषय इति ? । अनुपलभ्यमानास्तित्वम्—ये शब्दस्य नित्यत्वं कल्पयन्ति ते इदं पर्यनुयोज्याः इदमस्ति इदं नास्तीत्येतद्भवन्तः (कथं) कुतः प्रतिपद्यन्त इति ? । एवमनुयुक्ताः सन्तः प्रतिब्रुवते प्रमाणत उपलब्धेरनुपलब्धेश्चेति ।

अविद्यमानस्तर्हि शब्दः ?—

**प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च ॥ १९ ॥**

प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्चेति । यदोभयपक्षसम्प्रतिपन्नं घटाद्यनित्यत्वेन, तेन चानुयोज्याः—यदिदमनित्यं घटादि भवद्भिः प्रतिपद्यते तत्कथमनित्यमिति ? । ए-

(१) क्रियावद्द्रव्यसंयोगित्वाद्विभागित्वं संयोगवत्—पा० ६ पु०।

वमनुयुक्ता यदि घटाद्यनित्यत्वन्यायं प्रतिपद्यन्ते स शब्देऽपीति (प्रागिति) सूत्रम् । सतोऽनुपलब्धिकारणाभावे कदाचिदनुपलब्धेरनित्यः शब्द इति सूत्रार्थः । शेषं भाष्ये । व्यञ्जकाभावादग्रहणमिति चेत् ? नोक्तोत्तरत्वात्–अथ मन्यसे शब्दस्योच्चारणं व्यञ्जकं तस्याभावान्नोपलभ्यत इत्यसिद्धं विशेषणमनुपलब्धिकारणाभाव इति । किमिदमुच्चारणं नाम ? विवक्षाजनितेन प्रयत्नेन कौष्ठ्यस्य वायोः प्रेरितस्य कण्ठादिस्थानाभिघातः ? तन्नोक्तोत्तरत्वात्—वायुगतवेगापेक्षो वायुना(१) ताल्वादिसंयोगोऽभिघातः संयोगस्य व्यञ्जकत्वं प्राक् प्रतिषिद्धमिति । एवं च तत्त्वं(२) पांशुभिरवाकिरन्निदमाह । कोऽस्यार्थः ? । तत्त्र उक्ते जाता प्रत्यवतिष्ठते ।

सा च जातिः—

तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः ॥ २० ॥

तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः । कोऽस्य वाक्यस्यार्थः ? आवरणाद्यनुपलब्ध्याऽनेकान्त इत्यर्थः । यथाऽऽवरणाद्यनुपलब्धिरनुपलभ्यमानाऽप्यस्ति तथाऽऽवरणमित्यनेकान्तः । अथानुपलब्धिरनुपलभ्यमाना नास्ति ? तदभावादुपलब्धिरस्ति । न चाविद्यमानस्योपलब्धिरस्तीति सिद्धमावरणम् । कथं पुनर्भवान् जानीते नावरणानुपलब्धिरुपलभ्यत इति ? किमत्र ज्ञेयम् प्रत्यात्मवेदनीयत्वात् प्रत्यात्मवेदनीयामेवायमावरणानुपलब्धिमावरणोपलब्धिं च वेदयते । एवं च सत्यपहृतविषयमुत्तरवाक्यमिति । अपहृतविषयमिति नास्योत्थानमस्तीति ।

(१) वेगापेक्षेण वायुना—पा० ६ पु० ।
(२) च सति तत्त्व—पा० ६ पु० ।

अभ्यनुज्ञावादेन दूष्यते—

अनुपलम्भादप्यनुपलब्धिसद्भाववन्नावरणानुपपत्तिरनुपलम्भात् ॥ २१ ॥

अनुपलम्भादप्यनुपलब्धिसद्भाववन्नावरणानुपपत्तिरनुपलम्भादित्यस्य सूत्रस्यानुपलब्धेरनैकान्तिकत्वमर्थः ॥

अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ २२ ॥

अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः । अतथाजातीयेन प्रत्यवस्थानादनुत्तरमिति सूत्रार्थः । यथाजातीयकः शब्दोऽनित्यस्तथाजातीयकं किञ्चिन्नित्यं न दृष्टमिति । उक्तं चात्र । किमुक्तम् ? उभयान्तापरिच्छिन्नवस्तुसत्तासम्बन्धो नित्यतेति । तस्मादयथार्थप्रत्यवस्थानात् यत्किञ्चिदेतत् ।

अनित्यः शब्दो गुणत्वे सत्यस्मदादीन्द्रियविषयत्वात् बुद्धिवत् । अव्यापकस्य व्यापकद्रव्यसमवायित्वे सति प्रत्यक्षत्वात् सुखवत् । आकाशनिष्प्रदेशत्वे हेतुः निष्प्रदेशमाकाशं व्यापकत्वात् आत्मवत्, द्रव्यस्य सतः सदाऽमूर्तत्वात् आत्मवदेव व्यापकत्वादेवाकृतकत्वम् । व्यापकत्वे च द्रव्यव्यापकस्य सतः सर्वदाऽमूर्तत्वात् । एतेन दिक्कालौ व्याख्यातौ । एतावत् स्वसाधनस्थित्या व्यवस्थितमनित्यः शब्द इति ॥

अथ शब्दस्य नित्यत्वं प्रतिजानान इति भाष्यम् । विप्रतिपत्तेः प्रमाणमूलत्वाद्धेतोः परिप्रश्नः । विप्रतिपत्तिर्नाम द्वयोरेकविषया विरुद्धधर्मप्रतिपत्तिः न विप्रतिपत्तिः प्रमाणान्तरमन्तरेण युक्तेति नित्यत्वे प्रमाणं वक्तव्यमित्यत आह ।

अस्पर्शत्वात् ॥ २३ ॥

नित्यः शब्दोऽस्पर्शत्वात् ॥

अनुपलब्धिविपक्षैकदेशस्य प्रयोग आकाशवदिति ।

तस्य व्यभिचारदर्शनार्थं सूत्रम् । न कर्मानित्यत्वात् । शेषमस्य भाष्ये ॥

न कर्मानित्यत्वात् ॥ २४ ॥

नाणुनित्यत्वात् ॥ २५ ॥

सम्प्रदानात् ॥ २६ ॥

अयमन्यो हेतुः शब्दनित्यत्वे सम्प्रदानात् । न हि किञ्चिन्नित्यं सम्प्रदीयमानमित्यन्वयिनो दृष्टान्तस्याभावाद्विरुद्धः । अथायं प्रतिज्ञार्थोऽवतिष्ठते शब्दः सम्प्रदानाद् घटादिवदिति । एवमपि नित्यत्वं न सिद्ध्यति—

तदन्तरालानुपलब्धेरहेतुः ॥ २७ ॥

अध्यापनादप्रतिषेधः ॥ २८ ॥

तदन्तरालानुपलब्धेरहेतुः । अवतिष्ठमानो हि दातृप्रतिग्रहीत्रोरन्तराले उपलभ्येतेति इति विरोधः सूत्रार्थः । न विरोधोऽनुमानादुपलब्धेः न हि प्रत्यक्षतोऽनुपलब्धस्यानुमानेनोपलब्धिः सत्तां बाधते । किमनुमानम् ? अध्यापनम् । किमिदमध्यापनं नाम ? दीयमानस्य सम्प्रदाने—प्राप्तिः—दातृप्रतिग्रहीत्रोरन्तराले शब्दोऽस्त्यध्यापनात् शरादिवदिति । उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः ॥

उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः॥२९॥(१)

न शब्दस्याध्यापनं प्रतिषिध्यते अपि तु नृत्योपदेश-

(१) केचित्तु नास्य वाक्यस्य सूत्रत्वं किन्तु भाष्यत्वमिति वदन्ति ।

यदनित्यस्यैवाध्यापनमिति । यत्र पुनरेतदाहुर्गतिग्रहीत्रोरन्तराले शब्दोऽस्तीति सिद्धसाधनमेतदिति । वयमपि ब्रूमो दात्रोच्चारितः शब्दः सन्तानवृत्त्या सम्प्रदानं प्राप्नोति तस्मात् सम्प्रदानमवस्थाने न हेतुः । अयं तर्हि हेतुः—

अभ्यासात् ॥ ३० ॥

अभ्यासात् । वीणादिवदिति । अनित्येष्वेव लङ्घनप्लावनादिष्वभ्यास इति विरुद्धः । अथावस्थानमभ्यासात् साध्यत तथाप्यनवस्थितेष्वेवाभ्यास इत्यनेकान्तः अभ्यासस्वरूपानवधारणादसिद्धश्च । अभ्यासो ह्येकविषयोऽनेकज्ञानोत्पाद एकाकारविषयो वा । तत्रायमभ्यास एकविषय एकाकारविषयो वेति सन्दिग्धासद्धः अभ्यासासिद्धावभ्यासोपचारविषयत्वेन साधनं तस्यानैकान्तिकत्वज्ञापनार्थम्—

नान्यत्वेप्यभ्यासस्योपचारात् ॥ ३१ ॥

नान्यत्वेप्यभ्यासोपचारादिति । एतत्सूत्रमन्यत्वप्रतिषेधार्थम् ॥

अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताभावः ॥३२ ॥

अन्यदन्यस्मादनन्यत्वादनन्यादित्यन्यताभावः । यदिदमन्यदिति मन्यसे इदमन्यस्मादन्यद्वा स्यादनन्यद्वा । यद्यन्यदनन्यन्न भवति यथा ब्राह्मणादन्यो न ब्राह्मण इति । अथानन्यत् तथाऽप्यन्यन्न भवति अनन्यत्वात् । यदनन्यन् तत् कथमन्यद्भविष्यतीति ॥

तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः॥३३॥

तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः । सूत्रस्यार्थोऽविरोधः । अनन्यत्वमभ्युपगतं तन्निवर्तत इति । कथं निवर्तते ? प्रतिषेधस्यान्यविषयत्वात्—अन्याभावे अनन्यन्नास्तीति, न हि ब्राह्मणाभावे ऽब्राह्मणः सिद्ध्यति ।

अयं तर्हि हेतुः प्रत्यभिज्ञानात्?—तदभावे प्रत्यभिज्ञानं न दृष्टं मण्यादिषु, अस्ति च प्रत्यभिज्ञानं शब्दे, तस्मात् प्रत्यभिज्ञानादवतिष्ठते शब्द इति?। किमिदं प्रत्यभिज्ञानं? तत्प्रत्ययविषयत्वम्? तत्प्रत्ययविषयत्वमन्यत्वेऽपीत्यनैकान्तः। अथ प्रत्यभिज्ञानं तत्प्रत्ययविषयस्याव्यभिचारः न हि शब्दे कदाचित् तत्प्रत्ययविषयव्यभिचारोऽस्ति यः पुनः सदृशे तत्प्रत्ययविषयः स विशेषदर्शनान्निवर्तते, अतो यासौ तत्प्रत्ययस्य शब्देऽव्यावृत्तिः तत्प्रत्यभिज्ञानमिति? न, तत्प्रत्ययस्याव्यावृत्तिरसिद्धा अयं तावत् तत्प्रत्ययः पुरुषान्तरे निवर्तमानो दृष्टः। यत् पुनरेतत् विशेषदर्शनात् सदृशे तद्भावप्रत्ययो निवर्तत इति मन्यसे एवमेतत्, शब्दे तु किं विशेषस्यादर्शनात् सदृशे तत्प्रत्यय उत तद्भावादेव तत्प्रत्यय इति सन्दिह्यते। अथ प्रत्यभिज्ञानं तद्भावाद्भवतीति पक्षस्तथाप्यन्यो हेतुर्वक्तव्यः। किं कारणम्? प्रत्यभिज्ञानस्य पक्षविशेषणत्वेनोपयुक्तत्वात्। यत्पुनर्गोशब्दो गोशब्द इति प्रत्ययस्याव्यावृत्तिरस्तीति। न च गोशब्दस्य गोप्रत्ययकर्तृत्वव्यभिचार इति? एतदपि सन्दिह्यते, कथम्? किं कारणसामान्याद्गोशब्दे गोप्रत्ययस्यानिवृत्तिराहो तद्भावादिति। एतेन तत्प्रत्ययकर्तृत्वं व्याख्यातम्। युक्तं तु कारणसामान्याद्गोशब्दे गोशब्दप्रत्ययस्याव्यावृत्तिः। कथमिति? गोबुद्धौ गोबुद्धिप्रत्ययो न व्यावर्तते, न चास्या गोशब्दबुद्धेस्तत्प्रत्ययकर्तृत्वं निवर्तते तस्मात् तत्प्रत्ययहेतुत्वे प्रत्यभिज्ञानमहेतुः। यथानुपलभ्यमानविशेष एव निवर्तते तं प्रति तस्य वस्तुनः किं विशेषोऽस्ति नास्तीति भवन्त एव प्रष्टव्याः। यद्यस्ति विशेषः प्रत्ययाव्यावृत्तिरहेतुरनैकान्तात्। अथ नास्ति एकं वस्तु ज्ञातृकमिति प्राप्तम्। विरोधादहेतुः प्रत्ययाव्यावृत्तिर्विशेषपुरुषविषय-

तयाऽसिद्धा-पुरुषमात्रविषयतयानैकान्तिकीति ।

अयं तर्हि हेतुः-

विनाशकारणानुपलब्धेः ॥ ३४ ॥

विनाशकारणानुपलब्धेः । यदनित्यं तस्य विनाशकारणमुपलभ्यते यथा लोष्टस्य, कारणद्रव्यविभागः, न तु शब्दस्य तस्मान्नित्यः शब्द इति ॥

अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः ॥ ३५ ॥

अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्ग इति । शेषं भाष्ये॥

उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः ॥ ३६ ॥

उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः । अनुमानेन शब्दस्य विनाशकारणमुपलभ्यते । यथानुमानेनोपलभ्यते न तन्नास्ति । किमनुमानम् ? सन्तानोपपत्तिरिति । तस्मादनपदेशोऽयं विनाशकारणानुपलब्धेरिति । यथा यस्माद्विषाणी तस्मादश्व इति । किं पुनरत्रासत् विषाणमाहोस्वित् विषाणसम्बन्ध इति ? । उभयमित्याह यदा विषाणिनमर्थमश्वत्वेन साधयति तदा विषाणमस्यैव न विषाणं प्रतिषिध्यते । अश्वविषाणसम्बन्धस्याभावादनुमानमसदिति युक्तमुक्तमसत्त्वादनपदेश इति ।

कर्मत्ववदिति चेत् ? नाश्रयानित्यत्वात् । अथ मनुषे नित्यस्याप्युपलभ्यमानस्यात्यन्तमग्रहणं दृष्टम्-यथा कर्मत्वस्येति । तच्च न, आश्रयानित्यत्वात् आश्रयस्य नित्यत्वादश्रवण(कारणा)नुपपत्तिरिति ब्रूमः । कर्मत्वस्य पुनरग्रहणकारणमाश्रयानित्यत्वमस्ति तस्मादप्रसङ्ग इति ।

घण्टायामभिहन्यमानायां तारस्तारतरो मन्दो मन्दतर इति श्रुतिभेदान्नानाशब्दसन्तानो ह्यविच्छेदेन श्रूयते तत्रेदं चिन्त्यते ।

शब्दस्य व्यज्यमानस्य यद्व्यक्तिकारणं तत् किं घण्टास्थमा-होस्विदन्यवृत्तीति । यदि घण्टास्थं किमवस्थितमुत सन्तानवृत्तीति । अन्यवृत्तित्वेऽपि किमवस्थितमुत सन्तानवृत्ति । यदि घण्टास्थमवस्थितं च तदा श्रुतिभेदो न प्राप्नोति । अथ घण्टास्थं सन्तानवृत्ति च युगपदनेकशब्दोपलब्धिप्रसङ्गः । यदि घण्टास्थेनावस्थितेन सन्तानवृत्तिना वाऽभिव्यक्तस्तावानेव शब्द एकस्मिन् काले उपलभ्येत । घण्टास्थं चाभिव्यक्तिकारणं कथमन्यत्र वर्तमानं शब्दं व्यनक्तीति वाच्यम् । अथान्यगतमवस्थितं सन्तानवृत्ति वाभिव्यक्तिकारणं मनुषे तदैकस्यां घण्टायामभिहतायां शब्दान् व्यनक्ति न प्रत्यासन्नदेशवृत्तिषु घण्टान्तरेष्विति नियमहेतुर्वक्तव्यः । असति च शब्दभेदे श्रुतीनां भेद उपपादयितव्यः । तारो मन्द इति नादोऽभिधीयत इति चेत् ? न, शब्दसामानाधिकरण्यस्य ग्रहणात्—शब्दसमानाधिकरणोऽयं तारमन्दशब्दः प्रवर्तते न नादसमानाधिकरणः तस्माच्छब्दोऽभिधीयत इति । न चासति शब्दविषयत्वे शब्दसामानाधिकरण्यं युक्तम् नीलोत्पलादिवदिति । व्यामोहप्रत्ययः स इति चेत् ? न निमित्तानभिधानात् । अथ मन्यसे तारो मन्द इति शब्दसमानाधिकरणो व्यामोहप्रत्ययो भवति—यथा दीर्घः शब्दो महान् शब्द इति ? । न, विशेषहेत्वभावात्—व्यामोहप्रत्यय इति न विशेषहेतुरस्ति । यदि चायं व्यामोहप्रत्ययो भवति व्यामोहप्रत्ययस्य निमित्तं वाच्यम् । यथा दीर्घः शब्द इति अविरतशब्दसन्तानश्रुतौ शब्दे दीर्घप्रत्ययो भवति—यानि खलु दीर्घाणि द्रव्याणि तेषामवयवोपचये सति ग्रहणसन्ततिविषयत्वं तत्सामान्यात् शब्दे दीर्घप्रत्ययः । न तु नित्यशब्दवादिनो व्यामोहप्रत्ययबीजमस्तीत्ययुक्तमेतत् । तुल्यमेतदिति चेत् ? न, तन्निमित्तस्य कदाचिद्भावात् । अथ मन्यसे यस्याप्यनित्यः शब्द-

सन्तानस्तेनापि घण्टास्थमवस्थितं सन्तानवृत्ति वाऽन्यस्थमवस्थितं सन्तानवृत्ति वोत्पत्तिकारणं वाच्यम् घण्टास्थमुत्पत्तिकारणं कदाचिच्छब्दानुत्पादयति कदाचिन्नेति नियमवत् प्रसङ्गः ? । न प्रसङ्गः कदाचिद्भावात् शब्दानामुत्पत्तिकारणं घण्टावृत्ति(तत्)कदाचिद्भवति कदाचिद्भावेऽपि सति सन्तानवृत्ति । तस्मान्निमित्तभेदानुविधायिनः शब्दाः कदाचिद्भवन्ति सन्तानवृत्तित्वात् च मन्दतरमन्दतमादिभिन्नरूपानुविधायिनं शब्दमुत्पादयन्तीति । तच्च कारणं संस्कार इति । कुतस्तदुत्पत्तिः ? । पाणिसंश्लेषमपेक्षमाणात् कर्मणः पाणिघण्टासंश्लेषात् पाणिगतवेगापेक्षात् घण्टायां कर्म, तत्कर्म पाण्यभिघातमपेक्षमाणं विभागसमकालं संस्कारं करोति । सा चलन्त्याध्यात्मिकं वायुमुपगृह्णाति। सा च वायुनाभिहता पुनः कर्म करोति ततः कर्मणः संस्कारः संस्कारेण पुनः कर्म पुनर्वायूपग्रह इत्येवमादिन्यायेन संस्कार उत्पद्यत इति । तत्रान्त्यस्यातिमान्द्यात् घण्टायां महाभूतसंक्षोभणशक्तेरभावस्ततो वायूपग्रहोच्छेदः ततः संस्कारस्य इति ॥

न संस्कारोऽस्त्यनुपलब्धेरिति चेत्—अथ मन्यसे नैव संस्कारोऽस्त्यनुपलब्धेः तथासत—

**पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः॥३७॥**

पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः । उक्तार्थं सूत्रम् । यदि संस्कारं शब्दोत्पत्तिनिमित्तं न प्रतिपद्यसे पाणिघण्टासंश्लेषाच्छब्दे सन्तानोच्छेदो न प्राप्नोति । अथ घण्टास्थः संस्कारः पाणिसंश्लेषान्निवर्तते तथापि कथं शब्दसन्तानोच्छेद इति ? । न भूयो घण्टासंश्लेषः शब्दानुच्छिनत्तीति । अपि तु पाणिघण्टा-

संश्लेषात्तद्वृत्तिसंस्कारः स्पर्शवद्द्रव्यसंयोगविरोधित्वान्निवर्तते । निवृत्ते च कारणाभावात् कार्याभाव इति सन्तानोच्छेदः ॥

## विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥ ३८ ॥

विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः । यदिदमुच्यते विनाशकारणानुपलब्धेर्नित्यः शब्द इति । यदि यस्य विनाशकारणं नोपलभ्यते तन्नित्यं यानीमानि शब्दग्रहणानि तेषां न भवता विनाशकारणमुपपाद्यते अनुपपादनादवस्थानान्नित्यत्वमिति । अथानुपलब्धविनाशकारणान्यपि शब्दग्रहणानि अनित्यानि शब्दोऽप्येवमित्यनैकान्तः । अथानुमानतः शब्दग्रहणविनाशकारणानि गम्यन्ते तत्समानं शब्द इति न किञ्चिद्बाधितं भवति ।

व्यधिकरणत्वादयुक्तमिति चेत् ?—अथ मन्यसे व्यधिकरणः शब्दः कथमन्यवृत्तिना संश्लेषेण निवर्त्यते । अथ व्यधिकरणोऽपि निवर्त्यते ? सर्वघण्टाशब्दोच्छेदप्रसङ्गः । तस्मात् पाणिघण्टासंश्लेषसमानाधिकरणः शब्दः—

## अस्पर्शत्वादप्रतिषेधः ॥ ३९ ॥

अस्पर्शत्वादप्रतिषेधः । अस्पर्शद्रव्याश्रयः शब्द इति सूत्रार्थः । कथमन्यत्र वर्तमानस्य पाणिघण्टासंश्लेषो निवर्तक इति ? । नोक्तोत्तरत्वात्—उक्तोत्तरमेतत् कारणाभावाच्छब्दान्तरानुत्पादः । यस्तूत्पन्नः शब्दः स मन्दतरतमादिन्यायेनान्त्यस्यातिमान्द्यात् येन केनचिद्विरोधित्वात् क्षीयते । योऽयं संस्कारः शब्दकारणत्वेन समधिगतः । किमेकोऽनेको वेति सन्दिह्यते । अनेकः संस्कार इति तत्त्वम् । शब्दभेदात्—कारणभेदे सति कार्यभेदो दृष्टः

यस्यैकः संस्कारः तस्येषोः पातः प्राप्नोति अगत्वैव यावद्गन्तव्यमिति । अथाप्रतिबध्यमाने संस्कारे द्रव्यं गच्छति न कदाचित्पातः प्राप्नोति तस्मादनेकः संस्कारः ॥

विभक्त्यन्तरोपपत्तेश्च समासे ॥ ४० ॥

विभक्त्यन्तरोपपत्तेश्च समासे । नायं शब्दो गन्धादिभिः सह सन्निविष्टो व्यज्यते विभक्त्यन्तरोपपत्तेः विभागश्च विभागान्तरं चेति विभक्त्यन्तरम् । (प्रतिद्रव्य) विधर्माणश्च सरूपाश्च शब्दाः एकद्रव्याः श्रूयन्ते । समासः समुदायः एतच्च स्पर्शवद्द्रव्यवृत्तिषु शब्देषु न प्राप्नोति गन्धादिवत् यथा प्रतिद्रव्यमेको गन्ध एवं प्रतिद्रव्यमेकः शब्द इति । सन्तानोपपत्तेश्चेति चार्थः यद्ययं गन्धादिभिः सह सन्निविष्टः स्यात् नान्यत्र वर्तमानः श्रोत्र उपलभ्येत तस्मात सन्तानवृत्तित्वादाकाशाश्रयः शब्द इति ॥

विकारादेशोपदेशात् संशयः ॥ ४१ ॥

विकारादेशोपदेशात् संशय इति । संशयकारणज्ञापनार्थं सूत्रम् ॥

प्रकृतिविवृद्धौ विकारविवृद्धेः ॥ ४२ ॥

प्रकृतिविवृद्धौ विकारविवृद्धेरिति सूत्रम् । प्रकृत्यनुविधानादिति सूत्रार्थः । विकारे प्रकृत्यनुविधानं दृष्टमिति ॥

न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः ॥ ४३ ॥

न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुरिति साधनपक्षे दृष्टान्तमात्रत्वादहेतुः ॥

नातुल्यप्रकृतीनां विकारविकल्पात् ॥ ४४ ॥

दूषणपक्षे नातुल्यप्रकृतीनां विकारविकल्पात् इत्यसम्बद्धम् । अतुल्यायाः प्रकृतेः विकल्प्यन्ते विकारा ह्रस्वदीर्घानुविधानं तु यकारे नास्तीति ॥

**द्रव्यविकारवैषम्यवद्वर्णविकारविकल्पः ॥ ४५ ॥**

द्रव्यविकारवैषम्यवद्वर्णविकारविकल्पः । यथा द्रव्यभावेन तुल्यायाः प्रकृतेर्विकारो विकल्प्यते । एवं वर्णभावेन तुल्यायाः प्रकृतेर्विकारविकल्पः स्यादिति ॥

**न विकारधर्मानुपपत्तेः ॥ ४६ ॥**

**विकारप्राप्तानामपुनरापत्तेः (१) ॥ ४७ ॥**

विकारप्राप्तानामपुनरापत्तेरिति । यदि विक्रियन्ते वर्णाः पुनरापत्तिर्न प्राप्नोति ॥

**सुवर्णादीनां पुनरापत्तेरहेतुः ॥ ४८ ॥**

सुवर्णादीनां पुनरापत्ते (२) रहेतुः । विकारप्राप्तानां पुनरापत्तिदर्शनादनेकान्त इति सूत्रार्थः ॥

**न तद्विकाराणां सुवर्णभावाव्यतिरेकात् ॥ ४९ ॥**

न तद्विकाराणां सुवर्णभावाव्यतिरेकात् । सर्वावस्थं सुवर्णदर्शनं न पुनरिकारयकारयोर्धर्मयोः कश्चिद्वर्णात्मा व्यवस्थितो भवति य इत्वं हित्वा यत्वमापद्यत इति ॥

**वर्णत्वाव्यतिरेकाद्वर्णविकाराणामप्रतिषेधः(३) ॥५०॥**

वर्णत्वाव्यतिरेकाद्वर्णविकाराणामप्रतिषेधः । वर्णविकारा अपि न वर्णत्वं व्यभिचरन्तीति । अस्ति वर्णत्वं सामान्यमिति ॥

**सामान्यवतो धर्मयोगो न पुनः सामान्यस्य ॥५१॥**

सामान्यवतो धर्मयोगो न पुनः सामान्यस्येति परिहारः । इतश्च वर्णविकारानुपपत्तिः—

(१) अपुनरावृत्तेरिति पाठो मुद्रितभाष्यपुस्तके ।

(२) पुनरावृत्तेः—पा० १ पु० ।

(३) न्यायसूचीनिबन्धे ५० । ५१ इति सूत्रद्वयं न दृश्यते ।

**नित्यत्वे ऽविकारादनित्यत्वे चानवस्थानात् ॥५२॥**

नित्यत्वे ऽविकारात् अनित्यत्वे चानवस्थानात् । नित्या वर्णा इति न युक्तो विकारः व्याघातादनित्या वर्णा इति न युक्तो विकारोऽनवस्थितानां विकारादर्शनात् ॥

**नित्यानामप्यतीन्द्रियत्वात् तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः ॥ ५३ ॥**

नित्यानामप्यतीन्द्रियत्वदर्शनात् तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेध इति विकल्पसमा जातिः ॥

**अनवस्थायित्वे च वर्णोपलब्धिवत् तद्विकारोपपत्तिः ॥ ५४ ॥**

अनवस्थायित्वे च वर्णोपलब्धिवद्विकारोपपत्तिरिति साधर्म्यसमा जातिः ।

उभयोरप्युत्तरम्—

**विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः ॥ ५५ ॥**

विकारधर्मित्वेन नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः । नित्या विक्रियन्त इति व्याघातो दोषः । उपलभ्यमानस्य वैकारस्य यत्नानुपपत्तेः वर्णोपलब्धिवदित्यसम्बद्धम् ।

इतश्च वर्णविकारानुपपत्तिः—

**प्रकृत्यनियमाद्वर्णविकाराणाम् ॥ ५६ ॥**

प्रकृत्यनियमात् । विकारे प्रकृतीनां नियमो दृष्ट इति । इकारयकारयोस्त्वनियमः तस्मादनियमान्न विक्रियन्त इति ॥

**अनियमे नियमान्नानियमः ॥ ५७ ॥**

अनियमे नियमान्नानियमः । सूत्रार्थोऽनियमो नास्तीति ॥

**नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः॥५८॥**

नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः। अनुज्ञातप्रतिषिद्धयोरेकत्वानुपपत्तेरिति विरोधः सूत्रार्थः। तस्मादनुपलभ्यमानपृथग्धर्मिविशेषाणामादेश इति। यद्येते वर्णा विक्रियेरन् ततः पृथग्विकारलक्षणेभ्यो धर्म्युपलभ्येत, न तूपलभ्यते तस्मान्न विक्रियन्त इति। अथ विक्रियन्ते एवं विकारो भवति—

**गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकार॥ ५९॥**

गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेः सन्ति वर्णविकाराः। सूत्रार्थो गुणान्तरापत्त्यादेरादेश इति। अयं च विकारादेशोपदेशविचारो भाष्यकारेणैव सम्यक् निरूपित इति सूत्रार्थमात्रं निरूपितमिति॥

( इति वर्णानित्यत्ववादः। )

**ते विभक्त्यन्ताः पदम्॥ ६०॥**

ते विभक्त्यन्ताः पदम्। ते वर्णा यथादर्शनं विकृता विभक्त्यन्ताः पदसञ्ज्ञका भवन्ति। अर्थप्रत्ययस्तर्हि न प्राप्नोति?। न न प्राप्नोति। अन्त्यवर्णप्रत्ययात् पूर्ववर्णप्रतिसन्धानप्रत्ययापेक्षादर्थप्रत्यय इति। विभक्तिर्द्वयी नामिकी चाख्यातिकी च। नामिकी स्वादयः आख्यातिकी तिबादयः। तया विशिष्यमाणं पदं द्वेधा भवति। नाम च आख्यातं च। अभिधेयस्य क्रियान्तरयोगाद् विशिष्यमाणरूपः शब्दो-नाम—यथा ब्राह्मण इति—क्रियाकारकसमुदायः कारकसंख्याविशिष्टः। क्रियाकालयोगाभिधायिक्रियाप्रधानमाख्यातम्—पचतीति यथा। यदि द्वयी

विभक्तिरूपसर्गनिपातास्तर्हि न पदसञ्ज्ञकाः ? (१) । न नाम्न्यन्तर्भावात्–उपसर्गनिपाता ना(म्ना) संगृहीताः (२) । यस्मादाह अव्ययाल्लोप इति, ते सुबन्तत्वेनैव संगृहीता इति ।

पदेन व्यवहार इति पदार्थश्चिन्त्यते । नामपदं चाधिकृत्य व्यवहार इति नामपदं चिन्त्यते । नाम्नश्चाधिकारो व्यापकत्वात्–यस्मान्नाम्ना सर्वं (एव) पदं व्याप्यते तस्माद्गौरित्यस्य पदस्यार्थश्चिन्त्यते । न पदादर्थाधिगतिर्विशेषेऽनवस्थानात् । न हि पदे उच्चारिते कश्चिद्विशेषो गम्यते तस्मात्पदमवाचकम् ? । न पदस्य विशेषाविषयत्वात् । क एवमाह पदेन विशेषो गम्यते, अपि तु सामान्यवर्त्ति पदं विशेषवर्त्ति वाक्यम् । न च सामान्याभिधानादनर्थकं भवितुमर्हतीति ? । न सामान्यस्य व्यवहाराविशेषाविषयत्वात् । सर्व उपदेष्टा विशेषप्रतिपत्त्यर्थं पदमुच्चारयति । न च सामान्ये भेदो न सम्प्रतिपत्तिः तस्मात्पदमवाचकमेवेति । ? न सामान्यविषयकत्वे सति विशेषश्रुतेर्नियामकत्वात्—यदि पदमवाचकं स्यात् न च पदश्रवणात् सामान्यं गम्येत । यदवाचकं न ततः सामान्यं विशेषो वा गम्यते यथार्थाद्, गम्यते च पदात् तत् सामान्यं सामान्यश्रुतेर्विशेषश्रुतिर्नियामिका भवति । यथा गौरिति सामान्याधिगतौ तिष्ठति गच्छतीति विशेषश्रुत्या विशेषो गम्यत इति । कथं पुनरियं विशेषश्रुतिस्तिष्ठति गच्छतीति ? । नैवेयं केवला विशेषश्रुतिः किं तु पूर्वपदापेक्षया विशेषप्रत्ययहेतुत्वाद्विशेषश्रुतिरित्युच्यते । भवतु वा पदादेवोभयम् । एतस्मादेव (वा) गोशब्दादुभयं गम्यते क्रिया च तत्साधनं च, यथा-नोपसर्जनभावस्यानियमेन, यदायं गोशब्दो गोत्वनिमित्तो गोत्व-

(१) पदसञ्ज्ञाः-पा० १ पु० । (२) नामसंगृहीताः-पा० १ पु० ।

योगाद्गौरिति तदा गोशब्दात् प्रधानं साधनं गौर्गम्यते। क्रिया त्वङ्गभूता विशेषकत्वात्। यदा पुनः क्रियाप्रधानं पदं तदा गोर्भावो गोत्वमिति। तदा गौरङ्गभूता विशेषकत्वाद्गम्यते प्रधानं गोत्वमिति। तदेवं प्रधानोपसर्जनभावस्यानियमेन गोत्वमिति च पदे गौरिति चोभयं गम्यत इति॥

तत्र प्रधानोपसर्जनभावमाश्रित्य तदर्थे व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः (१)। यस्मादयं गोशब्दो व्यक्त्याकृतिजातिष्वविनाभावेन वर्तमानासु प्रयुज्यते (२)। अविनाभावप्रवृत्तिश्च सन्निधिः। अतो न ज्ञायते किं व्यक्तिः पदार्थ उताकृतिरुत जातिरिति—

**याशब्दसमूहत्यागपरिग्रहसङ्ख्यावृद्ध्युपचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद्व्यक्तिः॥ ६१॥**

शब्दस्य प्रयोगसामर्थ्यात् पदार्थावधारणमिति प्रयोगप्रदर्शनार्थं याशब्दादिसूत्रम्। नामी याशब्दादयः (इति) जातौ प्रयुज्यन्ते, कस्मादभेदात् एका जातिस्तस्या विशेषणमनर्थकम्। या गौस्तिष्ठतीति या गौर्निषण्णेति। एवं शेषेषु। आकृतेरप्यभिधायकमेतन्न भवति। निष्क्रियत्वादाकृतेः न हि निष्क्रिया गच्छति तिष्ठति भवति चेति। एवं सर्वत्र। यस्य यानेन विशेषणेन (३) तिष्ठत्यादिना योगस्तं गोशब्दोऽभिधातुमर्हतीति। कुतः विशेषणविशेष्यभावस्यैकविषयत्वात्। यदि गोशब्दस्य तिष्ठतिशब्दस्य चैकमभिधेयं भवति ततो गो-

(१) अस्य वाक्यस्य सूत्रत्वं क्वचिद्दृश्यते।
(२) प्रवर्तमानासु प्रयुज्यते—पा० १ पु०।
(३) विशेषेण—पा० १ पु०।

शब्देन धर्मान्तराणि निराक्रियन्ते तिष्ठतिशब्देन च क्रियान्तराणीति विशेषणविशेष्यभावापन्नयोस्तिष्ठतिगोशब्दयोः सामानाधिकरण्यं युज्यते अन्यथा नेति ।

द्रव्यं व्यक्तिरिति हि नार्थान्तरं तिष्ठतिशब्दसन्निहितेन(१) गोशब्देन व्यक्तिरभिधीयत इति तत्प्रतिषेधार्थम्—

न तदनवस्थानात् ॥ ६२ ॥

न तदनवस्थानादिति सूत्रम् । नानेन गोशब्देन व्यक्तिमात्रं शुद्धमुच्यते । यद्ययं व्यक्तिमात्राभिधायकोऽभविष्यत् तेन यस्यां कस्यां चिद्व्यक्तौ प्रत्ययोऽभविष्यदिति सूत्रार्थः । यदि व्यक्तिर्न पदार्थः कथं या गौस्तिष्ठतीत्यादिप्रयोगः ? । निमित्तादतद्भावे ऽपि तदुपचारः ।

क पुनर्निमित्तादतद्भावे ऽपि तदुपचारो दृष्ट इति तस्योपपादनार्थं सहचरणादिसूत्रम्—

सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः ॥ ६३ ॥

अतद्भावे ऽपि तदुपचार इति । अतच्छब्दस्य तच्छब्देनाभिधानमुपचारो यथा यष्टिकाशब्देन द्रव्यविशेषोऽभिधीयत इति यष्टिकाशब्दात्तु पुनः साहचर्याद्ब्राह्मणविशेषो (२) ऽभिधीयते । यथा यष्टिकाः प्रवेशयेति । एवं सर्वत्र । किं पुनरत्रोपचारबीजं यष्टिका ब्राह्मण इति । न ह्युपचारबीजमन्तरेणोपचारो लभ्यते । ननूक्तं साहचर्यमिति ? साहचर्यं नाम यष्टिकया नित्यसम्बन्धः ? यष्टिकासम्बन्धाच्च यष्टिका-

(१) तिष्ठति सहितेन–पा० १ पु० ।
(२) ब्राह्मणो–पा० ६ पु० ।

षानिति स्यान्न यष्टिकेति । यष्टिकावानिति चायं शब्दो मुख्य एवेति । तस्मादुपचारबीजमन्यद्वक्तव्यमिति । यष्टिकायां तावदयं यष्टिकाशब्दो जातिनिमित्तः यष्टिकात्वं जातिः सा यष्टिकायां वर्त्तते तया यष्टिकात्वयुक्तया यष्टिकया ब्राह्मणस्य योगः साहचर्यात् संयुक्तसमवेतां जातिं ब्राह्मणेऽध्यारोप्य ब्राह्मणं यष्टिकेत्याह । एवं शेषाण्युपचारबीजानि स्वयमुत्प्रेक्षणीयानीति ॥

आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः ॥६४॥

यदि तर्हि गौरिति पदस्य न व्यक्तिरर्थः अस्तु तर्ह्याकृतिः ( १ ) तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः । आकृतिः पदार्थः कस्मात् ? तदपेक्षत्वात् सत्त्वव्यवस्थानस्य गौरश्वः पुरुष इत्येवमादि ( २ ) सत्त्वव्यवस्थानमाकृत्यपेक्षं सिद्ध्यति यदपेक्षा च सत्त्वव्यवस्थानसिद्धिः स गोशब्दस्य विषय इति । अत्रापि तदेवोपस्थितं न तदनवस्थानादिति । यस्य च जात्या योगः स गोशब्दस्य विषयो नाकृतिर्जातियोगात् । कस्य पुनर्जात्या योगः ? नियतावयवव्यूहस्यावयविनः—नियतोऽवयवव्यूहो यस्य भवति स नियतावयवव्यूहः—अन्यपदार्थेन बहुव्रीहिणाऽवयव्यभिधीयत इति ॥

व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः ॥ ६५ ॥

अस्तु तर्हि जातिः पदार्थः व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् (३) प्रोक्षणादीनां मृद्गवके जातिः । यस्मान्मृद्गवके व्यक्त्या-

( १ ) कस्मात्-इत्यधिकम् ६ पु० ।
( २ ) इत्यादि-पा० १ पु० ।
( ३ ) व्यक्त्याकृत्योरप्यप्रसङ्गात्-पा० १ पु० ।

कृती स्तः न च तत्र प्रोक्षणादीनि प्रयुज्यन्ते । न हि गामानय गां देहीति मृद्गवके सम्प्रतिपत्ती भवतः । यदभावात्तत्रासम्प्रत्ययः ॥ गोशब्दस्यार्थः । कस्याभावात्तत्रासम्प्रत्ययो ? जातेः ।

अथ मृद्गवके कस्माद्गोत्वं न जातिः ? यस्मान्मृद्गवको गौर्न भवति, यश्च गौर्न, न तत्र गोत्वं, वर्त्तते यथाऽश्व इति । अथ मृद्गवकः कस्माद्गौर्न भवतीति अत एव गौर्न भवति यस्मान्मृद्गवक इति । न चायं युक्तः प्रश्नो मृद्गवकः कस्माद्गौर्न भवतीति । किं कारणम् ? प्रतिपत्तिबाधितत्वात्—प्रबलप्येनमर्थं प्रतिपद्यते नायं गौरिति । प्रतिपत्त्या च प्रश्नो बाध्यत इति । अथ मृद्गवके गोशब्दः कुतः ? आकृतिसामान्यात् चित्रादिवदिति । सर्वगतेति चेत् ?—अथ मन्यसे सर्वगता जातिः सोत्पद्यमानेन यथा गवा सम्बध्यते तथा मृद्गवकेनापीति अस्ति मृद्गवके गोत्वं—? । नानभ्युपगमात् केन सर्वगतत्वं जातेरभ्युपगम्यते, अपि तु स्वविषये सर्वत्र वर्त्तत इति सर्वगतेत्युच्यते । कः पुनर्गोत्वस्य स्वोविषयः ? । यत्र गोत्वं वर्त्तते । क्व पुनर्गोत्वं वर्त्तते ? यत्र गोत्वनिमित्तोऽनुवृत्तप्रत्ययो भवति । क्व पुनरनुवृत्तप्रत्ययं गोत्वं करोति ? यत्तस्य साधनं, कः पुनर्निसे गोत्वे गोः साधनार्थः ? यत्तेन व्यज्यते । न हि ककुदादिमदर्थव्यतिरेकेण गोत्वस्य अभिव्यक्तिरस्ति(१) ।

न हि पिण्डेभ्योऽर्थान्तरं गोत्वं पिण्डान्तरालेऽप्यदर्शनादिति केचित् । न विकल्पानुपपत्तेः पिण्डान्तरालेऽप्यदर्शनादिति(२)ब्रुवाणः पिण्डान्तरालं पर्यनुयोज्यः । किमिदं पिण्डान्तरालं किमाकाशम् आहो अभाव उत द्रव्यान्त-

(१) व्यक्तिरिति—पा० १ पु० । (२) अग्रहणादिति—पा० ६ पु० ।

रम् ?। यथाकाशम् न तत्र गोत्वं न ह्याकाशं गौरिति । एतेनाभावो द्रव्यान्तरं च व्याख्यातम् । विशेषप्रत्ययानामनाकस्मिकत्वात् च । अयं च पिण्डप्रत्ययव्यतिरेकभाक् प्रत्यय उपजायमानो निमित्तान्तराद्भवति दृष्टा खलु पिण्डप्रत्ययव्यतिरेकभाजां प्रत्ययानां निमित्तान्तरादुत्पत्तिः । यथा वस्त्रचर्मकम्बलेषु नीलप्रत्यय इति । आकृतिसामान्यादिति चेत् ?—अथ मन्यसे सत्यमयमस्तु पिण्डव्यतिरेकनिमित्तादनुवृत्तिप्रत्ययो भवति, न पुनरस्य जातिर्निमित्तं अपि तु यच्छिरःपाणिपादाकृतिसामान्यं तस्मादनुवृत्तिप्रत्यय इति ?। न पिण्डवदसाधारणत्वादाकृतेः—यथैव पिण्डाः पिण्डान्तरवृत्तयो न भवन्ति तथाकृतिरपि एकपिण्डवर्त्तित्वात् पिण्डान्तरवर्त्तिनी न भवति । आकृतेः पिण्डान्तरवर्त्तित्वमभ्युपगम्यते नास्ति विवादोनार्थ इति । अथ पिण्डव्यतिरिक्तं सामान्यं नाभ्युपगम्यते तथाप्येकसामान्यनिराकरणात् समानप्रत्ययबीजमन्य(१)द्वक्तव्यं स्यात् । न ह्यसति सामान्ये समानप्रत्ययं पश्याम इति। असत्यपि सामान्ये दृष्टः सामान्यप्रत्यय इति चेत्?—अथ मन्यसे यथा सामान्येष्वसति सामान्यान्तरे ऽनुवृत्तप्रत्ययो दृष्टो गोत्वादिषु इदं सामान्यमिदं सामान्यमिति—तस्मादनैकान्तिकत्वादनुवृत्तिप्रत्ययोऽसाधनमर्थान्तर(२)(निमित्त)प्रतिपादन इति ?। नानभ्युपगमात्—न यथा गोत्वघटत्वाश्वत्वेषु निर्निमित्तः सामान्य(३)प्रत्ययोऽभ्युपगम्यते तस्मादनुत्तरमेतत् । सूत्रव्याघात इति चेत् ?—यदि मन्यसे सामान्येष्वपि सामान्यप्रतीतिं ननु सूत्रव्याघातः "सामान्यविशेषेषु सामान्यविशेषाभावात् तत एव ज्ञानम्" इति ?* । न सूत्रार्थापरिज्ञानात्—अयं

(१) सामान्यमन्य-पा० १ पु० ।

(२) ससाधारणमर्थान्तर-पा० १ पु० । (३) समान-पा० १ पु० ।

सूत्रार्थो यथा द्रव्यमिति प्रत्ययो द्रव्यत्वविशेषणो द्रव्ये भवति न पुनः सामान्यविशेषेष्वेवमिति । न पुनरयं सूत्रार्थो निर्निमित्तोऽनुवृत्तिप्रत्यय इति । किंनिमित्तमिति चेत् ?—अथ मन्यसे गोत्वादिष्वनुवृत्तिप्रत्ययस्य किं निमित्तं यतः सामान्यमिति भवति ? कुतः सामान्यमिति भवति ? अनेकार्थसमवायात्—यथा गोत्वमनेकार्थसमवायि तथाश्वत्वादीन्यनेकार्थैस्तैस्समवायस्य समानत्वात् गोत्वादिष्वनुवृत्तिप्रत्यय इति । पाचकादिशब्दवदिति चेत् ?—अथ मन्यसे यथा पाचकादिशब्दा अनुवृत्तप्रत्ययाश्च भवन्ति न च पाचकत्वं नाम सामान्यविशेषोऽस्ति तथा गवादिष्वनुवृत्तप्रत्यया इति ? न हेत्वर्थापरिज्ञानात्—विशेषप्रत्ययानामनाकस्मिकत्वादित्यस्य हेतोः पिण्डप्रत्ययव्यतिरिक्तस्य प्रत्ययस्य निमित्तान्तरादुत्पाद इत्ययमर्थः न पुनः सर्वोऽनुवृत्तिप्रत्ययः सामान्यादेव भवतीति । एवं सति पचनक्रियायां यत् प्रधानं साधनं तत्पाचकशब्देनोच्यते । तच्च प्राधान्यं पाचकान्तरेऽप्यस्तीति न दोषः ।

यद्यनेकानुवृत्ति गोत्वं तत् किं प्रतिपिण्डं परिसमाप्त्या वर्त्तते अथैकदेशेनेति ? । किं चातः ?—यदि प्रतिपिण्डं परिसमाप्त्या वर्त्तते पिण्डवदसाधारणत्वान्न सामान्यं भवितुमर्हति ? अथैकदेशेन वर्त्तते ? तथापि नैकमनेकत्र वर्त्तते किन्त्वनेकमनेकत्रेति तस्मात्(१) प्रदेशाः सामान्यस्य वर्त्तन्त इति । ये ते(२)एकदेशाः सामान्यस्य पिण्डेषु प्रत्येकं वर्त्तन्ते ते किं सामान्यात्मका उत नेति । यदि सामान्यात्मका एकमेकत्र वर्त्तत इति प्राप्तम्, न चैकमनेकत्र वर्त्तमानं सामान्यमिति युक्तं वक्तुम्(३) अथासामान्यात्मकाः ?

* वै. सू ५ अ. ८ आ. १ सू. । (१) यस्मात्—पा० १ पु० ।
(२) येनैते—पा० १ पु० । (३) युक्तमुक्तम्—पा० १ पु० ।

शून्यमभिधानम्–सामान्यस्यैकदेशाः प्रत्येकं वर्त्तन्ते इति तैरपि देशैः सामान्यं पूर्ववद्वर्त्तेत इति पूर्ववत्प्रसङ्गः । न चान्या गतिरस्ति तस्मान्नानेकवृत्ति सामान्यमिति ? न विकल्पानभ्युपगमात्–नायं विकल्पोऽस्ति गोत्वं प्रत्येकं पिण्डेषु परिसमाप्य(वर्त्त)ते अथ प्रदेशेन वर्त्तत इति, तस्माद्विकल्पानभ्युपगमादप्रश्नोयम् । कस्माद्गोत्वस्यावयविसमुदायत्वानभ्युपगमात् । न गोत्वमवयवि न समुदायः, समुदायस्य भाग एकदेशशब्दः अवयविनश्चावयवे यदा न किञ्चित्परिशेषमभिधीयते तदावयविनोऽवयवानपेक्ष्य कृत्स्नशब्दः समुदाये च समुदायिनोपेक्ष्य । न च गोत्वमवयवी न समुदायः तस्मान्न कृत्स्नैकदेशशब्दौ स्तः । न चेत्तैतौ शब्दौ स्तः तस्माद्गोत्वं किं कार्त्स्न्येन वर्त्तते उतैकदेशेनेति न युक्तः प्रश्नः । उक्तं चात्र एकमनेकत्र वर्त्तत इति प्रतिजानानो नानुयोक्तव्यः । कस्मादुभयेन व्याघातादिति । कथं तर्हि गोत्वं गोषु वर्त्तते ? आश्रयाश्रयिभावेन । कः पुनराश्रयाश्रयिभावः ? समवायः तत्र वृत्तिमद्गोत्वम् । वृत्तिः समवाय इतीहप्रत्ययहेतुत्वादित्युक्तम् (न गोत्वे) गव्यगवित्वयभावादिति चेत् ?–अथ मन्यसे यदिदं गोत्वं गोप्वनुवृत्तिप्रत्ययकारणं तत् किं गावि वर्त्तते आहोस्विदगवि, यदि तावद्गावि प्राक् गोत्वयोगाद्गौरेवासाविति व्यर्थं गोत्वम् । अथागावि (न) अश्वादावपि गोत्वयोगाद्गौः प्राप्नोति । न चान्या गतिरस्ति तस्मान्न गोत्वादनुवृत्तिप्रत्यय इति ? न विकल्पानभ्युपगमात्–न गावि गोत्वं नागवि प्राक् गोत्वात्त्वासौ गौर्नाप्यगौरिति । किं कारणम् ? उभावेतौ विशेष्यप्रत्ययौ न विशेषणसम्बन्धमन्तरेण भवतः न च प्राक् गोत्वयोगाद्वस्तु विद्यते न चाविद्यमानं गौरिति अगौरिति वा शक्यं व्यपदेष्टुम् यदैव वस्तु तदैव गोत्वेनाभिसम्बद्ध्यत

इत्यनास्पदो विकल्पः । एतेन सत्तासम्बन्धस्य सदसद्विकल्पो व्याख्यातः । न सतः सत्तासम्बन्धः नासतः । यदैव तद्वस्तु तदैव सत्तया सम्बद्धमिति सदसदाश्रयो दोषोऽनुपपन्न इति तस्मादुपपन्ना जातिः । न चासौ मृद्गवक इति । यदभावात् तत्रासम्प्रत्ययः स पदार्थ इति ॥

नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः ॥ ६६ ॥

नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः । जातेरभिव्यक्तिराकृतिव्यक्ती अपेक्षेत व्यक्त्याकृती इति प्राप्ते प्राधान्यादाकृतेः पूर्वनिपातः । किं पुनः प्राधान्यम् ?आकृतिविशेषणत्वं व्यक्तेः यस्माद्व्यक्त्या विशेष्यमाणा आकृतिर्जातिर्लिङ्गं भवति तस्मात् प्रधानमाकृतिः न चागृह्यमाणायामाकृतौ व्यक्तौ च जातिमात्रं शुद्धं शक्यं गृह्यते तस्मान्न जातिरेव पदार्थः । न च वै पदार्थेन न शक्यं भवितुम् ।

कस्तर्हि पदार्थो ? व्यक्त्याकृतिजातयस्तु पदार्थः ॥

व्यक्त्याकृतिजातयस्तु पदार्थः ॥ ६७ ॥

तुशब्दो विशेषणार्थः । किं विशिष्यते प्रधानोपसर्जनभावस्यानियमेन पदार्थत्वम्—यदा भेदविवक्षा विशेषगतिश्च गौस्तिष्ठति गौर्निषण्णेति तदा व्यक्तिः पदार्थः अङ्गं जात्याकृती, जातावाकृतौ च स्थानगमनादीनामभावाद्यत्र सम्भवः स पदार्थ इति । यदा पुनर्भेदो न विवक्षितः सामान्यावगतिश्च तदा जातिः पदार्थः यथा गौर्न पदा स्प्रष्टव्येति आकृतेश्च प्रधानभाव उत्प्रेक्षितव्य इति स्वयमुत्प्रेक्ष्य इत्य(यम)र्थः । क्व पुनराकृतेः प्राधान्यं दृष्टं ? यथा पिष्टकमय्यो गावः क्रि-

यन्तामिति । तदेतद्बहुलं प्रयोगेषु प्रधानोपसर्जनभावः स्वगुणेभ्य(न) इति ।

न व्यक्त्याकृतिजातयः पदार्थ इति केचित् कुतः विकल्पानुपपत्तेः सदित्येतदेव व्यापकत्वादुपादाय चिन्त्यते सदित्यनेन पदेन पुनर्जातिरभिधीयते पिण्डो वा सम्बन्धो वा जातिमान् वा पदार्थः । तत्र न तावज्जातिरभिधीयते भेदार्थैरभिन्नविभक्तिकत्वात् यद्ययं जातिवाचकः सच्छब्दो भवति सद्द्रव्यमिति भेदवाचिना द्रव्यशब्देन सहसामानाधिकरण्यं न प्राप्नोति न हि भिन्नार्थवाचकानां सामानाधिकरण्यं पश्यामः न हि गवाश्वमिति सामानाधिकरण्यं दृष्टम् । अथ द्रव्यादिदृत्तित्वात्सत्ताया एव द्रव्यादिशब्दैः सह सामानाधिकरण्यम् तथापि पारतन्त्र्यात्सत्ताया गुणत्वं गुणगुण्यभिधायिनोश्च शब्दयोः सामानाधिकरण्यं न दृष्टमिति यथा शङ्खस्य शौक्ल्यमिति । एतेन सम्बन्धो व्याख्यातः । सच्छब्दः पिण्डानां वाचको भविष्यतीति न युक्तं पिण्डानामानन्त्यात् न ह्येकस्य शब्दस्यानेकद्रव्यगुणप्रपञ्चेन सम्बन्ध आख्यातुं शक्यः न चानाख्याते शब्दार्थसम्बन्धे शब्दादर्थप्रतिपत्तिर्युक्ता स्वरूपमात्रप्रतीतेः व्यभिचाराच्च । सच्छब्दश्रवणाच्च द्रव्यगुणकर्माणीति परिप्लवमाना बुद्धिरवतिष्ठते । न च यस्मादभिधानात् परिप्लवते बुद्धिस्तदभिधानमिति युक्तं वक्तुम् तस्मात् सच्छब्दो भेदानां न वाचक इति । जातिमन्मात्राभिधायकोऽपि सच्छब्दो न भवति कस्मादस्वतन्त्रत्वात् न हि सच्छब्दात्स्वभेदा घटादयो गम्यन्त इति तद्द्रव्यघटादिभेदानाक्षेपात् सामानाधिकरण्याभाव. । अथवा अस्वतन्त्रत्वा-

दिति सच्छब्दः प्राधान्येन सत्तायां वर्त्तते । तत्र वर्त्तमान-
स्तद्व(दि)त्सूपचर्यते यच्च यत्र वर्त्तमानमन्यत्रोपचर्यते न तत्त-
स्याभिधायकं प्रस्थशब्दवदिति । उक्तं चात्र । किमुक्तम् ? तद्व-
तामानन्त्यात् न सच्छब्देनाभिधानं युक्तमिति । तद्वति च न
गुणसारूप्यात् प्रत्ययसङ्क्रान्तिः—यथा स्वामिशब्दस्य भृत्ये, न
गुणोपरागात्—यथा नीलः स्फटिक इति, क्रमदृष्टयभावात्
युगपदसम्भवाच्च । अयथार्थज्ञानोत्पत्तिप्रसङ्गाच्च । तस्मान्न जा-
तिमन्यात्राभिधायकोऽपि । असाधारणविशेषणविशेष्याभिधायको
भविष्यतीति न युक्तम् । अन्यत्र प्रत्ययाभावप्रसङ्गात् । न चा-
न्या गतिरस्ति तस्मादन्यार्थापोहकृच्छ्रुतिरिति । अन्यपदार्था-
न्तरा(१)पोहं हित्वा स्वार्थे कुर्वती श्रुतिरभिधत्त इत्युच्यत इति ।

अत्रास्माभिर्व्यक्त्याकृतिजातयः पदार्थ इति प्रधानो-
पसर्जनभावस्यानियमेन व्यवस्थापितमेकान्तवादिनश्चैते दोषा
इति । न चैते दोषाः । कथमिति ? यत्तावत्सत्ताशब्दः
सत्ताया न वाचक इति ? तन्न व्याघातात्—सत्ताश-
ब्दो न सत्तावाचक इति व्याहतमुच्यते । कथं वा तद्-
वाचकत्वे सति सत्ताशब्द इत्यभिधीयते । भवदभिप्रायेणा-
भिधीयत इति चेत् ?—अथ मन्यसे नैव नः सिद्धान्ते सत्ता-
दिशब्दाः सन्ति, किं तु भवद्भिः सत्ताशब्दो द्रव्यगुणकर्म-
शब्दा इति च परिकल्प्य व्यवहारः क्रियते । ततोऽस्माभि-
रपि युष्मदभिप्रायानुविधानेन सत्ताशब्दा इति वाच उच्चा-
र्यन्त इति ?। न व्याघातानिवृत्तेः । सदित्येवमादीनि पदा-
नि लोकप्रसिद्धानि केष्वर्थेषु वर्त्तन्त इत्युभयोर्विचारः ।
वयं तु ब्रूमः सत्ताशब्दः सत्तायां वर्त्तते त्वं पुनर्नेत्यपि स-

(१) अन्यशब्दार्थान्तरा—पा० १ पु० ।

ताशब्दो न सत्तायामिति । एवं ब्रुवाणो मया विरोधेन प्रत्यवस्थीयते विरोधोद्धारं चाकृत्वा स्वसमयो मयाभिधीयत इति ब्रुवाणो न व्याघातमतिवर्त्तते ।

यच्चेदमुच्यते त्वया त्वया परिकल्पिताः सत्तादिशब्दा इति ? तदपि न, परिकल्प्यविषयानभिधानात्—परिकल्प्यस्य च विषयोऽतथाभूतस्य तथाभाविभिः सामान्ये सत्यध्यारोपिततद्धर्मणः प्रधानार्थप्रतिपत्तिः यथा स्थाणौ पुरुष इति । यदि चामी शब्दाः परिकल्पिता भवन्ति प्रधानमेषां वाच्यम् । न हि निष्प्रधानं परिकल्प्यम् । यत्पुनरेतद्भेदाऽर्थैकाभिन्नविभक्तिकत्वादिति । तन्न, समानार्थापरिज्ञानात् (१) न ब्रूमः सत्ताशब्देन द्रव्यशब्दस्य सामानाधिकरण्यम्, अपि तु सत्तायाः प्रधानसाधनवाचिना सच्छब्देन द्रव्यगुणकर्माण्यभिधीयन्ते ( इसत्र ) गुणकर्मशब्दैरपीतरेतरविशेषणविशेष्यभावावच्छिन्नान्येव । एवं च सति युक्तं सामानाधिकरण्यमुभयोः सद्द्रव्यशब्दयो(२)रेकविषयत्वात् यदा पुनरयं सत्ताशब्दः सत्ताप्रधान एवाङ्गभूतं साधनमभिधत्ते न तदा सामानाधिकरण्यम् द्रव्यस्य सत्तेति भवति । तस्मात् सामानाधिकरण्यानुपपत्तिरदोषः विभक्तिभेदनियमाद्गुणगुण्यभिधायिनोः सामानाधिकरण्यासिद्धिः सद्द्रव्यशब्दयोरिति एतदनेन प्रत्युक्तम् ।

एतेन सम्बन्धो व्याख्यातः । कथमिति न ? सच्छब्देन सम्बन्धोऽभिधीयते अपि तु सम्बन्धिशब्देनैव, सम्बन्धश्च गुणः न सच्छब्दो गुणशब्दः, न च गुण-

( १ ) सामानाधिकरण्यार्थापरिज्ञानात्-पा० १ पु० ।
( २ ) सच्छब्दद्रव्यशब्दयोः-पा० १ पु० ।

शब्देनैव द्रव्यवाचिनः शब्दस्य सामानाधिकरण्यमस्तीति । यत्पुनरेतदानन्त्या(१)न्न जातिशब्दो भेदानां वाचक इति ? । कश्चैवमाह जातिशब्दो भेदानां वाचक इति, वक्तृणां स्वयम्प्र(युक्तां) वाचोयुक्तिं भवान् प्रतिषेधति । यदि तर्हि भेदानां न वाचकः कथं सच्छब्देन द्रव्यगुणकर्माण्यभिधीयन्ते(२) ? । न चायं भोः सच्छब्दो जातिशब्दः अपि तु भेदशब्द एवायम् । भेदशब्देन च भेद एवाभिधीयते इति न किञ्चिद्बाध्यते । कथं न बाध्यते ? यदा सच्छब्द एको भेदानामानन्त्यं तदवस्थमेव । न चैकस्यानेकेन सम्बन्धः शक्य आख्यातुम् । न चानाख्याते सम्बन्धे शब्दार्थप्रतिपत्तिर्युक्तेति ? न केवलानामनभिधानात्—यो हि सच्छब्देनाविशेषणानि द्रव्यगुणकर्माण्यभिधीयन्त इत्यभिधत्ते तं प्रत्येष दोषः । अस्माकं तु द्रव्यगुणकर्माणि सत्ताविशेषणान्यभिधीयन्ते।यत्र यत्र सत्तां पश्यति तत्र तत्र सच्छब्दं प्रयुङ्क्ते एका च सत्ता तत्प्रत्ययस्यानुवृत्तेः तस्माद्भेदानामानन्त्यं न दोषः । कश्चायमेवम्भूतः साध्यसाधनभावः शब्दं पक्षयसि आनन्त्यादिति वस्तुधर्मं हेतुत्वेनाभिधत्स इति । अथ भेदा एव जातिशब्दावाच्यत्वेन पक्षीक्रियन्ते ? तथापि नान्वयी न व्यतिरेकी च दृष्टान्तोऽस्तीत्यहेतुरानन्त्यादिति । अथाप्येकदेशान् पक्षीकृत्यानन्त्यादिति हेतुः एकदेशो दृष्टान्त इति ? अयमपि न, विरोधात् । एवं च सति न कश्चित्पदार्थो वाच्यः न कश्चिच्छब्दो वाचक इति वाच्यवाचकभावनिवृत्तौ विशेषणमनर्थकम् एते न वाच्या एते न वाचका इति ।

---

(१) पुनरेतदस्त्यानन्त्या—पा० १ पु० ।
(२) उच्यन्ते—पा० १ पु० ।

यत्पुनरेतद्व्यभिचारादिति ? न, व्यभिचारविषयापरिज्ञानात्—व्यभिचारी हि नाम स ज्ञेयः यः स्वविषयसजातीयवृत्तित्वे सत्यन्यत्र वर्त्तते, न पुनरयं सच्छब्दः स्वविषयव्यतिरेकेणान्यत्र वर्त्तते । तस्मादस्थाने व्यभिचारदेशनेति । हेतुभावानभ्युपगमाच्च । केन चात्र हेतुरभिधीयते द्रव्यं गुणः कर्म सत्त्वादिति । तस्मादयुक्तमेतदपि । भेदवाचकत्वप्रतिषेधाद् द्रव्यसच्छब्दयोः सामानाधिकरण्यमिति न वक्तव्यम्, व्याघातात् । न च कश्चिच्छब्दो द्रव्यवाचकः द्रव्यसच्छब्दयोश्च सामानाधिकरण्यमिति व्याहतम् ।

यत्पुनरेतत् तद्गतो नास्त्यन्यत्वादिति ? न किल(१)सच्छब्देन तद्भेदा घटादयो गम्यन्ते तद्द्रव्यघटादिभेदानाक्षेपात् सामानाधिकरण्याभाव इति ? । तत्र उक्तोत्तरत्वात्—उक्तोत्तरमेतत् सद्द्रव्यशब्दयोरेकविषयत्वात् सामानाधिकरण्यमिति । तद्द्रव्यघटादिभेदानाक्षेप इति चायुक्तम् सच्छब्देन सत्तासाधनानां द्रव्यगुणकर्मणामाक्षेपात् । सत्ताशब्देन द्रव्यगुणकर्माणि नाक्षिप्यन्ते न पुनः शब्देन शक्यते वक्तुं(२) सत्ताशब्देनापि गुणभूतानि गम्यन्त इति । सदिति चायं अभिधानशब्दः कस्तस्याभिधेयो योऽस्मात् प्रतीयते स तस्यार्थ इति । कोऽस्यार्थः ? विभज्यते सत्ता तद्योगोऽर्थान्तरमिति त्रयोऽर्थाः । तत्र प्रधानोपसर्जनभावविवक्षायां प्रधानं साधनं गम्यते । अङ्गं सत्ता च तद्योगश्च । किंकृतः प्रधानाङ्गभावः ? अर्थकृतः—यदा सत्ता किञ्चित्कुरुते तदा सत्ता विशेषणं पदार्थमुपादाय किञ्चित् करोति तत्प्रधानम् । अङ्गं सत्ता प्रधानप्रत्ययहेतुत्वा-

(१) न खलु—पा० १ पु० ।
(२) सत्त्वमुक्तम्—पा० १ पु० ।

त । यस्मात् सत्तया पदार्थो विशेष्यते अङ्गहीने प्रत्ययनिवृत्तेः यत्र तदङ्गं सत्तादिकं नास्ति न तत्र सदिति प्रत्ययः । तदेवं तद्वद्घटादिभेदानात्सेपादित्ययुक्तम् ।

यत्पुनरेतत्सच्छब्दः सत्तायां प्राधान्येन वर्त्तते इति तत्र वर्त्तमानस्तद्वत्युपचर्यते इति ? तत्र सच्छब्दविषयापरिज्ञानात्—न भवता सच्छब्दस्य विषयो व्यज्ञायि, क एवमाह सच्छब्दः सत्तायां प्राधान्येन वर्त्तते इति, यथा च सच्छब्दस्य द्रव्यगुणकर्माणि सत्तासाधनमात्राद्विषय इति तथा चोक्तम् । एतेन भेदानामानन्त्यं प्रत्युक्तम् । सच्छब्दस्य विषयः सत्तासाधनं विषयश्च सत्तासाधनभूत एक एवेति ।

यत्पुनरेतत्तद्वति च न गुणमारूप्यात् प्रत्ययसङ्क्रान्तिर्यथा स्वामिशब्दस्य भृत्य इति । अस्यार्थः स्वाम्यनुकारित्वाद्भृत्ये स्वामिशब्द इति ? । एतत्तु न बुद्ध्यापहे प्रत्ययानां सङ्क्रान्तिरिति । यदि स्वामिप्रत्ययविषयत्वं तत्र प्रत्ययसङ्क्रान्तिः न हि स्वामिप्रत्ययो भृत्ये भवति, केवलं गुरुतां नियतां वा सम्पश्यन् स्वामिशब्दं गुणभूतं तत्र प्रयुङ्क्ते । तथा च भृत्यः स्वाम्यर्थकारित्वात्(१) भृत्यः स्वामीत्युपचर्यते(२) न पुनरेवं सत्ताशब्दः कदाचिदपि द्रव्यादिषु वर्त्तत इति । यदा तु सतां भावः सत्तेति तदा सतां विशेषकत्वादगुणभूतानां सत्ताशब्देनाभिधानं विशेषकत्वमुपचारः । एतेनैव गुणोपरागाद्यथा नीलः स्फटिक इति प्रत्युक्तम्(३)।

यत्पुनरेतत् क्रमवृत्त्यभावाद्युगपदसम्भवाच्चेति । अस्यार्थः । सत्ताशब्दः सत्तायां किल वर्त्तित्वात् तद्वति वर्त्तत इति । न चैवं

(१) करणात्—पा० ६ पु० ।   (२) उच्यते—पा० ६ पु० ।
(३) एतत् प्रत्युक्तम्—पा० १ पु० ।

पश्यामः युगपदपि न सम्भवति सत्ताप्रत्ययश्च द्रव्यप्रत्ययश्च न युगपद्भवतः ? । एतदपि न, उक्तोत्तरत्वात्—उक्तोत्तरमेतद् नात्र क्रमो न युगपत्प्रत्ययः सत्प्रत्ययस्य साधनविषयत्वात् । एतेनायथार्थज्ञानोत्पत्तिप्रसङ्गादिति प्रत्युक्तम् । एवं हि कुहेतुप्रतानिरासाद्व्यवस्थितं व्यक्त्याकृतिजातयः पदार्थ इति ।

नजातिशब्दो भेदानां वाचक इति च विशेषणानर्थक्यम् न हि कश्चिच्छब्दो भवता भेदानां वाचकत्वेनाभ्युपगम्यते विशेषणं नाम विशेष्ये (च) सति सामान्यप्रतिपत्तौ (च) भवति नास्य किञ्चिद्विशेष्यमस्ति । न च जातिशब्दस्य कश्चित्पदार्थो वाच्योऽभ्युपगम्यते तस्माद्विशेषणानर्थक्यम् । विरोधाच्च यदि चायं जातिशब्दो भेदानां वाचकोभविष्यदपि तर्हि जातिशब्द एव नाभविष्यत् न ह्यन्य(पदार्थ)वाचकानां तच्छब्दत्वं सम्भवति । कथं वा भेदवाचकत्वे सति जातिशब्द इत्युच्यते। यच्चोच्यते न जातिशब्दो भेदानां वाचक इति तथा तत् । को हि स्वस्थात्मा(१) जातिशब्दवाच्यान् भेदानभ्युपैति । यदि च जातिशब्दवाच्या भेदा न भवन्ति अन्यशब्दवाच्यास्तर्हि प्राप्नुवन्ति । अथान्यशब्दवाच्या अपि न भवन्ति ते न जातिशब्दवाच्या नान्यशब्दवाच्या इत्युभयावाच्यत्वे किमस्य विशेषणस्य सामर्थ्यं न जातिशब्दो भेदानां वाचक इति । अत एवं वक्तव्यं(२) न वाच्या भेदा अवाचकाः शब्दा इति । अथ मन्यसे परमतव्यपेक्षयैतदुच्यते न जातिशब्दो भेदानां वाचक इति । नानभ्युपगमात् न हि कश्चित्तान्त्रिकोऽस्ति यो जातिशब्दवाच्यान् भेदान् प्रतिपद्यते जातेरप्यवाचकत्वे व्याघातो जातिशब्द इति । न हि यो यस्यावाचकः स तच्छब्द इति शक्यं वक्तुम् न जातिशब्दो भेदानां

(१) सुस्थात्मा–पा० १ पु० । (२) वाच्यम्–पा० १ पु० ।

वाचक इति । कस्य तर्हि वाचकः भेदवाचकत्वप्रतिषेधादन्यवाचकत्वमायातम् । अथान्यवाचकत्वमपि नेष्यते व्यर्थं विशेषणं जातिशब्दो भेदानां न वाचक इति । सर्व एव शब्दा अर्थानां न वाचका इति युक्तं वक्तुम्(१) अथावाचकाः शब्दा अवाच्या अर्था इत्ययुक्तं चैतत् व्याघातात्—अवाचकाश्च शब्दा भवन्ति अवाचकत्वं च शब्दानां शब्देनैव प्रतिपाद्यत इत्यवाचकत्वे शब्दानां प्रतिज्ञाहेत्वोर्व्याघातः न हि जातिशब्दो भेदानां वाचक इति प्रतिज्ञाहेतुरानन्त्यादिति । उभयं च वचनात्मकमित्युभयस्यावचनात्मकत्वाद्व्याघातः(२) । शब्दांश्चावाचकान् प्रतिपद्यमानेन लोकप्रतिपादनोपायोऽन्यो वक्तव्यः । अन्यथाऽभ्युपगत(३) इति चेत् ?—अथ मन्यसे न यथा शब्दा अवाचका अभ्युपगम्यन्ते नाप्यर्था अवाच्याः अपि तु यो भवद्भिर्वाच्यवाचकन्यायोऽभ्युपगम्यते सोऽस्माभिर्निराक्रियते । अस्माकं तु शब्देनान्यापोहलक्षणा जातिरभिधीयत इति ? विशिष्य वक्तव्यम् यद्यन्यथा शब्दा अर्थानामभिधायका (भवन्ति) इति ? विशिष्य वक्तव्यम्—भवत्पक्षवत्सुस्नासादिव्यतिरेकेण जात्यादिशब्दा न जात्यादीनां वाचका इति । स्वरूपानभिधानाच । न च समानप्रत्ययकारणता(४)व्यतिरेकेण जातेः स्वरूपं निर्देष्टुं शक्यम् न चानुवृत्तिप्रत्ययः प्रत्याख्यातुं शक्यः । न च विशेषप्रत्ययेनाकस्माच्छक्यं भवितुं यतोऽयं प्रत्ययः सा जातिरिति नास्ति विवादः । एष तावद्यथाश्रुतिवाक्ये दोषः । अथ जातिशब्दावाच्यत्वेन

(१) युक्तमुक्तम्—पा० १ पु० ।
(२) अवाचकत्वाद्व्याघात—पा० ६ पु० ।
(३) अभ्युपगम—पा० ६ पु० ।
(४) कारणत्व—पा० १ पु० ।

भेदा अपि(१) पक्षीक्रियन्ते । एतस्मिन्नपि प्रतिज्ञार्थे यावन्त एते वाक्यदोषास्ते सर्वे प्रसज्यन्ते एवमेकदेशपक्षीकरणे ऽपि विशेषणविशेष्यभावानुपपत्तेः पूर्वदोषानुवृत्तिः ।

यदपीदमुच्यते द्रव्यसच्छब्दयोः सामानाधिकरण्यमिति? तदपि न, व्याघातात् । द्रव्यसच्छब्दयोश्च सामानाधिकरण्यं न च भेदवाचकाः शब्दा इति व्याहतम् । उपचारतो न व्याघात इति चेत् ?– अथ मन्यसे सद्द्रव्यशब्दावेतौ उपचारतोऽभिधीयेते। कथमिति ? द्रव्यशब्देनाद्रव्यव्युदासः सच्छब्देनासद्व्युदासः तावेतावसदद्रव्यव्युदासरूपेण प्रवर्त्तमानौ एकमर्थं ब्रुवात इति समानाधिकरणाविरयुच्यते मुख्यतस्तु न कश्चिद्विधानतः शब्दो वाचक इति ? न मुख्यासम्भवात् मुख्यतः सद्द्रव्यशब्दप्रयोगे सति तेन सामान्यादतथाभूत उपचार इति युक्तम्, न त्वेवं वादिनां प्रधानमस्ति । न च प्रधानमन्तरेणोपचारः सम्भवति । न चान्यापोहवादे उपचारो युक्तः उभयोः प्रधानशब्दत्वात् । यथा सिंहशब्दः सिंहे वर्तते ऽसिंहरूपव्युदासेन तथा माणवकेऽपीति तुल्यवृत्तित्वात् कस्मादुपचार इति ।

यत्पुनरेतदन्यशब्दार्थापोहः(२) शब्दार्थ इति ? तदयुक्तम् विधानशब्दार्थसम्भवे सत्याद्या प्रतिपत्तिः(३) यदि विधानशब्दार्थो भवति ततो विधीयमानशब्दार्थप्रतिपत्तौ सत्यां तस्यान्यत्र(४) प्रतिषेधः इत्युपपन्नः प्रतिषेधः यस्य पुनर्विधीयमानः पदार्थो नास्ति तस्याद्यां प्रतिपत्तिमन्तरेण कथं प्रतिषेधः(५) यावन्नेतरं न प्रतिपद्यते तावदितरं न प्रतिषेधतीति ।

(१) भेदा एव—पा० १ पु० । (२) अन्यार्थापोहः—पा० १ पु० ।
(३) प्रवृत्तिः—पा० १ पु० । (४) तस्माद्यत्र—पा० ६ पु० ।
(५) मन्तरेण कस्य प्रतिपत्तिमन्तरेण कस्य प्रतिषेधः—पा० ६ पु० ।

यथा गौरिति पदस्यार्थोऽगौर्न भवतीति यावच्च गां न प्रतिपद्यते, तावद् गवि प्रतिपत्तिर्न युक्ता यावच्च गां न प्रतिपद्यते तावदगवीत्युभयप्रतिपत्त्यभावः ।

यश्चायमन्यापोहः अगौर्न भवतीति गोशब्दस्यार्थः स किं भावोऽथाभाव इति ? यदि भावः किं गौरगौरिति ? यदि गौर्नास्ति विवादः, अथागौर्गोशब्दस्यार्थः ? अहो शब्दार्थकौशलम् । अभावस्तु न युक्तः प्रैषसम्प्रतिपत्त्योरविषयत्वात्, न हि गोशब्दश्रवणादभावे प्रैषो न वा सम्प्रतिपत्तिः, शब्दार्थश्च प्रतिपत्त्या प्रतीयते । न च गोशब्दादभावं कश्चित्प्रतिपद्यत इति ।

अन्यापोहश्च शब्दार्थ इत्ययुक्तम् अव्यापकत्वात्—यत्र द्वैराश्यं भवति तत्रेतरप्रतिषेधात्तदितरः प्रतीयते यथा गौरिति पदे गौः प्रतीयमानः अगौः प्रतिषिध्यमानः, न पुनः सर्वपद एतदस्ति, न ह्यसर्वं नाम किञ्चिदस्ति यत्सर्वपदेन निवर्त्येत । एकादिव्युदासाद् व्यापकावेति चेत् ?—अथ मन्यसे एकाद्यसर्वं तत् सर्वशब्देन निवर्त्यते ? । तन्न, स्वार्थापवाददोषप्रसङ्गात् । एवं सत्येकादिव्युदासेन प्रवर्त्तमानः सर्वशब्दः अङ्गस्य प्रतिषेधादङ्गव्यतिरिक्तस्य चाङ्गिनोऽनभ्युपगमात् अनर्थकः स्यात् । एवं सर्वे समुदायशब्दा एकदेशप्रतिषेधरूपेण प्रवर्त्तमानाः समुदायिव्यतिरिक्तसमुदायानभ्युपगमादनर्थकाः प्राप्नुवन्तीति । द्व्यादिशब्दानां च समुच्चयविषयत्वादेकादिप्रतिषेधे प्रतिषिध्यमानानामसमुच्चयात् द्व्यादिशब्दानामनर्थकत्वम् ।

क्रियारूपत्वाच्चापोहस्य स्वविषयो वक्तव्यः—अगौर्न भवतीति अयमपोहः किं गोविषयो वाऽगोविषय इति । यदि गोविषयः ? कथं गोर्गव्येवाभावः । अथागोविषय इति मन्यसे ? कथमन्यविषयादपो-

हादन्यत्र प्रतिपत्तिः न हि खदिरे छिद्यमाने पलाशे छिदा भवति । अथागोर्गावे प्रतिषेधः अगौर्गौर्न भवतीति ? । केन गोरगोत्वं प्रसक्तं यस्मातिषिध्यत इति । कथं वा गवि गोप्रतिपत्तिमन्तरेण प्रतिषेधः, न ह्युत्तरपदार्थप्रतिपत्तिमन्तरेण प्रतिषेधं पश्यामः । उक्तं चात्र आद्या प्रतिपत्तिर्न प्राप्नोतीति । आदिप्रतिपत्तिं चान्तरेण न प्रतिषेध इति ।

इतश्च न युक्तोऽपोहः विकल्पानुपपत्तेः—योऽयमगोरपोहो गवि, स किं व्यतिरिक्त आहोस्विदव्यतिरिक्त इति ? । यदि व्यतिरिक्तः ? किमाश्रितोऽनाश्रितो वेति । यद्याश्रितः आश्रितत्वाद्गुण इति गोशब्देन गुणोऽभिधीयते, न गौरिति, गौरित्युच्यतीति सामानाधिकरण्यं न प्राप्नुयात् । अथानाश्रितः ? केनार्थेन षष्ठी गोरपोह इति । अथाव्यतिरिक्तः ? गौरेवासाविति न किञ्चित्कृतं भवतीति ।

अयं चापोहः प्रतिवस्त्वेकोऽनेक इति वा वक्तव्यः । यद्येकोऽनेकगोसम्बन्धी तदा गोत्वं तादृगेव । अथानेकस्ततः पिण्डवदानन्त्यादाख्यानानुपपत्तेरर्थप्रसङ्गो न युक्तः ।

इदं च तावत्प्रष्टव्यो आपने भवान् किमयमपोहो वाच्योऽथावाच्य इति ? । यदि वाच्योऽनैकान्तिकः शब्दार्थः अन्यापोहः शब्दार्थ इति । अनवस्था वा–अथानपोहव्युदासरूपेणाभिधीयते अपोहस्तस्याप्यन्य इत्यनवस्था । अथावाच्योऽन्यशब्दार्थापोहं(१) करोतीति व्याहतम् । यदि च शब्दस्यापोहो नाभिधेयार्थः ? अभिधेयार्थव्यतिरेकेण स्वार्थो(२) वक्तव्यः । अथ स एवास्य स्वार्थः ? तथापि व्याहतम्—अन्यशब्दार्थापोहं स्वार्थे कुर्वती श्रु-

(१) शब्दार्थान्तरापोहं—पा० ६ पु० ।

(२) स्वार्थोऽभिधेयो वक्तव्यः—पा० १ पु० ।

तिरभिधत्त इत्युच्यते इति तस्य वाक्यस्यायमर्थः तदानीं भव-सम्पदनभिदधानोऽभिधत्त इति । अनेकार्थेति चास्य पदस्य द्व्यादिविषयत्वात् सामान्याधिगतौ विशेष आश्रयितव्यः न ह्यसति विशेषाश्रयणे सामान्यशब्दाद्विशेषप्रतिपत्तिर्युक्तेति । नीलोत्पलशब्दयोश्च प्रधानत्वाद्विशेषणविशेष्यभावानुपपत्तौ विशेषणस्य पूर्वनिपात इत्युभयोः प्रधानत्वाच्च प्राप्तिः । एतेन राजपुरुषशब्दौ व्याख्यातौ । समानाधिकरणार्थश्चान्यापोहवादिना वाच्यः । यस्य चान्यापोहः शब्दार्थस्तेनानीलानुत्पलव्युदासौ कथं समानाधिकरणाविति वक्तव्यम् । यस्य पुनर्विधीयमानः शब्दार्थस्तस्य जातिगुणविशिष्टं नीलोत्पलशब्दाभ्यां द्रव्यमभिधीयते जातिगुणौ च द्रव्ये वर्त्तेते न पुनरनीलानुत्पलव्युदासौ, तस्मात् समानाधिकरणार्थो नास्तीति । तदेवमन्यापोहो यथा यथा विकल्प्यते तथा तथा प्रमाणवृत्तं(१) बाधत इति ॥

कथं पुनर्ज्ञायते नाना व्यक्त्याकृतिजातय इति ? । अधिगतत्वात् प्रश्नानुपपत्तिरिति चेत् ?—अधिगता व्यक्त्याकृतिजातयो याशब्दादिसूत्रैरधिगतत्वात् प्रश्नोऽनुपपन्नः ? । न, निमित्तत्रैविध्ये सति तद्विशेषविषयज्ञापनार्थत्वात् प्रश्नस्य, गोशब्द उच्चरन् प्रधानोपसर्जनभावेन निमित्तत्रयं प्रतिपादयतीति याशब्दादिसूत्राणामर्थः, एवं च सति तद्विशेषविषयज्ञापनार्थो युक्तः प्रश्नः—कतमा तत्र व्यक्तिः ? कतमा आकृतिः ? कतमा जातिरिति ? व्यक्त्याकृतिजातीनां भेदो लक्षणभेदात् । किं पुनर्व्यक्तेर्लक्षणमिति ? व्यक्तिलक्षणप्रतिपादनार्थं व्यक्तिर्गुणविशेषाश्रयो मूर्त्तिरिति सूत्रम् ॥

(१) वृत्तत्वं—पा० १ पु० ।

व्यक्तिर्गुणविशेषाश्रयो मूर्तिः ॥ ६८ ॥

तत्र व्यज्यत इति व्यक्तिरिन्द्रियग्राह्येति—यद्द्रव्यमुपलब्धिलक्षणप्राप्तानां स्पर्शान्तानां गुणानामाश्रयः तन्मूर्च्छितावयवत्वात् मूर्त्तिरिति चोच्यते व्यक्तिरिति च । एतत्तु न बुद्ध्यामहे किमिदमवयविद्रव्यस्य लक्षणम् ? आहो पदार्थत्वेन त्रयाणां प्रसक्तानां जात्याकृतिव्यवच्छेदकं व्यक्तिलक्षणमिति ? । एवं तु भूयो नावयवी व्यवच्छेद्योऽपि तु जात्याकृतिपदव्यतिरिक्तस्य व्यक्तिपदस्यार्थो वक्तव्य इति । सा च व्यक्तिर्या न जातिर्नाकृतिस्तस्या अनेन सूत्रेण सङ्ग्रहः व्यक्तिर्गुणविशेषाश्रयो मूर्त्तिरिति । गुणाश्च विशेषाश्च तदाश्रयश्चात्र तच्छब्दलोपाद्गुणविशेषा, आश्रयशब्देन द्रव्यमुच्यते कर्मापि गुणविशेषशब्दाल्लभ्यते गुणेभ्यो विशेषाः गुणविशेषा इति । गुणविशेषग्रहणं किमर्थं ? गुणपदार्थेन सङ्गृहीताया आकृतेर्निराकरणार्थम्—आकृतिः संयोगविशेषः सा च गुणग्रहणेन सङ्गृहीतेति तन्निराकरणार्थं गुणविशेषग्रहणम् । गुणविशेषा इत्यत्र द्विरूपो विग्रहः गुणाश्च ते विशेषा इति च गुणेभ्यो विशेषा इति च । आश्रयशब्दसमानाधिकरणो मूर्त्तिशब्दो द्रव्ये वर्त्तते मूर्च्छते इति मूर्त्तिशब्देन द्रव्यमुच्यते । एवं च प्रतिपदं लक्षणं सिध्यति । एवं च रूपाकाशाद्यवरोधः—यदि प्रतिपदमेतद्व्यक्तिलक्षणं भवति ततो रूपादयश्चाकाशादयश्च व्याप्यन्ते अन्यथा तु (न) लक्षणमव्यापकं स्यादिति(१) । अथवा गुणविशेषाणामाश्रय इति गुणाश्च विशेषाश्च गुणविशेषाः तेषामाश्रयो द्रव्यं तत्र मूर्च्छत इति मूर्त्तिः ॥

---

(१) अव्यापकं भवति—पा० १ पु० ।

आकृतिर्जातिलिङ्गाख्या ॥ ६९ ॥

आकृतिर्जातिलिङ्गाख्या । जातिर्जातिलिङ्गानि च प्रख्यायन्ते यया तामाकृतिं विद्यात् । सा च नान्या सत्त्वावयवानां नियताद्व्यूहाद्–नियतव्यूहाः खल्ववयवा जातिमनुमापयन्ति । शिरःपाण्यादिमदाकारसामान्येन गोत्वं व्यज्यते इति । शिरःपाण्यादीनां चा वायवविशेषदर्शनेन । कदाचित्पुनरियमाकृतिः पदार्थत्वं जहाति । क पुनर्जहाति ? यत्राकृतिव्यङ्ग्या जातिर्न भवति यथा मृत्सुवर्णरजतमिति(१) आकृतौ नियमो न जातौ सर्वाकृतिर्जातिलिङ्गमिति न पुनः सर्वा जातिराकृत्या लिङ्ग्यते ॥

*समानप्रसवात्मिका जातिः ॥ ७० ॥*

समानप्रसवात्मिका जातिः । यया भिन्नान्यनेकानि वस्तूनि इतरेतरतोनुवृत्तिप्रत्ययहेतुत्वेन व्यवच्छिद्यन्ते सा जातिः । यथेमानि कुण्डानीत्यनुवर्त्तन्ते नेमानि कुण्डानीति व्यावर्त्तन्ते तदेकं सन्निमित्तमनुवृत्तिकारणं यत्सामान्यविशेषो जातिरिति । तद् समानप्रसवोत्पत्तिकारणं जातिरिति जातौ नियमो न समानप्रसवोत्पत्तौ, जातिमन्तरेणापि दृष्टत्वात्(२)– जातिमन्तरेणापि समानप्रसवो दृष्टः यथा पाचकादिषु, तस्माद्व्यवस्थितं व्यक्त्याकृतिजातयः(३) पदार्थ इति । गवादिष्वनुवृत्तिप्रत्ययो दृष्टः पिण्डव्यतिरिक्तालिङ्गान्नवतीति(४) विशेषवत्त्वान्नीलादिप्रत्ययवदिति । गोतोऽर्थान्तरं गोत्वं भिन्नप्रत्ययविषयत्वात् रूपस्पर्शव-

(१) मृत्सुवर्णरजतादि—पा० १ पु० ।
(२) अन्यथापि दृष्टत्वात्—पा० १ पु० ।
(३) जात्याकृतिव्यक्तयः—पा० ६ पु० ।
(४) निमित्तान्नवतीति—पा० १ पु० ।

स्पपत्तेरिति । गोतोऽर्थान्तरं गोत्वं व्यपदेशशब्दाविषयत्वात् चैत्राश्ववत्, गोर्गोत्वानुवृत्तिप्रत्यया भिन्ननिमित्ता विशेषत्व(१) रूपादिप्रत्ययवदिति ॥

संशयस्य प्रमाणानां विचारस्तद्व्यवस्थितिः ।
शब्दस्य तत्त्वं प्रामाण्यं पदार्थश्चेह कीर्त्तिताः ॥

## इति—औद्द्योतकरे न्यायवार्त्तिके द्वितीयाध्यायस्य द्वितीयमाह्निकम्(२) ॥

## समाप्तश्चात्र द्वितीयोऽध्यायः ॥

---

(१) विशेषप्रत्ययात्—पा० १ पु० ।

(२) उद्द्योतकरकृतं न्यायसूत्रद्वितीयाध्यायवार्त्तिकमिति क्वचित् । अत्र प्रथमादर्शपुस्तके लिपिकालो लेखकेन एवंरूपेण लिखितः । "इत्याचार्यश्रीउद्द्योतकरकृतौ द्वितीयोऽध्यायः समाप्तः ॥ शुभमस्तु ॥ संवत् १६०० शाके १४६५ विरोधकृतनामसंवत्सरे पुस्तकं लिखितं वाराणसिमध्ये लिखापितं ब्राह्मण लिखितं धर्म्मदास कायस्थ ॥ मास माघवदी एकादशी ॥ श्रीविश्वेश्वरस्थानात् ॥ श्रि-(श्री) साहि आलमराज्ये ॥ प्रवर्त्तमाने ॥"

# न्यायवार्त्तिके

## तृतीयोऽध्यायः ।

---

आनन्तर्यात् प्रमेयपरीक्षा(१)। यद्विषयोऽहङ्कारः संसारं प्रतनोति यद्विषयं च तत्त्वज्ञानं संसारनिवृत्तिहेतुर्भवति तदानन्तर्याद् परीक्ष्यते । तत्रात्मादीत्यात्मा विचार्यते । किं पुनरत्र विचार्यम् ? किं शरीरेन्द्रियमनोबुद्धिव्यतिरिक्त आहो नेति ? न, धर्म्यप्रसिद्धेः—व्यतिरेकाव्यतिरेकावात्मधर्मौ, सति धर्मिणि धर्मौ भवतीति धर्मी चात्राप्रसिद्धः, न चाप्रसिद्धे धर्मिणि धर्मयोर्विचारो युक्तः, तस्माद्धर्म्येव तावत्प्रतिपाद्यतामिति ? । न, इच्छादिसूत्र आत्मसद्भावः प्रतिपादितः प्रतिपादितत्वादनन्तरो विचारो

---

(१) अत्र भाष्ये परीक्षितानि प्रमाणानि प्रमेयमिदानीं परीक्ष्यते इति वृत्तानुकीर्तनं प्रमेयपरीक्षां वर्तिष्यमाणां प्रति वृत्तायाः प्रमाणपरीक्षायाः हेतुभावं दर्शयितुम् । प्रमाणेन हि प्रमेयं परीक्ष्यते नान्येन । न च तदपरीक्षितं प्रमाणं प्रमेयपरीक्षायै प्रभवति । तस्मात् प्रमाणपरीक्षा हेतुः हेतुमती च प्रमेयपरीक्षेति । द्वादशविधं च प्रमेयमिति कस्मात् प्रथमत आत्मैव परीक्ष्यते न च प्रमेयान्तरमित्यत आह । तत्रात्मादीत्यत्रात्मा विचार्यते इति । आत्मैव हि प्रमेये प्रथममुद्दिष्टः लक्षितश्चेति तदनुरोधादात्मैव प्रथमं परीक्ष्यते न प्रमेयान्तरमिति । अत्र यद्यपि स्वरूपेणात्मन्येव परीक्षां प्रतिजानीते तथापि लक्षणपरीक्षाद्वारेण लक्ष्यपरीक्षणात् लक्षणपरीक्षैव द्रष्टव्या । यथा चेयमात्मलक्षणपरीक्षा तथोपरिष्टाद्दर्शयिष्यते । तदेतद्वार्त्तिककारो व्याचष्टे । आनन्तर्यादिति । किं पुनः प्रयोजनं प्रमेयपरीक्षायाः न हि निष्प्रयोजनं परीक्षन्ते प्रेक्षावन्त इत्यत आह । यद्विषयोऽहङ्कार इतीति तात्पर्यटीकायां श्रीवाचस्पतिमिश्रः ।

युक्त इति । अविप्रतिपत्तेः—न कश्चिद्वाद्यात्मसद्भावे विप्रतिपद्यते, किन्तु विशेषे विप्रतिपद्यते शरीरमात्रमात्मा बुद्ध्यादय आत्मा सङ्घात आत्मा व्यतिरिक्त आत्मेति । इयं च धर्मविशेषविप्रतिपत्तिरप्रतिपन्नात्मसत्त्वानां न युक्तेति युक्तो धर्मविचारः। असत्त्वप्रतिपादकप्रमाणाभावाच्च । न चात्मासत्त्वप्रतिपादकं प्रतिपादकं प्रमाणमस्तीत्यतश्च सद्भावे न विप्रतिपद्यत इति ।

न नास्त्यजातत्वादित्येके—नास्त्यात्मा अजातत्वात् शशविषाणवदिति । तत्र नास्त्यात्मेतिपदे तावद्वाद्भ्येते नास्तिशब्दसमानाधिकरणोऽयमात्मशब्दो नात्मनोऽसत्त्वं प्रतिपादयति । किं कारणम् ? आत्मेति सत्त्वमभिधीयते, नास्तीति तस्य प्रतिषेधः, येनैवं यत्र प्रतिषिध्यते तत्तस्मादन्यत्रास्ति, यथा नास्तिना समानाधिकरणो घटशब्दो न घटाभावं प्रतिपादयितुं शक्नोति, अपि तु देशकालविशेषे प्रतिषेधति नास्ति घट इति । देशविशेषे वा प्रतिषेधो गेहे नास्तीति, कालविशेषे वा प्रतिषेध इदानीं नास्तीति प्राङ्नास्ति ऊर्ध्वं नास्तीति, सर्वश्चायं प्रतिषेधो नानभ्युपगतघटसत्त्वस्य(१) युक्तः । तथा नास्त्यात्मेति किमयं देशविशेषे प्रतिषिध्यते अथ कालविशेष इति ? । यदि तावद्देशविशेषे प्रतिषिद्धः(२) स आत्मनि न युक्तः अदेशत्वादात्मनः । न च देशविशेषप्रतिषेधा(३)दात्मा प्रतिषिद्धो भवति । अथायं भवतामभिप्रायः शरीरमात्मा न भवतीति ? कस्य वा शरीरमात्मा यं प्रति प्रतिषेधः । शरीरे नास्त्यात्मेत्येवं(४)

(१) नालब्ध्यगतघटसत्त्वस्य—पा० ३ पु० ।
(२) देशविशेषे प्रतिषेधः—पा० ४ पु० ।
(३) देशविशेषे प्रतिषेधा—पा० १ पु० ।
(४) आत्मेत्ययं—पा० ४ पु० ।

प्रतिषेध इति चेत् ? कस्य वा शरीरे आत्मा यं प्रति प्रतिषेधः । क तर्ह्ययमात्मा ? न क्वचिदात्मा । किमयं नास्त्येव ? न नास्ति, विशेषप्रतिषेधात् । केयं वाचोयुक्तिः न च शरीरे, न चान्यत्र, न च नास्ति ? एषैषा वाचोयुक्तिः यद्यथाभूतं तत्तथा निर्दिश्यते न चायमात्मा क्वचिदपीति तस्मात्तथैव निर्देशः । न च कालविशेषप्रतिषेधोऽपि युक्तः आत्मनि त्रैकाल्यस्यानभिव्यक्तेः(१)—न ह्यात्मनि त्रैकाल्यमभिव्यते नित्यत्वात् नित्य आत्मेत्येतदुपरिष्टात् पूर्वाऽभ्यस्तसूत्रे प्रतिपादयिष्यामः । तस्मान्न कालविशेषप्रतिषेधोऽपि । आत्मप्रतिषेधं च(२) कुर्वाणेनात्मशब्दस्य विषयो वक्तव्यः । न ह्येकं पदं निरर्थकं पश्यामः । अथापि शरीरादिविषयमात्मशब्दं प्रतिपद्येथाः एवमप्यनिवृत्तो व्याघातः । कथमिति ? नास्त्यात्मेति वाक्यस्य तदानीमयमर्थो भवति शरीरादयो न सन्तीति । अथ यं भवन्त आत्मानं कल्पयन्ति स नास्तीति ? न वयमात्मानं कल्पयामः—कल्पना हि नामातथाभूतस्य तथाभाविभिः सामान्यात् तद्धर्मारोपेण तत्प्रत्ययविषयत्वम् । न चात्मानमेवम्भूतं प्रतिपद्यामहे ।

यं भवन्त आत्मानं कल्पयन्तीति च ब्रुवाणो महान् प्रष्टव्यो जायते कथं वयमात्मानं कल्पयाम इति । किं सत्त्वेनाथासत्त्वेन वा । यदि सत्त्वेन ? किमसतः सता साधर्म्यं येन कल्पनाविषय आत्मा, आत्मसामान्यं चानात्मनो ब्रुवता आत्माभ्युपगतो भवतीति, न ह्यसतः सता सामान्यमस्तीति(३) । अथ शरीरादिविषयमहङ्कारमात्मनि कल्पयित्वा विप-

(१) त्रैकाल्यात् तस्यानभिव्यक्तेः—पा० १ पु० ।
(२) प्रतिषेधं च—पा० ४ पु० ।
(३) सता साधर्म्यमस्तीति—पा० ४ पु० ।

र्येष्यति(१) एवं शरीरादिव्यतिरिक्ताऽहङ्कारविषयसत्त्वाभ्युपगमादनिवृत्तो व्याघातः । अथ मन्यसे–एकपदस्य नावश्यमर्थेन भवितव्यमिति यथा शून्यं तम इति ? तन्न, व्याघातानिवृत्तेः शून्यशब्दस्य तावदयमर्थः यस्य रक्षिता द्रव्यस्य न विद्यते तद्द्रव्यं श्वभ्योहितत्वाच्छून्यमित्युच्यते, तमःशब्दस्याप्यनुपलब्धिलक्षणमाप्तानि द्रव्यगुणकर्माणि विषयः यत्र यत्रासन्निधिस्तेजसस्तत्र तत्र द्रव्यादि तमःशब्देनोच्यते । तमःशब्दश्चानर्थक इति ब्रुवाणः स्वसिद्धान्तं बाधते चक्षुर्णामुपादेयरूपत्वात्तमस इति, तस्मान्नानर्थकं पदमिति ।

नास्त्यात्मेति चैवंब्रुवाणः सिद्धान्तं बाधते । कथमिति ? रूपं भदन्त नाहं वेदना संस्कारो(२) विज्ञानं भदन्त नाहमिति एवमेतद्भिक्षो रूपं न त्वं वेदना संस्कारो विज्ञानं वा न त्वमिति । त एते स्कन्धा रूपादयोऽहंविषयत्वेन(३) प्रतिषिद्धाः(४) विशेषप्रतिषेधश्चायं न सामान्यप्रतिषेधः, आत्मानं चानभ्युपगच्छता सामान्यमेव प्रतिषेद्धव्यम् नाहं नैव त्वमसीति । अथैकशः प्रतिषेधेन(५) समुदायविषयोऽहङ्कार इति ? तथापि रूपादिस्कन्धपञ्चकव्यतिरेकेण समुदायो वक्तव्योऽहङ्कारविषयः तद्व्यतिरिक्तं च समुदायमहङ्कारविषयमभ्युपगच्छता(६) सञ्ज्ञाभिधने आत्मा समुदाय इति । अथाव्यतिरिक्तमेकमसयो न माप्नोत्यहमिति । न हि बहुष्वेकशब्दं(७) पश्यामः । न च रू-

(१) विपर्ययिष्यति–पा० १ पु० ।
(२) वेदना संज्ञा संस्कारो—पा० ४ पु० ।
(३) अहङ्कारविषयत्वेन—पा० १ पु० ।
(४) प्रसिद्धाः–पा० ४ पु० ।
(५) प्रतिषेधे–पा० १ पु० ।
(६) गच्छतः–पा० ४ पु० ।
(७) एकप्रत्ययं–पा० ४ पु० ।

पादिस्कन्धा एकशः समुदिता वा आत्मा इत्यहङ्कारप्रत्ययोऽतस्मिंस्तदिति मासः । भवतु मिथ्याप्रत्ययः किन्तो बाध्यत इति ? कथं न बाध्यते यदा सम्यक्प्रत्ययानुकारिणोमिथ्याप्रत्यया भवन्ति । न चात्मानमनभ्युपगच्छता तथागतदर्शनमर्थवत्तायां व्यवस्थापयितुं शक्यम् । न चेदं वचनं नास्ति सर्वाभिसमयसूत्रेऽभिधानात् । तस्मान्नास्त्यात्मेति ब्रुवाणः(१) सिद्धान्तं बाधत इति । तथा "भारं वो भिक्षवो देशयिष्यामि भारहारं च, भारः पञ्चस्कन्धा भारहारश्च पुद्गल इति । यश्चात्मा नास्तीति स मिथ्यादृष्टिको भवतीति" सूत्रम् ।

योऽप्ययं हेतुरजातत्वादिति अयमपि वाक्यान्तरव्यवच्छेदहेतुत्वाद्विरुद्धः जातमजातमिति च वस्तुधर्मावेतौ । किं पुनर्जातं, किं चाजातमिति ? । यस्य कारणतः सत्ता तज्जातम् । यस्याकारणतः सत्ता तदजातम् । किं कारणम् ? नञो जन्मप्रतिषेधविषयत्वात्—अयं खलु नञ् प्रवर्त्तमानो जन्मतः प्रतिषेधं करोति नास्य जन्म विद्यत(२) इति । तदिदमजातमित्यात्मनः प्रतिषेधो न भवति यथानुदकः कमण्डलुरिति । अथापि भावप्रतिषेध एवाजातमिति ? तथापि प्रतिज्ञाहेत्वोरेकत्वम् । अजातमिति चायं धर्मः, न च धर्मः स्वतन्त्रो युक्तोऽन्यत्र समवायात्, यत्रान्वेयं धर्मः स आत्मेति विरुद्धः । अथ धर्मोऽस्ति न धर्मीति ? तथाप्यनिष्टो व्याघातः स्वतन्त्रस्य धर्मस्यादर्शनात् । कश्चायमर्थोऽजातत्वादिति ? यदि चायमर्थो नास्य जन्मेति ततोऽसिद्धं(३) जन्मवानात्मा । किं पुनरात्मनो जन्म ? निकायविशे-

(१) नात्मेति ब्रुवाणः—पा० ४ पु० ।
(२) जन्म प्रतिषेध इति—पा० १ पु० ।
(३) तदाऽसिद्धं—पा० ४ पु० ।

एताभिः शरीरेन्द्रियबुद्धिवेदनाभिरपूर्वाभिराभिसम्बन्धः । अथाजातत्वमकारणकत्वं ? तथा न कश्चि(१)द्बाध्यते विरुद्धश्च हेतुरकारणकस्य नित्यत्वादसत्त्वं साधयतो नित्यतामापादयत इति विरुद्धो हेतुः । प्रतिज्ञाहेत्वोश्च विरोधः—प्रतिज्ञाया विषयो नास्त्यात्मेति, हेतोर्विषय आत्यन्तिकः सत्ताऽसम्बन्धः, तावेतौ प्रतिज्ञाहेतू असत्सद्विषयत्वाद्विरुद्धौ । एतेन निर्हेतुकत्वाज्जन्महेत्वनुपादानादकार्यत्वादकारणत्वादित्येवमादयस्तुल्यदोषा इति प्रत्युक्ताः ॥

यदपीदमुच्यते शशविषाणवदिति ? अयमप्यसिद्धो दृष्टान्तः । कथमिति ? शशविषाणशब्दस्य सम्बन्धविषयत्वात् सम्बन्धप्रतिषेधो न विषाणप्रतिषेधः । शशविषाणसम्बन्ध उदाहरणं भविष्यतीति ? सोऽपि न युक्तः कदाचिद्विषाणेन शशस्य सम्बन्धोपपत्तेः । लोकविरोध इति चेत्—अथ मन्यसे यदि शशे विषाणमस्ति ननु लोको विरुध्यत इति ? न विरुध्यते, कार्यकारणभावप्रतिषेधद्वारेण लौकिकप्रवृत्तेः—लोकस्तावत् कार्यं कारणं वा शशस्य विषाणं नास्तीत्येवं प्रतिषेधति यथा गोर्विषाणस्य च कार्यकारणभावो न चैवं शशस्य विषाणस्य च कार्यकारणभावः । न च कार्यकारणभावप्रतिषेधादसत्त्वम् । न हि यस्य न कार्यं न कारणं(२) तन्नास्ति । यथा देवदत्तस्य घट इति । इदं च शशविषाणं नास्तीति ब्रुवाणः प्रष्टव्यः किमयं सामान्यप्रतिषेधोऽथ विशेषप्रतिषेध इति । यदि सामान्यप्रतिषेधः तन्न युक्तमशक्यत्वात् शशस्य विषाणं नास्ति इति गवादिविषाणान्यपि शशस्य न सन्तीति प्राप्तम् । एतच्चाशक्यम् । न हि तानि

(१) किञ्चित्—पा० ४ पु० ।
(२) न हि यस्य यत्र कार्यं न कारणं—पा० ४ पु० ।

न सन्ति । अथ विशेषप्रतिषेधः किञ्चिद्विधानं प्रागस्य प्रतिषि-ध्यते यस्य प्रागो न कार्यम् तच्च(१) प्रागस्य न कारणमिति ? सोऽयं कार्यकारणसम्बन्ध एव प्रतिषिध्यते । कार्यकारणसम्ब-न्धश्चान्यत्र दृष्ट इह प्रतिषिध्यते इति नात्यन्तासत्त्वप्रतिपादने दृष्टान्तो भवति । एतेन खपुष्पाद्यसत्त्वं व्याख्यातं वेदितव्यम् ।

नास्त्यात्मानुपलब्धेरिति चेत् ? अत्रापि प्रतिज्ञादिदोषो दृष्टान्तदोषश्च पूर्ववत् । यदनुपलब्धेरिति तदप्ययुक्तम् । अनु-पलब्धिरसिद्धा प्रत्यक्षादिप्रमाणविषयत्वा(२)दात्मनः—प्रत्यक्षेण तावदात्मा उपलभ्यते । कथं ? लिङ्गलिङ्गिसम्बन्धस्मृत्यनपेक्षं वि-षयस्वभावभेदानुविधाय्यहमिति विज्ञानं(३) रूपादिज्ञानवत् प्र-त्यक्षम् । यच्चापि भवान् मुक्तसंशयं प्रत्यक्षं प्रतिपद्यते तस्य कुतः प्रत्यक्षत्वमित्यवश्यं भवता विज्ञानमेव लिङ्गादिसम्बन्धनि-रपेक्षं स्वात्मसंवेद्यं प्रतिपत्तव्यम् । अथ मन्यसे अस्त्ययमहंप्र-त्ययो न पुनरस्यात्मा विषयः ? हन्त तर्हि निर्दिश्यतां विषयः । रूपादि विषय इति चेत् ?—अथ मन्यसे रूपादय एवाहङ्कारस्य विषयः तथाचोक्तमहङ्कारालम्बनोत्पत्तिनिमित्तत्वादात्मेत्युच्यते इति ? तन्न, असत्त्वात् प्रतिषेधाच्च—प्रतिषेद्धोऽहङ्कारो रूपादिषु रूपं नाहमेवमेतद्भिक्षो रूपं न त्वयीति । तस्माद्रूपादयः ता-वदहङ्कारस्य विषया न भवन्ति । न चायमहङ्कारो रूपादिषु क-दाचिदपि दृष्टः । न हि भवति कदाचिदहं रूपमहं वेदनादय इति । ननु भवत्यहं गौरोऽहं कृष्ण इति ? न भवतीति ब्रूमः, कथं ? न ह्येतस्य द्रष्टुर्यद्देहन्यस्य रूपं गौरमेतदहमिति प्रत्ययो भवति केवलं मतुप्लोपं कृत्वाऽहं गौर इति पाष्ठ्यर्यं निर्दिशति । एवमेतन्न त-

(१) यच्च—पा० १ पु० । (२) गोचरत्वा—पा० ४ पु० ।
(३) ज्ञानं—पा० ४ पु० ।

प्यत इति कुत इति चेत् ?—अथ मन्यसे मतुब्लोपादयं षष्ठ्यार्थव्यपदेशो न तत्त्वत इति(१) को हेतुरिति ? ममप्रत्ययसमानाधिकरणस्य निर्देशात्—यस्मिन्नर्थे ममप्रत्ययोऽस्य भवति तत्रैवायमहङ्कारोऽपीति ममप्रत्ययसामानाधिकरण्याद्गम्यते मतुब्लोप इति । ममप्रत्ययसमानाधिकरणश्चायमहंप्रत्ययोऽन्यत्वे दृष्टः उपकारकत्वात्—उपकारके वस्तुनि ममप्रत्ययसमानाधिकरणोऽहंप्रत्ययो दृष्टः योऽयं सोऽहमिति । उक्तं चात्र रूपादिस्कन्धेष्वहंप्रत्ययोऽतस्मिंस्तदितिप्रत्यय इति । तदेवमहंप्रत्ययविषयत्वादात्मा तावत्प्रत्यक्षः अनुमानेनापि यथात्मोपलभ्यते तथोक्तमिच्छादिसूत्रे इति । आगमोऽप्यस्त्येव । तान्येतानि प्रमाणानि त्रीण्येकविषयतया प्रतिसन्धीयमानान्यात्मानं प्रतिपादयन्ति । न च प्रमाणान्तरं विप्रतिपत्तिहेतुरस्ति तस्मादनुपलब्धेरित्यसिद्धो हेतुः ।

सन्दिग्धश्चानुपलब्धेस्त्रिकारणत्वात्—अनुपलब्धिकारणानि त्रीणि उपलब्ध्युपलम्भनमुपलभ्यमिति । तत्रेयमनुपलब्धिर्भवन्ती कस्याभावादिति(२) सन्दिह्यते । यदि ब्रूषे उपलभ्यस्याभावादिति ? नन्वयं प्रतिज्ञार्थ एव । न च प्रतिज्ञा प्रतिज्ञां साधयतीत्यनुपलब्धिरहेतुः । या चेयमनुपलब्धिरात्मासत्त्वप्रतिपादनायोपादीयते तस्याः क्व आश्रयः ? । यद्यात्मानं प्रतिपद्यसे ? व्याहतं भवति आश्रयश्च नास्ति चेति । अथानाश्रयः ? कः साधनार्थः न ह्यनाश्रयो धर्मः साध्यं साधयितुं शक्नोति । अथानुपलब्धिरपि नास्ति ? कः साधनार्थोऽनुपलब्धेरिति न ह्यसाधनं भवितुमर्हतीति ।

(१) इति इद—पा० १ पु० ।

(२) भावाद्भवतीति—पा० ४ पु० ।

अथ कल्पितस्यानुपलब्धिर्धर्म इति ? कथं कल्पितस्येति वाच्यम्—किं सत्त्वेनाथासत्त्वेन ? यदि सत्त्वेन ? नानुपलब्धिस्तस्य धर्मः, न हि स्थाणोः पुरुषत्वेन कल्पितस्य स्थाणुधर्माः प्रसवभासन्ते । अथासत्त्वेन कल्पितस्यानुपलब्धिर्धर्मः ? सिध्यसनुपलब्धिर्द्धर्मो वृथा तु कल्पना । किं कारणम् ? कल्पनाया अतथाभावात् । कल्पना हि नामातथाभावः असत्त्वेन चात्मा कल्पित इत्यसत्त्वेन नास्ति, असत्त्वेन चेन्नास्ति वृथा कल्पना । किमर्थं चायमात्मा असत्त्वेन कल्प्यते ? यदि हेत्वर्थमुपपन्नो हेतुर्यदर्थमुपात्तः स पुनरर्थो न सिध्यति, न हि यः पुरुषे स्थाणुधर्मानध्यारोप्य हेतुत्वेनापदिशेत(१) तस्यासौ स्थाणुः स्यादिति । तदेवमप्यनुपलब्धिरप्यहेतुः ।

रूपादिस्कन्धवाचकशब्दविषयव्यतिरिक्तविषय आत्मशब्दः रूपादिशब्देभ्योऽन्यत्वे सत्येकशब्दत्वात् घटशब्दवदिति(२) । एतेनाहंप्रत्ययो व्याख्यातः । असिद्धो दृष्टान्त इति चेन्न ? अत्रोक्तम्–यथा गुणव्यतिरिक्तो गुणीति । तमःशब्दादिभिरनैकान्तिक इति चेत् ?– अथ मन्यसे यथा रूपादिशब्देभ्योऽन्यत्वे सत्येकपदत्वे च तमःशब्दस्यार्थान्तराविषयत्वमेवमात्मशब्दस्यापीति ? तन्न, विरोधात्–तमःशब्दो निर्विषय इति ब्रुवाणः सिद्धान्तं बाधते । उपादायरूपत्वात्तमस इति । न चैतदस्माभिरभ्युपगम्यते तमःशब्दो निर्विषय इति । तमःशब्दस्य सविषयत्वे सूत्रव्याघातो द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद्भावस्तम इति ? । न सूत्रार्थापरिज्ञानात् निराकृततेजःसम्बन्धीनि द्रव्यगुणकर्माणि तमःशब्देनाभिधीयन्ते तस्मान्न सूत्रव्याघातः ।

(१) व्यपदिशेत्—पा० ३ पु० ।
(२) घटादिपदिति—पा० ४ पु० ।

अपरे तु जीवच्छरीरं निरात्मकत्वेन पक्षयित्वा सत्त्वादिसेवमादिकं हेतुं ब्रूते । तत्र विकल्पानुपपत्तेः । निरात्मकमिति(१) कोऽर्थः । यदि सान्तदात्मनोनुपकारकमिति ? न दृष्टान्तोऽस्ति । न हि किञ्चिदात्मनोऽनुपकारकमस्ति । अथात्मप्रतिषेधः आत्मा शरीरं न भवति ? कस्यात्मा शरीरम् उत्तरपदविषयत्वाच्च निसः किं सात्मकमिति वाच्यम्—न ह्यसत्युत्तरपदे निसः प्रयोगं पश्यामः यथा निर्मक्षिकमिति । अथ शरीरे आत्मा प्रतिषिध्यते ? सिद्धं साधयति कस्य वा शरीरे आत्मा विद्यते । अथ शरीरमात्मसम्बन्धि न भवतीति पुनर्दृष्टान्तो नास्तीति, सर्वे चैते विशेषप्रतिषेधाः, विशेषप्रतिषेधाच्च सामान्यमभ्युपगम्यते(२) एवं च सति यत् प्रतिषेद्धव्यं तदनुज्ञातं भवति । अथात्मशब्दोऽनित्यविषयो वर्णात्मकत्वात् तथापि नित्यशब्देनानैकान्तिकं शरीरादीनामात्मशब्दत्वात् सिद्धसाधनम् । अथ शरीरादिव्यतिरिक्तविषय आत्मशब्दोऽनित्यविषयः तथापि शरीरादिव्यतिरिक्तविषयाभ्युपगमे विरोधः । तदेवं यथायथा आत्मासत्त्वं विचार्यते(३) तथातथा न्यायं न सहत इति ॥

परार्थाश्चक्षुरादयः सङ्घातत्वात् शयनासनादिवदिति । सङ्घातान्तरार्था इति चेत् ?—अथ मन्यसे सत्यं सङ्घाताः परार्था भवन्ति ते तु सङ्घातान्तरार्थाः यथा शयनादय इति ? न, सङ्घातस्याभ्युपगमे विरोधात् न हि रूपादिस्कन्धव्यतिरिक्तं सङ्घातं भवन्तः प्रतिपद्यन्ते न चासति सङ्घातान्तरे स-

(१) निरात्मकत्वमिति—पा० १ पु० ।
(२) सामान्यमधिगम्यते—पा० ४ पु० ।
(३) प्रतिज्ञायते—पा० ४ पु० ।

ङ्घातानां सङ्घातान्तरार्थता भवति । अथ प्रतिपद्यते ? व्याहतं भवति । अनिष्टप्रसङ्ग इति चेत् ?—अथ मन्यसे न मया सङ्घातान्तरं प्रतिपद्यते अपि त्वस्मिन् हेतौ सतीदमनिष्टं भवति परार्थस्य सङ्घातान्तराविनाभावित्वात् यावत्परार्थं भवति तत्सर्वं सङ्घातान्तरार्थं दृष्टमिति ? । न विरोधात् अनभ्युपगमाच्च—न हि कश्चिद्व्यतिरिक्तात्मवादिनः सङ्घातः सङ्घातस्य परार्थं(१) करोति तदुभयपक्षे संप्रतिपत्ते नानिष्टापादनं दृष्टमिति । विरोधाच्च । यदि विवक्षितार्थव्यतिरेकेणानुमानस्याविवक्षितमपि विषयः नन्वेतस्यां कल्पनायां सर्वमनुमानं व्याहन्येत । कथमिति ? यदिष्टमनुमानत्वेन तदपि नानुमानं प्राप्नोति । यथा शब्दानित्यत्वे कृतकत्वम् । किं कारणम् ? यथेदं कृतकत्वमनित्यत्वेनाविनाभूत(२)मनित्यत्वं साधयति । एवं दुःखशून्यानात्मकत्वमपि(३) साधयति दुःखशून्यानात्मकत्व(४)वत् श्रोत्रग्राह्यत्वमपि साधयिष्यति ततश्च न श्रोत्रग्राह्यः शब्दः कृतकत्वात् घटवदिति । अथानुमानेन बाध्यते अयं प्रतिज्ञार्थ इत्यतोन हेतुः ? नन्वयमपि सङ्घातान्तरार्थाश्चक्षुरादय इत्यागमेनानुमानेन च बाध्यते । यद्यपि भवान् सङ्घातान्तरं प्रतिपद्यते तत्राप्यनिष्टत्वं सङ्घातत्वमिति तेनापि सङ्घातान्तरार्थं भवितव्यमिति एवं चानवस्था । न चैनां शक्तः कश्चित् प्रतिपादयितुमिति । यत एषा निवर्तते तदसंहतम् । अथासंहतं नैवास्ति ? असंहता(५)नभ्युपगमे सङ्घातानुपपत्तेर्व्याघातः

(१) परस्यार्थं करोति—इति शोधितम् ४ पु० ।
(२) अनित्येनाविनाभूत—पा० ४ पु० ।
(३) शून्यात्मकत्व—पा० ४ पु० ।
(४) दुःखशून्यात्मकत्व—पा० ४ पु० ।
(५) असङ्घाता—पा० ४ पु० ।

न हि कदाचिदसंहतमात्रेपेवे (१) सङ्घातः सिध्यति । अथानुमानं नैवास्तीति परः प्रतिपद्यते ? स कथं न प्रतिपद्यत इति प्रष्टव्यः यद्यनुमानबाधितत्वादनुमानं नास्ति ? अतिन्यायोऽनुमानेन च बाध्यते अनुमानं च नास्तीति । अतीन्द्रियार्थाधिगतिश्च कथम् (२) यद्यनुमानं नास्ति कथमतीन्द्रियार्थो गम्यते । आगमादतीन्द्रियार्थाधिगतिर्भविष्यतीति न युक्तम् आगमव्यतिरिक्तविषयत्वात् । कस्मादनुमानस्यागमव्यतिरिक्तो विषयः ? यथा स्तनयित्नुशब्दस्य हेतौ, न हि तत्र प्रत्यक्षं नागम इति ।

तदेवमात्मास्तीति समधिगतम् । तस्मिन् व्यपदेशस्योभयथा सिद्धेः संशयः । कः पुनरयं व्यपदेशः ? क्रियाकरणयोः कर्त्रा सम्बन्धाभिधानं व्यपदेशः—दर्शनं क्रिया करणं चक्षुः, करणस्य क्रियायाः कर्त्रा सम्बन्धः चक्षुषा पश्यतीति । स चायं व्यपदेशो द्वेधा भवति अवयवेन समुदायस्य, यथा मूलैर्वृक्षस्तिष्ठतीत्यत्र समुदायशब्देनावयवी वृक्षोऽभिधीयते इति । एकदेशेन चैकदेशान्तराणां पक्षिभजातीयैरारभ्यते तत्र ह्येकदेशदर्शनादेकदेशान्तराणि प्रतिपद्यन्ते तत्रापि(३) च व्यपदेशः स्तम्भैः प्रासादो ध्रियत इति । अन्येन चान्यस्य व्यपदेशः परशुना वृश्चतीति, परशुः करणं वृश्चतिः क्रिया ताभ्यां कर्त्तुरभिसम्बन्धः परशुना वृश्चतीति । अस्ति चायमिहापि व्यपदेशः चक्षुषा पश्यतीति । किमन्येनान्यस्य व्यपदेशः ? अथवा अवयवेनावयविनः ? अथैकदेशेनैकदेशान्तराणामिति ? क्रियाकरणकर्म्मणां वा कर्त्रा सम्बन्धो व्यपदेशः चक्षुषा दृष्टं पश्यतीति

(१) सङ्घातप्रतिषेधे—पा० ४ पु० ।

(२) इन्द्रियार्थोपगतिः कथम्—पा० ४ पु० ।

(३) तद्यपि—पा० ४ पु० ।

क्रियाकरणकर्म्मणां कर्त्रा सम्बन्धः अस्ति यायमिहापि व्यपदेशः शरीरेण सुखदुःखमनुभवति। तत्र न ज्ञायते किं तत्त्वमिति? अन्येनायमन्यस्य व्यपदेश इति तत्त्वम्॥

कथम्?—

**दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्॥ १॥**

दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्। दृश्यते ऽनेनेति दर्शनं चक्षुः, स्पृशत्यनेनात्मा स्पष्टव्यमर्थमिति(१) स्पर्शनं त्वगिन्द्रियमुच्यते। दर्शनेन दृष्टमर्थं स्पर्शनेन प्रत्यभिजानाति यमद्राक्षं तं स्पृशामि यमस्प्राक्षं तं पश्यामीति एकविषयावेतौ प्रत्ययौ प्रतिसन्धीयेते प्रतिसन्धानं च नाम स्मृत्या सहैकविषयत्वम्। दर्शनस्पर्शनप्रत्यययोर्घटादिविषयत्वादसम्बन्ध इति चेत्?—अथ मन्यसे यावेतौ दर्शनस्पर्शनप्रत्ययौ तौ घटादिविषयौ न व्यतिरेकमात्मनो व्यधिकरणत्वादृगमयत इति?। न सूत्रार्थापरिज्ञानात्—दर्शनस्पर्शनप्रत्ययावेककर्तृकाविति सूत्रार्थः। यदि चानुपक्तं गुणव्यतिरेकमप्येकविषयत्वेन साधयति न कश्चिद्दोषः। गुणव्यतिरेकोऽसिद्ध इति चेत्? उक्तमेतद्यथा गुणव्यतिरिक्तो गुणीति। कार्यकारणभावात् प्रतिसन्धानमिति चेत्? उक्तोत्तरमेतदिच्छादिसूत्र इति। अकार्यकारणभूतानां च प्रतिसन्धाने ऽनेकान्तः(२)॥

भाष्यस्य भवितृपेक्षत्वाद्वेति सूत्रार्थः—दृष्टिर्दर्शनम् स्पृष्टिः स्पर्शनमिति भावरूपावेतौ प्रत्ययौ भवितारं प्रतिपादयतः। न हि भावमनाधारं पश्यामः। उत्पत्तिवत् कर्माधा-

(१) स्प्रष्टव्यमिति-पा० १ पु०।
(२) सन्धानेनानैकान्तः—पा० ४ पु०।

यो भविष्यतीति न युक्तम्। कर्मण्यसति दर्शनात् अपरथापि कर्मणि स्पन्दभावो भवतीति। न च विनष्टं कर्म भावस्याधारो युक्तः ततो यदाधारो भावः स आत्मा। दर्शनस्पर्शनग्रहणयो रूपादिविषयत्वा(१)न्न घटादिविषयत्वं? न, रूपस्पर्शानुपलब्धौ तद्विशिष्टस्य दर्शनात्—यदाऽयमनुपलभ्यमानरूपादिकं वस्तूपलभते तदाऽस्य तद्विशिष्टः प्रत्यय उपजायते यथा(२) नीलाद्युपरिस्थितस्फटिके प्रत्ययो रूपाद्यनुपलब्धौ भवति रात्रौ च(३) बलाकायां शुक्लादिरूपाग्रहणात् पक्षिप्रत्ययः। तस्माद्रूपस्पर्शव्यतिरिक्ते घटप्रत्ययः प्रतिसन्धानाच्च व्यतिरिक्तनिमित्तत्वम्। न हि नानाविषयौ प्रत्ययौ प्रतिसन्धीयेते। अस्ति च प्रतिसन्धानं यमद्राक्षं तं स्पृशामीति यमस्प्राक्षं तं पश्यामीति, तस्मादेकविषयत्वम्। सङ्घातकर्तृकौ दर्शनस्पर्शनविषयौ प्रत्ययौ भविष्यत इति न युक्तम् सङ्घातस्य नानात्वाबाधनात्। सङ्घातः संहन्यमानतन्त्रो भवतीति संहन्यमानं चानेकम्। अनेकं च प्रतिसन्धानप्रत्ययकारणं(४) न युक्तम्, नानाकर्तृकाणां नानाविषयाणां च प्रत्ययानामप्रतिसन्धानात्। एकेन्द्रियप्रत्ययाविति चेत्?—अथ मन्यसे यदेवेन्द्रियं दर्शनप्रत्ययस्य कारणं तदेव स्पर्शनप्रत्ययस्यापीति?। तन्नाविषयत्वात्—चक्षुः खलु स्वविषयं प्रतिसन्धातुमर्हतीति यमद्राक्षं स एवायमर्थ इति, न पुनः स्पर्शमिन्द्रियान्तरविषयत्वादिति। इन्द्रियान्तरवैयर्थ्यं वा एकैकमेवेन्द्रियम्-

(१) रूपस्पर्शविषयत्वात्—पा० ४ पु०।

(२) तदा—पा० ४ पु०।

(३) रात्रौ तु—पा० ४ पु०।

(४) अनेकप्रतिसन्धानकारणं—पा० ४ पु०।

नेकविषयग्रहण प्रतिसन्धत्ते इन्द्रियान्तरोत्पादो व्यर्थः(१) ॥

न विषयव्यवस्थानात् ॥ २ ॥

न विषयव्यवस्थानात् । चेतनानीन्द्रियाणि विषयव्यवस्थानात्—विषयव्यवस्थानादित्यस्यायमर्थः करणविषयनियमादिति—सति चक्षुषि रूपग्रहणं भवत्यसति न भवति । यच्च यस्मिन् सति भवति असति न भवति तस्य तत् । सति च चक्षुषि रूपग्रहणं भवति तस्माद्रूपग्रहणं चक्षुषः । एवं घ्राणेऽपि । एवं सति किमन्येन चेतनेनेति चेत् ? न, सन्दिग्धत्वादहेतुः—किमयमिन्द्रियाणां विषयनियमः चेतनत्वात् आहो चेतनोपकरणत्वादिति सन्दिह्यते ? । चेतनोपकरणत्वेऽपि सतीन्द्रियाणामेतद्भवितुमर्हति यथा प्रदीपस्य सद्भावे रूपग्रहणं भवत्यसति न भवति, न च रूपग्रहणं प्रदीपस्य । विपर्ययप्रसाधकश्चायं हेतुर्विषयव्यवस्थानादिति ।

विपर्यय(२) साधकत्वज्ञापनार्थं च तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेध इति सूत्रम्—

तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः ॥ ३ ॥

यस्मादेतानीन्द्रियाणि व्यवस्थितविषयाण्यत एवाव्यवस्थितविषयेणान्येन भवितव्यम् । यदि हि किञ्चिदिन्द्रियमनेकार्थग्राह्यव्यवस्थितविषयं स्यादिति कस्ततोऽन्यं चेतनमनुमातुं शक्नुयात् चैतन्यं तु आत्मनः स्यात्तस्ये सत्यव्यवस्थानाच्चक्षुरादिवदिति नाचेतन आत्मा अस्वातन्त्र्यप्रसङ्गाच्चक्षुरादिवदिति । अन्वयाभावादयुक्तमिति चेत् ?—अथ मन्यसे आत्मनश्चैतन्यसाधनस्याव्यवस्थानस्य नान्वयोऽस्ति, न

(१) इन्द्रियान्तरोत्पादवैयर्थ्यम्—पा० १ पु० ।
(२) विपर्यास—पा० ४ पु० ।

चान्वयमन्तरेण हेतुः सिद्ध्यतीति ? न, विपर्यय(१)सम्बन्धस्याव्यभिचारात् नायमन्वयी हेतु(२)रपि तु व्यतिरेकी हेतुः(३) तत्र च व्यतिरेकसम्बन्धा(४)व्यभिचारः सामर्थ्यम् । यच्चाचेतनं तत्सर्वं व्यवस्थितविषयं दृष्टमिति । पृथिव्यादिनित्यत्वसाधने गन्धवत्त्वादिप्रसङ्ग इति चेत् ?—अयमन्यसे यदि व्यतिरेकी हेतुर्भवत्यन्वयमन्तरेण अथ पृथिव्यादिनित्यत्वे साध्ये गन्धवत्त्वं कस्मान्न हेतुः ? । न हेतुत्वभयव्यावृत्तेः—यस्माद्गन्धवत्त्वं नित्याच्चानित्याच्च व्यावर्त्तते, न पुनरव्यवस्थानमेवं, तस्मादव्यवस्थानं हेतुर्न गन्धवत्त्वमिति ॥

इतश्च शरीरादिव्यतिरिक्त आत्मा न शरीरादिसङ्घातमात्रम्—

## शरीरदाहे पातकाभावात् ॥ ४ ॥

शरीरदाहे पातकाभावात् । शरीरग्रहणेन शरीरेन्द्रियबुद्धिवेदनासङ्घातः प्राणिभूतो गृह्यते । शरीरं प्राणिभूतं दहतः प्राणिहिंसाकृतं पापं पातकमित्युच्यते तस्याभावोऽकर्त्तुः फलेन सम्बन्धः कर्त्तुश्चानभिसम्बन्ध इति । कस्मात् ? अनभ्युपगतार्थान्तरात्मनोऽन्यः शरीरेन्द्रियबुद्धिवेदनासङ्घातः कर्त्ता अन्यश्च तत्फलसम्भोक्तेति । तदेवमकृतकृताभ्यागमविनाशदोषप्रसङ्गः अनिष्टश्च तस्मात् कर्त्ता भोक्ता च यः स आत्मेति ।

तदिदं सूत्रं यस्यात्मा नास्ति तस्यायं दोष इति दोषप्रतिपादनार्थं न साधनार्थमिति हेतुफलभावात् स्मृतिवत्कर्तृभोक्तृव्यवहारः यथा हेतुफलभावेन व्यवस्थितायां स-

(१) विपर्यास—पा० ४ पु० ।

(२) अन्वयहेतु—पा० ४ पु० ।

(३) व्यतिरेकहेतु—पा० ४ पु० ।

(४) विपर्ययसम्बन्धा—पा० ४ पु० ।

न्ततौ यस्यामेव भावनोपजायते तस्यामेव सन्ततौ स्मृतिर्भवतीति । एवं यत्कायचित्तसन्तानप्रभवं कर्म्म तत्कायचित्तसन्तानप्रभवं फलमिति नास्त्यकृताभ्यागमकृतनाशप्रसङ्गः । स कथं स्यादिति यद्यन्यस्यां सन्ततौ कृतं कर्म अन्यस्यां सन्ततौ फलं दद्यात् । यदि च भवानेवमर्थं(१) प्रतिपादयितुं शक्नोति य एव करोति स एव भुङ्क्ते इति उभयञ्च नास्ति तस्मादकृताभ्यागमादिरदोषः ? नोक्तोत्तरत्वात्—न सन्तानो नानात्वं बाधते इत्युक्तोत्तरमेतत् । यत् पुनरेतदेकस्मिन्नदर्शनादिति ? अत्राप्युक्तमेकनिमित्तानां प्रत्ययानां प्रतिसन्धानादिति । शाल्यादि(२)बीजवदिति चेत् ?—अथ मन्यसे यथा शालिबीजादङ्कुर उपजायते शालिबीजात्पर्दोत्तरकालं नालकाण्डादिभावेन भूतानुग्रहवशाच्छालिबीजं प्रादुर्भवति न च तत्रैकं निमित्तं किञ्चिदनुबद्धमस्ति अथ च नियमः शालिबीजपूर्वादङ्कुराच्छालिबीजम् एवं हेतुफलभावेन व्यवस्थितायां सन्ततावान्तरे चेतसि परिणामविशेषप्रासात् कर्म्मणः फलमिति ? । तत्र बीजावयवानुवृत्तेः—शालिबीजवदित्यसिद्धो दृष्टान्तः तत्रापि ये बीजावयवास्ते पूर्वव्यूहपरित्यागेन व्यूहान्तरमापद्यन्ते व्यूहान्तरापत्तौ च पृथिवीधातुरब्धातुना सङ्गृहीत आन्तरेण तेजसा पच्यमानो रसद्रव्यं निर्वर्त्तयति, स रसः पूर्वावयवसहितोऽङ्कुरादिभावमापद्यते तस्माद्बीजावयवानुवृत्तेरसिद्धमिदमुच्यते यथा शालिबीजाद्विनष्टादङ्कुर उत्पद्यते अथ च प्रतिसन्धानमिति । परमावस्थत्वाद्बीजावयवानां यथोक्तदोषापत्तिरिति चेत् ?—अथ मन्यसे अथापि(३)

(१) एतदर्थं—पा० ४ पु० ।  (२) धान्यादि—पा० ४ पु० ।
(३) यद्यपि—पा० ४ पु० ।

बीजावयवाः पूर्वव्यूहं परित्यजन्ति व्यूहान्तरं चापद्यन्ते तस्यापि परमाण्ववस्थत्वाद्बीजस्य परमाणुमात्रं शिष्यत इति । न च यवबीजशालिबीजपरमाणूनां कश्चिद्विशेषः यथानुपनातविशेषाः परमाणवः कार्यकारणभावनियमात् तत्पूर्वकतया शाल्यङ्कुरमभिनिर्वर्त्तयन्ति तथा ममापि कार्यकारणभावान्नियम(१) इति ? । नानभ्युपगमात्—परमाण्ववस्थानि बीजानि भवन्तीत्येतन्न प्रतिपद्यामहे सर्वावस्थोपलब्धेः यस्माच्छाल्यादिबीजमुच्छूनावस्थामादिं कृत्वा यावदुपान्त्यं शालिबीजकार्यं तावन्न कदाचित् परमाण्ववस्थं भवति । यदि तु स्यात् कदाचिन्नोपलभ्येत । यदि तर्ह्यपरमाणोर्विभागो नास्ति कल्पादावुत्पत्तिर्न स्यात् परमाण्ववस्थत्वाज्जगतः परमाण्ववस्थे च जगति न शाल्यादिजातिव्यक्तिरस्तीति पुनरुत्पादे जातिव्यक्तिहेतवः परमाणव एवमभ्युपगन्तव्यम् यथा च कल्पादावेवं परमाण्ववस्थे बीजेऽपीति ? । नानेनैवोक्तोत्तरत्वात्—अनेनैव सर्वावस्थोपलब्धेरित्युक्तोत्तरमेतत् । सर्गादौ शालिजातिव्यक्तिहेतुरदृष्टविशेषो येनादृष्टेन प्राणिनामुपभोगाय शाल्यादयो निर्वर्त्यन्ते तमदृष्टविशेषमपेक्षमाण ईश्वरस्तांस्तान् परमाणून् तथा तथा सङ्घातयति यथा यथा शाल्यादिजातिव्यक्तिरिति । एतेन घटादिपाको व्याख्यातः । नापरमाण्वन्तो विनाशः(२) सर्वावस्थोपलब्धेरिति । आमद्रव्यात् पाकानुपपत्तिरिति चेत् ? अथ मन्यसे यदि कार्यकारणद्रव्ये पच्येते आमद्रव्यात् पाको न प्राप्नोति पाचकेन तेजसा अप्राप्तत्वात् ? नाप्रतिबन्धात्—भवेदप्येष

(१) भावनियम—पा० १ पु०।

(२) विभागः—पा० ४ पु०।

दोषो यदि तेजोऽनुप्रवेशमप्रवर्त्ती प्रतिबध्नाति(१) स तु न प्रतिबध्नाति अप्रतिबद्धं तेजोऽनुप्रविशति । इति । न प्रतिबध्नातीति न हेतुरस्तीति, ? न नास्ति परिस्रवादिमतो घटस्योपलब्धेः—यस्मात् परिस्रवादिमतो घटस्य द्रवत्वप्रतिबन्धो न दृष्टः अप्रतिबन्धेन द्रवत्वं परिस्रुतिं करोति तच्च तत्सकलमुपलभ्यते । यदि चायमवयवानुप्रवेशो द्रव्यस्य विनाशकः स्यात् न परिस्रवादिमान् घट उपलभ्येत परिस्रवमाणत्वाज्ञाजनगतानामपामवस्थानं न स्यात्(२) विनाशो च कार्यद्रव्याणां व्यवहिताव्यवहितयोस्तुल्यकालोपलब्धि(३)प्रसङ्गः यदि चानुप्रविश्य द्रव्यं द्रव्यान्तरं व्यतिभिनत्ति तेन चाक्षुषस्य रश्मेरनुप्रवेशात् स्फटिकादि विभग्नमिति व्यवहिते चाव्यवहिते च तुल्योपलब्धिः प्राप्नोति । तस्माच्छालिखीजप्रदृष्टान्तः ।

यस्य च पूर्वस्कन्धनिरोधसमकालानि स्कन्धान्तराणि प्रादुर्भवन्ति तस्य तेषां स्कन्धान्तराणां न कर्मनिमित्तः सर्गः प्राप्नोति । अकर्मनिमित्तेन सत्त्वसर्गेण शुभाशुभप्राप्त्यर्था क्रिया न प्राप्नोति । सुखी स्यामिति तत्क्रियेति चेत् ?— अथ मन्यसे स्वयं कर्माणि करोति कथमहं सुखी स्यां दुःखी न स्यामिति ? । तत्राननुभूतत्वात्—येन सुखमनुभूतं सुखसाधनसम्बन्धानुस्मृतिश्च यस्य स तत्साधनमुपादत्ते यस्य पुनः प्रतिक्षणं प्रध्वंसिनः संस्कारास्तस्य सुखसाधनसम्बन्धानुस्मृतेरभावात् सुखी स्यामिति क्रियानुपप-

(१) प्रतिबध्नीयात्—पा० ४ पु० ।

(२) अवस्थानमेव न स्यात्—पा० ४ पु० ।

(३) तुल्योपलब्धि—पा० ४ पु० ।

स्तिः मोक्षार्थश्च प्रयासो नोपपद्यते(१) अप्रसिद्धत्वात् भ-
तथात्र एवायं मुच्यत इति मुक्त्यर्थं ब्रह्मचर्यवासो ध्या
परिपृच्छा च न प्राप्नोति । तथागतेन भिक्षवः परिपृच्छ-
न्ते कच्चिद्यूयं मया विनीता इति ? ते चाहुर्विनीताः स्म
इति । अतीतानागतवर्त्तमानानां चानुपकार्यत्वात्-ये तावदना-
गताः संस्कार्यास्ते तावदसत्त्वान्नोपक्रियन्ते ये ऽप्यतीता(२)
स्तेप्येवं, ये तु वर्त्तमानास्तेषु संस्काराधानमशक्यं वर्त्तमान-
लक्षणस्यानुपकार्यत्वात् न हि तस्यावस्थानकालोऽस्ति य-
स्मिन्नुपक्रिया स्यात् । संस्कार्यसंस्कारकयोः सहोत्पादाद्यु-
क्तमिदमिति चेत् ? न संस्कार्यसंस्कारकयोः सहोत्पादे(३) नि-
यमानुपपत्तिरिति । इदं संस्कारकमिदं संस्कार्यमिति निय-
मो नोपपद्यते । अथ संस्कारकमपेक्षमाणं संस्कार्यं विलक्षण-
कार्यं करोति विलक्षणकार्योत्पादश्च संस्कार इत्युच्यते ? । न,
संस्कार्यानभिधानात् इदं संस्कारकमिदं संस्कार्यमित्येतत् क-
थम् ? न हि यो यस्य विशेषं नाधत्ते स तत्संस्कारकः
तत्संस्कार्यमिति च शक्यं व्यपदेष्टुम् । अथाप्युपदेशेन संस्का-
राणामनागतानामनुत्पत्तिः क्रियते ? । न, अनागतानामनुत्पत्तेः
सत्त्वात् । यासावनागतानामनुत्पत्तिः संस्काराणां नासौ
कदाचिन्नासीति किं तस्याः क्रियते । तस्मान्मुक्त्यर्थो ब्रह्मच-
र्यवास इत्यनुपपन्नम् । तदेवमनभ्युपगतार्थान्तरात्मनो दोष
इति ॥

तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् ॥ ५ ॥

तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात् । यस्यात्मा

---

(१) मुक्त्यर्थश्च प्रयासो नोपयुज्यते—पा० ४ पु० ।
(२) ये व्यतीताः—पा० १ पु० । (३) सहोत्पादात्—पा० ४ पु० ।

नित्यः तस्यापि हिंसाफले न प्राप्नुतः हिंसा तावन्न प्राप्नोति नित्यत्वात्, फलमपि नात्मनो युक्तम् अनुपकार्यत्वात् । अस्य चार्थस्य ज्ञापिकां कारिकामुदाहरन्ति ॥

वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोर्मयम् ।
चर्मोपमश्चेत् सोऽनित्यः खतुल्यश्चेदसत्फलः ॥

तदेवमेकस्मिन् मते हिंसा विफला अपरस्मिंस्तु पक्षेऽनुपपन्ना निष्फला चेति । इयं च हिंसा सांख्यपक्षे सम्भवति बुद्धेः परिणामित्वात् कार्यकारणभावः(१) परिणामित्वादुच्छिद्यते स एव च तत्फलानि भुङ्क्ते तत्फलस्य तत्र व्यक्तेः ? । न, पूर्वावस्थाऽपरित्यागात्—यथैवात्मा पूर्वावस्थां न जहातीति तत्र फलं नेष्यते तथा बुद्धिरपि पूर्वावस्थां न जहाति नित्यत्वादिति । अथ मन्यसे पूर्वावस्थां जहातीति ? नित्यत्वं विरुध्यते पूर्वावस्थापरित्यागेन बुद्धिनित्यत्वं विरुध्यते । अथाप्यवस्था भिद्यत इति मन्यसे ? तथाप्यनिष्टो व्याघातः अवस्थाभ्योऽवस्थावतोऽनन्यत्वात्(२) न ह्यवस्थाभ्योऽवस्थावानन्य इति अवस्थाभेदे ऽवस्थावान् भिद्यत इति । य एव बौद्धस्य प्रतिक्षणं धर्मिषु संस्कारेषु दोषः स एव प्रतिक्षणपरिणामिष्वपीति । ऋजुवक्रत्वादिति चेत् ?—अथ मन्यसे ऋजुवक्रतादिभेदे यथाङ्गुलिद्रव्यं न भिद्यते न चाङ्गुलीतोऽन्ये ते तथावस्थाभेदे बुद्धेरभेद इति ? नान्यत्वात्—अन्ये ऋजुवक्रते । युक्तं च यदन्यभेदे अन्याभेद(३) इति, न पुनरवस्थाभ्योऽन्याव-

(१) कार्यकारणसङ्घातः—पा० १ पु० ।
(२) अभेदात्—पा० ४ पु० ।
(३) भेदेनान्याभेद्—पा० ४ पु० ।

-स्यावतोऽन्यत्वम्, तस्माद्यमो दृष्टान्तः । किं पुनर्वक्रत्वं ऋजुत्वं वा ? गुणः-आकुञ्चनजं वक्रत्वं प्रसारणजं ऋजुत्वं गुणाश्च गुणिनोऽर्थान्तरमिति प्रतिपादितमेतत् ।

बुद्धेरप्येवमिति चेत् ? अथ मन्यसे बुद्धेरपि ये द्वे अवस्थे भिद्येते तयोर्भेदे बुद्धिर्न भिद्यत इति ? ( अन्यावस्थातो बुद्धिः?) (१) तत्र सिद्धान्तविरोधात्-न भवतां पक्षे धर्मधर्मिणोर्भेद इति भेदं चाभ्युपगच्छता सिद्धान्तस्त्यक्तो भवति । तस्माद्यथा आत्मनित्यत्वे सुखदुःखानुपभोगो दोष इति न तत्र सुखदुःखे कल्प्येते इति तथा बुद्धिनित्यत्वात् बुद्धावपि न कल्पनीये(२) समाने नित्यत्वमिति । अथात्मनो नित्यस्य पुण्यपापाभ्यां किं क्रियते ? सुखदुःखे, ताभ्यां किं क्रियते ? प्रत्ययः(३) ये सुखदुःखे आत्मनि तद्विषय(४) प्रत्यय आत्मनि भवतीत्येतावत् क्रियते स च प्रत्ययो भोगः । यत् पुनरेतद्वर्षातपाभ्यां किं व्योम्न इति ? यदेव चर्मणो वर्षातपाभ्यां क्रियते तद्व्योम्नः । अथ चर्मणः किं ? सम्बन्धः यथा चर्म वर्षातपाभ्यां सम्बध्यते तथा व्योमापि । वर्षातपसम्बन्धाच्चर्मवदनित्यं व्योमेति चेत्?- अथ मन्यसे यथा चर्म वर्षातपाभ्यां सम्बन्धाद्विक्रियते तथा व्योम वर्षातपसम्बन्धाद्विकरिष्यत(५) इति चेत् ? नानेकान्तात् वर्षातपसम्बन्धी परमाणुरथ च नित्य इत्यनेकान्त इति । चर्मणश्चानित्यत्वं किं वर्षातपसम्बन्धादथ कारणविभागादथा-

(१) एतन्मध्यस्थः पाठो नास्ति ४ पु० ।

(२) कल्प्येते—पा० ४ पु० ।

(३) सुखदुःखे पुण्यपापाभ्यामात्मनो नित्यस्य क्रियते अथाभ्यां सुखदुःखाभ्यां नित्यस्यात्मनः किं क्रियते प्रत्ययः—पा० ४ पु० ।

(४) आत्मनस्तद्विषयः—पा० १ पु० ।

(५) वर्षातपाभ्यां विकरिष्यते—पा० ४ पु० ।

श्रयविनाशादिति ? । वयं तु ब्रूमः कारणवतः तद्विभागाद्युक्तो विनाशः(१) न पुनराकाशस्य कारणमस्तीत्युभयाभाव इति तद्गतां चावस्थानाञ्च सम्बन्धो नाशहेतुः । यदि चायं सम्बन्धो नाशहेतुरभविष्यञ्च तद्गतामवस्थानमभविष्यत् अवतिष्ठन्ते तु भावाः यावन्न विनाशकारणसन्निपात इति ।

अथ मन्यसे वर्षातपाभ्यां चर्मणः सङ्कोचविकाशौ भवतो न त्वाकाशस्येति ? तन्न विकल्पानुपपत्तेः । सङ्कोचविकाशौ चर्मण इति कोऽर्थः ? किं तावदल्पत्वमहत्त्वे ? उत संयोगविभागाविति ? तन्न तावत् सङ्कोचविकाशावल्पत्वमहत्त्वे यावद्द्रव्यभावित्वात् परिमाणस्य, यावद्द्रव्यं हि परिमाणं तद्द्रव्ये सति न निवर्त्तते इति । अथ चर्मणः सङ्कोचविकाशौ संयोगविभागाविति ? तदपि न युक्तमेकत्वात्—न ह्येकस्य संयोगविभागौ सम्भवत इति । कथं तर्हि इदमुच्यते चर्मणः सङ्कोचधर्मणो विकाश इति ? चर्मकारणानामविनश्यत्कार्याणामवयवानामातपसम्बन्धात्परस्परेण याः मात्रयः आरब्धकार्याणां द्रव्यान्तरानारम्भिकास्ता इतरेतरोपश्लेषेणावयवेषु वर्त्तमानास्तदेकार्थसमवायिनि चर्मण्युपचर्यन्ते तदपेक्षं चेदमुच्यते चर्मणः सङ्कोचो न पुनश्चर्म सङ्कुचतीति । एतेन - तदवयवानामेवोदकसम्बन्धापेक्षाणामविनश्यत्कार्याणां परस्परतो विभागो विकाश इति । विक्रियायां च दृष्टान्ताभावात् सदेव वस्त्वविनश्यद्विक्रियामापद्यत इति न दृष्टान्तोऽस्ति । विक्रिया तु पदार्थान्तरोत्पादः यथा पूर्वरूपादिनिवृत्तौ रूपान्तरोत्पादे विकृतो घट इति । यद्येवम्भूतो विकार आत्मन्यपि चकास्ति तत्रापि सुखनिवृत्तौ दुःखमादुर्भावे इति सुखप्रत्ययनिवृत्तौ दुःखप्रत्यय इति, तस्मान्नित्य-

(१) तद्विभागात् तद्विनाशाद्युक्तो विनाशः—पा० ४ पु० ।

स्यात्मनः सुखदुःखोपभोग इति सिद्धम् । नित्यत्वादात्मनो हिंसादोषोऽपरिहार्यः ? न अन्यथा तदुपपत्तेः—आत्मनित्यत्वेऽप्यन्यथा हिंसा भवति ।

अस्यार्थस्य ज्ञापनाय न कार्याश्रयकर्तृवधादिति सूत्रम्—

न कार्याश्रयकर्तृवधात् ॥ ६ ॥

न ब्रूमो नित्यस्य सत्त्वस्य वधो हिंसेति, अपि तु अनुच्छित्तिधर्मकस्य सत्त्वस्य यच्छरीरं यानि च सुखसंवित्तिसाधनानि(१) इन्द्रियाण्यसाधारणानि तेषां पीडा वैकल्यं वा प्रमापणं वा हिंसेति । कुत एतत् प्रतिपत्तव्यम् ? हिंसायाः फलोपभोगस्य च उभयपक्षसम्प्रतिपन्नत्वात् हिंसाफलोपभोगश्चोभयपक्षसम्प्रतिपन्नः सेयं हिंसा एकस्मिन् पक्षे सम्भवति । यस्य तावत् प्रतिक्षणध्वंसिनः संस्कारास्तस्य किं हिंस्यते निर्हेतुकत्वाद्विनाशस्य कस्य व्यापारोऽस्ति । अथ विलक्षणोत्पत्तिनिमित्तत्वेन व्यवस्थिप्रमानः परो हिनस्तीत्युच्यते ? नन्वुपचारो भवति, न भवतः प्रधानमस्ति येन शरीरोत्पादक उपचर्यते । न समानत्वात्—भवतामपि पक्षे न प्रधानं हिंस्यत इति ? सत्यम् ममापि कार्याश्रयकर्तृवधो हिंसेति तुल्यम् । अयं तु विशेषो यत एकस्मिन् पक्षे य एवायमात्मा शरीरादिसाधनः कर्म करोति स एव तत्फलमुपभुङ्क्ते इति अकृताभ्यागमदोषो नास्ति । भवतामकृताभ्यागमः कृतप्रणाशश्चेति(२) परिशेषादात्मनित्यत्वे हिंसेति व्यवस्थितम् । तत्र कार्याश्रयशब्देन शरीरमुच्यते तन्निमित्तत्वादुपभोगस्येति कर्तृणीन्द्रियाणि तत्साधनत्वात् । अथवा समानाधिकरणसमासाच्छ-

(१) सुखदुःखसाधनानि—पा० ४ पु० ।
(२) कृतहानं चेति—पा० ४ पु० ।

रीरमेव कार्याश्रयकर्तृशब्दाभ्यामुच्यत इति कर्त्ता भोक्ता चात्मा । किं पुनरिदं कर्तृत्वं भोक्तृत्वं वा किमिति ? ज्ञान(१)-चिकीर्षाप्रयत्नानां समवायः कर्तृत्वम्, सुखदुःखसंवित्समवायो भोक्तृत्वम्, एतत्तु न शरीरे, निमित्तत्वात् कर्तृ शरीरमुच्यते ।

इतश्च देहादिव्यतिरिक्त आत्मा—

**सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् ॥ ७ ॥**

सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् । सव्येन चक्षुषा दृष्टमितरेण प्रत्यभिजानातीति सूत्रम् । तत्र प्रतिसन्धानं प्रत्यभिज्ञानं, स्मृतिपूर्वकत्वात् प्रत्यभिज्ञानस्य, प्रतिसन्धानाच्चैककर्तृत्वं प्रत्ययानां सिध्यतीति ।

सिद्धत्वादनारम्भ इति ?–दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्येतस्मिन् प्रकरणे सिद्ध आत्मव्यतिरेकः सिद्धत्वादनारभ्यं प्रकरणमिति ? । इन्द्रियव्यतिरेकज्ञापनार्थमित्येके—एके इदं प्रकरणमिन्द्रियव्यतिरेकज्ञापनार्थं वर्णयन्ति । तन्न, तत एव सिद्धेः–पूर्वप्रकरणेनैव इन्द्रियशरीरव्यतिरेकः सिद्ध इति । समुच्चयार्थमित्यपरे—अपरे तु समुच्चयार्थं सव्यदृष्टस्येतरेण प्रत्यभिज्ञानादिति हेतुं ब्रुवते । युक्तोऽन्यः समुच्चयः, अयं तु न युक्तो विरोधात् सव्यदृष्टस्येतरेण प्रत्यभिज्ञानादिति ब्रुवाणो युक्तिं बाधते । का पुनरियं युक्तिबाधा ? अनेकत्वादिन्द्रियस्य युगपदधिष्ठानासम्भवः अणु मनोऽनेकं चक्षुः, न चाणोर्मनसो युगपदनेकेन चक्षुषा सम्बन्धः सम्भवति । अथासम्बद्धमपि द्वितीयं चक्षुरर्थानालोचयति ? एवं च सति द्वितीयचक्षुर्वदितरचक्षुरपि मनसाऽनधिष्ठितमेव प्रव-

(१) ज्ञानविज्ञान—पा० १ पु० ।

र्त्तिष्यत इति(१) व्यर्थं मनः प्राप्तम्, अनधिष्ठितं च प्रवर्त्तमा-
नमपीन्द्रियं करणत्वं बाधते । न च करणमनधिष्ठितं प्रवर्त्तमानं
दृष्टमिति समग्रासमग्रयोश्च तुल्योपलब्धिप्रसङ्गः न ह्यन-
धिष्ठितमिन्द्रियं प्रवर्त्तेत इत्यणुत्वान्मनसा नित्यमेकमेव स-
म्बद्ध्यत इति विकलाविकलयोस्तुल्योपलब्धिः प्राप्नोति । प्रक-
रणविरोधश्च इन्द्रियपञ्चकत्वादितीन्द्रियपञ्चत्वप्रतिपादकं प्रक-
रणं विरुध्यते इति ।

यदि तर्ह्येकमिन्द्रियं द्वित्वोपलब्धिः कथं ? द्वित्वोपलब्धिप्रति-
पादनार्थं नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानादिति सूत्रम्—

**नैकस्मिन् नासास्थिव्यवहिते द्वित्वाभिमानात् ॥ ८ ॥**

एकमिन्द्रियं द्रव्यं ह्यधिष्ठानमभिन्नम् । कोऽधिष्ठानार्थः ?
तैजसस्य चक्षुषः पार्थिवेन कृष्णसारेण उपकारविकारभेदानु-
विधानम्—यस्मात् कृष्णसारे उपक्रियमाणे उपक्रियते वि-
क्रियमाणे विक्रियते तिष्ठति पश्यतीति, तस्मादस्य कृष्णसा-
रमधिष्ठानमुच्यते । एतच्च व्याख्यातं शरीरसूत्रे । तस्यान्तौ
गृह्यमाणौ द्वित्वाभिमानं प्रयोजयतः यथा दीर्घस्य द्रव्यस्य मध्ये
व्यवहितस्यान्तावुपलभ्यमानौ द्वित्वाभिमानं प्रयोजयत इति ॥

**एकविनाशे द्वितीयाविनाशान्नैकत्वम् ॥ ९ ॥**

एकविनाशे द्वितीयाविनाशान्नैकत्वम् । एकस्मिन् विन-
ष्टे उद्धृते वा द्वितीयमवतिष्ठते विषयग्रहणे लिङ्गम् । नान्य-
था तदुपपत्तेः—द्वितीयमवतिष्ठते इति नैतत् कस्यचित् प्रत्य-
क्षम् प्रत्ययमात्रं तु विनष्टेऽप्येकस्मिन्नधिष्ठाने यदवतिष्ठते ते-
न भवति । न चाधिष्ठानमिन्द्रियम्, अपि तु यत्तदनुवि-

(१) प्रवर्त्तयिष्यतीति—पा० ४ पु० ।

पायि तदनुविधत्त इति(१) यथा बहुवातायनस्य वेश्मन एकपिधानादितरेण ग्रहण(२)मिति ॥

अवयवनाशे ऽप्यवयव्युपलब्धेरहेतुः ॥१०॥

अपरे त्ववयवनाशेऽप्यवयव्युपलब्धेरहेतुरिति परिहारं(३) वर्णयन्ति ।

तस्योत्तरम्—

दृष्टान्तविरोधादप्रतिषेधः ॥ ११ ॥

दृष्टान्तविरोधादप्रतिषेध इति सूत्रम् । अस्यार्थः—न कारणद्रव्यविनाशे कार्यद्रव्यमवतिष्ठते । यदि नावतिष्ठते कथं कारणद्रव्यविनाशे कार्यमुपलभ्यत इति ? । क एवमाह उपलभ्यत इति, अपि तु बहुष्ववयवेषु यस्य कारणानि विभक्तानि तद्विनष्टम् । यस्य न विभक्तानि(४) तदुपलभ्यत इति । शेषं भाष्ये ॥

इन्द्रियान्तरविकारात् ॥ १२ ॥

अनुमीयते चायं देहादिव्यतिरिक्तश्चेतन आत्मा इन्द्रियान्तरविकारात् । कस्यचिदम्लस्य फलस्य दृष्टसाहचर्ये(५) रूपे गन्धे वा केनचिदिन्द्रियेण गृह्यमाणे रसनेन्द्रियविकारः । कः पुनर्विकारः ? रसानुस्मृतौ रसगर्द्धिप्रवर्तितः गर्द्धिः तृष्णा रसतृष्णाप्रवर्तितो दन्तान्तरपरिस्रुताभिरद्भीरसनेन्द्रियस्य संप्लु-

(१) तदेकमनुविधत्त इति–पा० ४ पु० ।
(२) पिधानमपरेण ग्रहण–पा० ४ पु० ।
(३) परिहारान्तरं–पा० ४ पु० ।
(४) न विनष्टानि–पा० ४ पु० ।
(५) गृहीतसाहचर्ये–पा० ४ पु० ।

वः सम्बन्धो विकार इत्युच्यते। सा चेयं स्मृतिरिन्द्रियचैतन्ये न प्राप्नोति। न च प्रतिक्षणध्वंसिषु(१) संस्कारेष्वन्यानुभूतस्यान्येनास्मरणादिति । इन्द्रियान्तरविकार इन्द्रियान्तरधर्मः स कथं व्यधिकरणत्वादात्मव्यतिरेकं प्रतिपादयति? नेन्द्रियान्तरविकार आत्मव्यतिरेकप्रतिपत्तिकारणं,मपि तु स्मृतिः न ह्येकमननुभवितारमन्तरेण स्मृतिः प्राप्नोति, स्मृतिश्च भावत्वाद्वाविद्यपेक्षा उत्पत्तिवदिति न्यायः। न च स्मृतिमन्तरेणेन्द्रियविकारः सम्भवतीति मत्यस्य इन्द्रियान्तरविकार उपादीयते अननुभूतरसस्येन्द्रियविकाराभावादिति व्यतिरेकहेतुः।

न स्मृतेः स्मर्तव्यविषयत्वात् ॥ १३ ॥

न स्मृतेः स्मर्तव्यविषयत्वात् । स्मृतिर्नाम धर्मस्तस्याः स्मर्तव्योऽर्थो विषयः सेयं स्मर्तव्यार्थसंनिधानादुपजायमानाऽपरिदृष्टसामर्थ्यं न स्मर्तारं प्रतिपादयिष्यति। न हि स्वकारणसंनिधानादुत्पन्नो(२)ऽङ्कुरोऽपरिदृष्टसामर्थ्यं कुम्भादिकमर्थं प्रतिपादयति।

तदात्मगुणसद्भावादप्रतिषेधः ॥ १४ ॥

तदात्मगुणसद्भावादप्रतिषेधः । न स्मर्तव्यमात्रात् स्मृतिरुत्पद्यते—यदायमतीतमर्थं स्मरति तदा स्मृतिरनाधारा प्राप्नोति, न चेयमनाधारा युक्ता गुणत्वात्, न हि कश्चिद्गुणोऽनाधारो दृष्ट इति(३) न चेयमिन्द्रिये सम्भवत्यननुभूतत्वात् । न विषये तस्यासत्त्वात्। न शरीरे शरीरगु-

(१) प्रतिक्षणविनाशिषु—पा० ४ पु०।
(२) उपजायमानो—पा० ४ पु०।
(३) युक्त इति—पा० ४ पु०।

णानां प्रसंसाणां स्वात्मपरात्मप्रसक्तत्वात् । न चेयमनाधारा गुणत्वादित्युक्तम् । न चेयं नास्ति । न चात्मन्यप्रसत्याः सद्भावो युक्त इति । तेभ्योऽन्यस्य तदुत्पत्तौ(१) सामर्थ्यमभ्यगम्यते कथमितनेनैव प्रत्युक्तम् । अस्यात्मनः सामर्थ्ये स्मृतेराधारभावः । न चेयमनाधारा कार्यत्वात् सर्वं कार्यमाधारवत् क्षीरादि दृष्टमिति । एतेन—

"न तच्चक्षुषि नो रूपे नान्तराले तयोः स्थितम् ।
न तदस्ति न तन्नास्ति यत्र तत्प्रतिष्ठितं भवेत् ॥"

इति प्रत्युक्तम् । न तदस्ति न तन्नास्तीति व्याहतम् । न चानया कारिकया विज्ञानस्याश्रयिभावः प्रतिषेद्धुं शक्यते । किं कारणम् ? विशेषप्रतिषेधात्—न तच्चक्षुषि नो रूप इत्यादिविशेषप्रतिषेधः । अथानाश्रितमेव विज्ञानम् ? व्यर्थं वाक्यं न तच्चक्षुषि नो रूप इति—कस्य वा चक्षुषि रूपे वा विज्ञानं वर्तते यं प्रति प्रतिषेधः, अयं च विज्ञानस्याश्रयप्रतिषेधो(२) विचार्यमाण आत्मसत्त्वं प्रतिपादयति । न हि विज्ञानस्यात्मसत्त्वमन्तरेण वाक्यमेतदर्थवत्तायां व्यवतिष्ठते । अथवा एकस्यानेकविषयोपलब्धिप्रतिसन्धानमनेन सूत्रेणोपदर्शित इत्युक्तन्यायम् । शेषं भाष्य इति ।

अपरिसंख्यानाच्च स्मृतिविषयस्य ॥ १५ ॥

( इत्यष्टभिः सूत्रैः प्रासङ्गिकं चक्षुर्द्वैतप्रकरणम् ॥ )

नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात् ॥ १६ ॥

नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात् । य एते मनसा

(१) तदुपलब्धि—पा० ४ पु० । तदुपपत्तौ—इति च क्वचित् ।
(२) अभाव निषेधो—पा० पु० ।

आत्मप्रतिपादका हेतव उपदिष्टाः सर्वे एते मनसि सम्भवन्ति । एवं च न मनोव्यतिरिक्त आत्मा सिद्ध्यति ।

ज्ञातुर्ज्ञानसाधनोपपत्तेः सञ्ज्ञाभेदमात्रम् ॥ १७ ॥

ज्ञातुर्ज्ञानसाधनोपपत्तेः सञ्ज्ञाभेदमात्रम् । यथा ज्ञातारमभ्युपगच्छता ज्ञानसाधनानि चक्षुरादीनि प्रतिपद्यन्ते तथा मन्तारं प्रतिपद्यमानेन मतिसाधनमभ्युपेयम् । यच्च तन्मतिसाधनं तन्मन इति सञ्ज्ञाभेदमात्रम् । अथ मन्ता निःसाधनो मतिं करोति ? एवमयं ज्ञाता निःसाधनो ज्ञानं करिष्यतीति सर्वेन्द्रियविलोपप्रसङ्गः ।

नियमश्च निरनुमानः ॥ १८ ॥

नियमश्च निरनुमानः । योऽयं नियम आश्रीयते मतिरसाधना न पुनर्ज्ञप्तिरिति नियमो निरनुमानः ज्ञप्तिवत्तु(१) मतेः ससाधनत्वे ऽनुमानमस्ति सुखादयश्च रूपादिभ्यो विषयान्तरमिति तद्विषयत्वादुपलब्धेः साधनेन भवितव्यम् न हि किञ्चिद सविषयं ज्ञानमसाधनं दृष्टं रूपादिज्ञानवदिति नियमश्च निरनुमानः सुखादिविज्ञानानि निःसाधनानि भवन्तु माभूवन(२) रूपादिविषयाणीति । यदि सर्वं विज्ञानं ससाधनमुच्यते(३) मनस्यपि करणान्तरं प्राप्नोति विषयत्वात ? ओमित्युच्यते अस्ति मनसि करणं, किं पुनस्तत् ? येन मनोऽधिगम्यते । केन च मनोऽधिगम्यते ? अयुगपज्ज्ञानोत्पत्त्या । यस्य तु मनः प्रत्यक्षं भवति तस्य योगजधर्मानुगृहीत आत्ममनःसंयोगः करणं योगि-

(१) ज्ञप्तिवच्च—पा० ४ पु० ।
(२) मा भवन्तु—पा० ४ पु० ।
(३) ससाधनं मन्यते—पा० ४ पु० ।

धर्माणां चाचिन्त्यविषयत्वात् कथं ते मनो गृह्णन्तीत्यविचारणीयमेतत्। एतेनात्मज्ञानं(१) मत्युक्तम्। आत्ममनःसंयोगस्य कारणभावादिति। एवं तावदात्मनोऽस्तित्वव्यतिरेकौ सिद्धौ, यदुक्तं चात एव, दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् नान्यदृष्टमन्यः स्मरतीति शरीरदाहे पातकाभावादिति। सेयं सर्वा व्यवस्था शरीरभेदे सति सम्भवतीति॥

( इति त्रिभिः सूत्रैर्मनोव्यतिरेकाप्रकरणम्। )

किं पुनरयं देहादिसङ्घातादन्यो नित्योऽथानित्य इति? एतस्मिन्नर्थे उभयथा दृष्टत्वादिति संशयमुपपादयति। अनुपपन्नरूपश्चायं(२) संशयः—आत्मास्तित्वव्यतिरेकहेतुभिः शरीरभेदेऽप्यभेद आत्मनि सिद्धः सिद्धत्वात् प्रकरणमनारभ्यमिति?। नानारभ्यं कथं? जन्मप्रभृति यावत् प्रायणमेतस्मादेकः सिध्यति न पुनर्देहविनाशादूर्ध्वं भवतीत्येतत् सिद्ध्यत्येतस्यार्थस्य ज्ञापनार्थं पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेरिति सूत्रम्—

पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः॥ १९॥

अस्यार्थः। जातः खल्वयं कुमारको विषयाधिगमासमर्थेषु इन्द्रियेषु हर्षभयशोकान् प्रतिपद्यमानो दृष्टः स्मितकम्परुदितानुमेयान्, ते च(३) स्मृत्यनुबन्धादुत्पद्यन्ते। स्मृत्यनुबन्धश्च नान्तरेण पूर्वशरीरमिति। तत्र जन्म निकायविशिष्टाभिः शरीरेन्द्रियबुद्धिवेदनाभिः सम्बन्धः। अभिप्रेतविषयप्रार्थनाप्राप्तौ सुखा-

(१) विज्ञानं—पा० ४ पु०।
(२) अनुपपन्नोऽयं—पा० ४ पु०।
(३) अनुमेयानि तानि च—इति क्वचित्।

नुभवो हर्षः । अनिष्टविषयसाधनोपनिपाते तज्जिहासोर्हानाशक्यता भयम् । इष्टविषयवियोगे सति तत्प्राप्त्यशक्यप्रार्थना शोकः । तदनुभवः सम्प्रतिपत्तिः । एकविषयानेकविज्ञानोत्पादोऽभ्यासः एकाकारविषयो वा । यथा शालयोऽनेनाभ्यस्ता इति । प्रत्यक्षबुद्धिनिरोधे (१) तदनुसन्धानविषयः प्रत्ययः स्मृतिः । तदनुगृहीतस्तदनुसन्धानविषयः प्रत्ययस्तद्भावविषयः प्रत्यभिज्ञानम् । अनुबन्धो—भावनाख्यः स्मृतिहेतुः संस्कारः । इष्टविषयानुस्मरणान्नयनादिप्रसादः स्मितम् । अनिष्टविषयानुस्मरणात् तत्साधनजिहासानुष्ठानलक्षणो हस्तादिविक्षेपवतोऽश्रुविमोचनसहितः शब्दविशेषो रुदितम् ।

स्मितरुदिते व्यधिकरणत्वादसाधनम् ?—अथ मन्यसे स्मितरुदिते बाल्यावस्थायां भवतो न च बाल्यावस्था आत्मनः तस्माद्व्यधिकरणत्वादसाधनमिति ? । न, शोकादिमदात्मवतीति बाल्यावस्थायाः साध्यत्वात्—शोकादिमदात्मवती बाल्यावस्थेति साध्यं स्मितरुदितादिमत्त्वादिति । बाल्यावस्था वयोधर्मो यौवनावस्थावत् । एतेन स्मृतिसंस्कारानुभवपूर्वशरीरसम्बन्धवदात्मवत्त्वं व्याख्यातम् । कथमिति ? यथा स्मितरुदितवत्त्वेन शोकादिमदात्मवती बाल्यावस्था साध्यते एवं शोकादिमदात्मवत्त्वेन स्मृतिमदात्मवती बाल्यावस्था साध्या, तथा स्मृतिमदात्मवत्त्वेन संस्कारवदात्मवती बाल्यावस्था साध्या, संस्कारवदात्मवत्त्वेन पूर्वानुभववदात्मवती, पूर्वानुभववदात्मवत्त्वेन पूर्वशरीरसम्बन्धवदात्मवती साध्या सर्वत्र पूर्वानुभववदात्मवत्त्वेन पूर्वशरीरसम्बन्धवदात्मवती साध्या सर्वत्र यौवनावस्था दृष्टान्तः(२) सा हि स्मितरुदितवती भवतीति

(१)प्रत्यक्षबुद्धिनिरोधे—पा०७४ पु०। (२)यौवनादिर्दृष्टान्तः—पा०७४ पु०।

शोकादिपदात्मवती चेति सर्वत्र वक्तव्यम् ॥

**पद्मादिषु प्रबोधसम्मीलनविकारवत् तद्विकारः ॥२०॥**

पद्मादिषु प्रबोधसम्मीलनविकारवत् तद्विकारः । अनित्येऽपि विकारदर्शनादनेकान्त इति सूत्रार्थः ।

कः पुनरयं प्रबोधः किं च सम्मीलनमिति ? । पद्मपत्रावयवविभागो ऽविनष्टपत्रकार्यः प्रबोधः । पद्मपत्त्रावयवानामारब्धकार्याणां याः पुनः(१) परस्परेण प्राप्तयः तत्सम्मीलनमिति । न विकल्पानुपपत्तेः—पद्मादिषु प्रबोधसम्मीलनविकारादिवत्तद्विकार इति किमयं दृष्टान्तः साधनपक्ष ? उतानैकान्तिकपक्ष(२) इति ? । यदि साधनपक्षे ? हेतुमन्तरेण दृष्टान्तमात्रं न साधनमिससाधनं दृष्टान्तः । अथ दूषणं ? तत्किं दृष्टकारणप्रत्याख्यानम् ? उत कारणान्तरोपपादनम् ? अथात्मन उत्पत्ति(३)निरोधकारणानुमानम् ? अथाकस्मिकत्वमिति ? । यद्यदि तावद्दृष्टकारणप्रत्याख्यानम् ? तदयुक्तम् दृष्टेन विशेषितत्वात्–यौवनाद्यवस्थासु स्मितरुदितवत्त्वं शोकादिमदात्मवत्त्वं च दृष्टमिति–दृष्टेन स्मितरुदितवत्त्वेन शोकादिमदात्मवत्त्वं बाल्यावस्थायां गम्यत इति न दोषः । अथ कारणान्तरोपपादनम् ? तदपि न युक्तम्–अत एव दृष्टेन विशेषितत्वादिति । अथात्मन उत्पत्तिनिरोधकारणानुमानम् ? तन्न युक्तं–द्रव्यस्य सतः सर्वदा अमूर्तत्वादकारण आत्मा आकाशादिवदिति । आत्मानं च कृतकं प्रतिपद्यमानेन कारणमस्य वाच्यम् ? कुतः ?

(१) यत् पुनः—पा० ४ पु० ।
(२) उतानेकान्तपक्ष—पा० ४ पु० ।
(३) अथात्मन उपपत्ति—पा० ४ पु० ।

कार्यस्य कारणवत्त्वात्(१) सर्वं कार्यं कारणवद्दृष्टमिति।

अथ पद्मादिप्रबोधसम्मीलनविकारोऽकस्माद्भवतीति ? तन्नोष्णशीतवर्षकाल(२) निमित्तत्वात् पञ्चात्मकविकाराणाम् ॥

नोष्णशीतवर्षकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् ॥ २१ ॥

नायमाकस्मिकः पद्मादिप्रबोधसम्मीलनविकार इति सूत्रार्थः। एवं च सति दृष्टान्तेन न किञ्चित् प्रतिषिध्यते—पञ्चात्मकविकाराणामिति। न पञ्चात्मककारणानि(३) पद्मानीति, अपि तु पञ्चानां भूतानामनुग्रहे सति भवन्तीति पञ्चात्मकानीत्युच्यन्ते। वस्तुतस्तु न पञ्चात्मकं किञ्चिदस्तीत्युपरिष्टाद्वक्ष्यामः॥

प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात् ॥ २२ ॥

प्रेत्याहाराभ्यासकृतात् स्तन्याभिलाषात्। जातमात्रस्य वत्सस्य प्रवृत्त्या स्तन्याभिलाषो गम्यते तत्र प्रवृत्त्यनुमेयः(४) स्तन्याभिलाषस्तेनेदं स्मृतिस्तया संस्कारस्तेनानुभवस्तेन पूर्वशरीरमिति पूर्ववत् प्रयोगः। किमर्थं पुनरिदं सूत्रमारभ्यते यदाऽयमर्थः पूर्वाभ्यस्तसूत्रे ऽवगतः ? सामान्यतोऽधिगतस्य(५) विशेषज्ञापनार्थं सूत्रमित्यदोषः॥

प्रवृत्तिमात्रस्यानैकान्तिकत्वज्ञापनार्थम्—अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणमिति सूत्रम्—

(१) कारणवत्त्वनियमात्—पा० ४ पु०।
(२) वर्षाकाल—पा० १ पु०।
(३) कारणानि—इति नास्ति ४ पु०।
(४) प्रवृत्त्यनुमेयः—पा० ४ पु०।
(५) सामान्यतो ज्ञातस्य—पा० ४ पु०।

अयसोऽयस्कान्ताभिगमनवत् तदुपसर्पणम् ॥ २३ ॥

न विकल्पानुपपत्तेः—किमिदमयसोऽयस्कान्ताभिगमन(१) सनिमित्तमाहो निर्निमित्तमिति ? । यदि सनिमित्तं ? तत्केन गम्यते ? नियमेन अयांस्ययस्कान्तमेवोपसर्पन्ति न तु लोष्टादीन्, न च लोष्टादय उपसर्पन्ति, सोऽयं कार्यनियमात् कारणनियमो गम्यते । एतेनाकस्मिकत्वं प्रतिषिद्धम् । तदिदमयसामुपसर्पणं किं दृष्टकारणमस्याख्यानार्थमुपन्यस्तमथवा कारणान्तरोपदर्शनार्थम् ? अथास्मन्युत्पत्तिनिरोधानुमानमिति(२) पूर्ववत्प्रसङ्गः ॥

नान्यत्र प्रवृत्त्यभावात् ॥ २४ ॥

आकस्मिकत्वप्रतिषेधार्थं च नान्यत्र प्रवृत्त्यभावादिति सूत्रम् ॥

वीतरागजन्मादर्शनात् ॥ २५ ॥

नित्य आत्मा वीतरागजन्मादर्शनात् । न हि कश्चिज्ज्ञानमात्रो वीतरागो जायते वीतरागाणां जन्मादर्शनात् सरागो जायते इति गम्यते । जन्म व्याख्यातम् । ततः किं ? रागस्य पूर्वानुभूतविषया(३)नुचिन्तनं योनिः, न च विषयावगमासमर्थेषु इन्द्रियेषु रागः सम्भवति, न च स्मृतिमन्तरेण विषयानुचिन्तनम्(४) युक्तम्, पूर्वानुभूतविषयप्रार्थना सङ्कल्पः । अदृष्टादिति चेत् ?—अथ मन्यसे न पूर्वशरीरयोगो रागाद्गम्यते अपि त्वदृष्टाद्राग इति ? । नाभिप्रायापरिज्ञानात्(५)—नै-

(१) अयस्कान्तस्याभिगमनं—पा० ४ पु० ।
(२) त्मरोधार्थमिति—पा० ४ पु० ।
(३) पूर्वानुभवविषया—पा० ४ पु० ।
(४) रागचिन्तनं—पा० ४ पु० ।
(५) नाभिप्रायाविज्ञानात्—पा० ४ पु० ।

यमभिप्रायः कारणनियमेन रागोऽपि तु पूर्वशरीरसम्बन्धप्रतिपादने सूत्रार्थः । न चादृष्टाद्राग इति ब्रुवता तत्प्रतिपिष्यत इति किञ्चिदुक्तम् । तन्मयत्वाद्राग इति, विषयाभ्यासः खल्वयं भावनाहेतुस्तन्मयत्वमुच्यते जातिविशेषाच्च रागविशेष इति । कथं खल्विदं जातिविशेषस्य निर्वर्तकं तादर्थ्यात्ताच्छब्द्यं लभ्यते वीरणादिवत् ॥

सगुणद्रव्योत्पत्तिवत् तदुत्पत्तिः ॥ २६ ॥

सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिरित्यनैकान्तिकपक्षे सूत्रम् । नोक्तोत्तरत्वात्—उक्तोत्तरमेतत् ॥

न सङ्कल्पनिमित्तत्वाद्रागादीनाम् ॥ २७ ॥

न सङ्कल्पनिमित्तत्वाद्रागादीनामिति । अत्रापि पूर्ववत् सङ्कल्पस्मृतिसंस्कारपूर्वानुभवपूर्वशरीरवदात्मवत्त्वानि योज्यानीति । एवं चानादिः संसारोऽपवर्गान्तः सिध्यतीति व्यवस्थितमेतदस्त्यात्मा व्यतिरिक्तो नित्यश्चेति ॥

( इति नवभिः सूत्रैर्नित्यत्वप्रकरणम् । )

आत्मानन्तरं शरीरमवसरप्राप्तं परीक्ष्यते । अथवा अनादिश्चेतनस्य शरीरयोग इति शरीरं परीक्ष्यते । तस्मिन् परीक्ष्यमाणे आत्माधिकारश्च परि(१)समाप्तो भवति । किं पुनरस्य परीक्ष्यं ? किं घ्राणादिवदेकप्रकृति ? अथ नानाप्रकृतीति ? विमतिपत्तेः संशयः । श्रूयते खल्वत्र विमतिपत्तिस्तत्रेदं तत्त्वम् ॥

पार्थिवं गुणान्तरोपलब्धेः ॥ २८ ॥

मानुषं शरीरं पार्थिवमिति । मानुषमिति किमर्थं(२)

---

(१) आत्माधिकारः पय—पा० ४ पु० ।

(२) किमिति—पा० ४ पु० ।

विशिष्यते ? लोकान्तरशरीराणि न पार्थिवानीति युक्तं विशेषणं, गन्धवत्त्वात् परमाणुवत्—गन्धवान् परमाणुरेकात्मको दृष्टः गन्धवच्च शरीरं तस्मादेकात्मकमेकस्वभावमिति । न त्विदमबादिभिरसंपृक्तया पृथिव्याऽऽरब्धं चेष्टेन्द्रियार्थाश्रयभावेन कल्प्यत इति भूतसंसर्गोऽविप्रतिषिद्धः ।

एवं तर्हि पार्थिवाप्यतैजसं तद्गुणोपलब्धेः, निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम्, गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकमिति (१) प्रत्युक्तम्(२) ॥

तत्र सन्निहितानां तद्गुणोपलब्धेरिति तदिदमनेकभूतप्रकृति शरीरमरसमगन्धमरूपमस्पर्शं च प्रकृत्यनुविधानात् स्यादिति भाष्यम् । तस्य व्याख्यानं पृथिव्युदकाभ्यामारभ्यमाणमगन्धं कारणगन्धस्यैकस्यानारम्भकत्वात् । पृथिव्यनलाभ्यामारभ्यमाणमगन्धमरसं च कारणगन्धरसयोः केवलयोरनारम्भकत्वात् । पृथिव्यनिलाभ्यामगन्धमरसञ्चारूपं च वायोरगन्धरसरूपत्वात् । पृथिव्याकाशाभ्यामगन्धमरसमरूपमस्पर्शं च आकाशे गन्धाद्यभावात् सर्वत्र समानो न्यायः कारणगुणस्य केवलस्यानारम्भकत्वात् । जलानलाभ्यामगन्धश्चारसं च, जलवायुभ्यामगन्धं चारसञ्चारूपं च, जलाकाशाभ्यामगन्धमरसमरूपमस्पर्शं च, तेजोनिलाभ्यामगन्धं चारसं चारूपञ्च, अनलाकाशाभ्यामगन्धमरसमरूपमस्पर्शं च, अनिला-

(१)पार्थिवाप्यतैजसमिति–निःश्वासोच्छ्वासोपलब्धेरिति–गन्धक्लेदपाकेति च वाक्यत्रयं सूत्रत्वेन निर्णीतं वाचस्पतिमिश्रैर्न्यायसूचीनिबन्धे विश्वनाथपञ्चाननेन गोतमसूत्रवृत्तौ च । युक्तं चैतत् अनुपदमेव "इति भाष्य"मिति दर्शनात् ॥

(२) प्रतिषिद्धम्—पा० ४ पु० ।

काशात्मभिरेवमेव भूजलानलैरगन्धमेव भूजलानिलैरेवमेव भूजलाकाशैरेवमेव पृथिव्यनिलानलैरगन्धमरसं च, पृथिव्यनलाकाशैरेवमेव, पृथिव्यनिलाकाशैरगन्धमरसमरूपं च, जलानिलानलैरगन्धमरसं च जलानलाकाशैरेवमेव जलानिलाकाशैरगन्धमरसं चारूपं च अनलानिलाकाशैरेवमेव पृथिव्युदकतेजोवायुभिरगन्धं पृथिव्युदकज्वलनाकाशैरेवमेव अवनिजलाकाशैरेवमेव पृथिव्यनिलज्वलनाकाशैरगन्धमरूपं च(१) जलानिलानलाकाशैरेवमेव पृथिव्युदकतेजोवाय्वाकाशैरगन्धं कारणगुणस्यैकस्यानारम्भकत्वादिति वाच्यम्(२) एककारणकत्वे(३) तु समस्तोत्पत्त्यनुत्पत्तौ नियतत्वप्रसङ्गश्चेत्युक्तम् ॥

श्रुतिप्रामाण्याच्च ॥ २९ ॥

श्रुतिप्रामाण्याच्च । सूर्यं ते चक्षुः स्पृणोमीत्यस्य मन्त्रस्यान्ते पृथिव्या ते शरीरमिति—सेयं स्मृतिः कारणात् कार्योत्पत्तिः । यदुक्तं भवति सूर्यश्चक्षुःकारणं, पृथिवी शरीरस्येति अन्त्येष्टिकाले मन्त्रः सूर्यं ते चक्षुर्गच्छतु पृथिवीं शरीरमिति । अस्यापि मन्त्रस्यार्थो यद्यस्मादुत्पन्नं तत्तस्मिन्नेव प्रलयं गच्छति प्रकृतौ विकारस्य प्रलयाभिधानम् । प्रलयशब्देन च कार्यशून्यं कारणमुच्यते न पुनः कार्यस्य कारणे लयः प्रलयः एवं चासदुत्पद्यते सन्निरुध्यते इत्ययमर्थ उक्तो भवति ॥

( इति शरीरपरीक्षाप्रकरणम् । )

---

(१) रगन्धमरसञ्च—पा० ४ पु० ।
(२) इति समानम्—पा० ४ पु० ।
(३) एककारणगुणत्वे—पा० ४ पु० ।

अथेदानीमिन्द्रियाणि प्रमेयक्रमेण विचार्यन्ते । किमाव्यक्तिकान्याहंकारिकाणि आहो भौतिकानीति संशयकारणप्रतिपादनार्थं सूत्रम्—

**कृष्णसारे सत्युपलम्भाद् व्यतिरिच्य चोपलम्भात् संशयः ॥ ३० ॥**

कृष्णसारे सत्युपलम्भाद्व्यतिरिच्य चोपलम्भात् संशयः । कृष्णसारं भौतिकं तस्मिन्ननुपहते विषयोपलब्धिः, कृष्णसारव्यतिरेकेण विप्रकृष्टदेशावस्थितस्य विषयस्योपलब्धिः, सेयं व्यतिरेकोपलब्धिरभौतिकधर्मः, तदेवमुभयधर्मोपलब्धेः संशय इति । कृष्णसारमेव चक्षुः तस्मिन् सति भावाद्रूपग्रहणस्य—यस्मादिदं रूपग्रहणं सति कृष्णसारे भवति असति न भवति । यच्च यस्मिन् सति भवत्यसति न भवति तस्य तदिति । यथा कार्यद्रव्यस्य रूपादय इति । न प्रदीपादिभिरनेकान्तात्—प्रदीपे सति रूपोपलब्धिर्भवति न च प्रदीपस्य रूपोपलब्धिरित्यनेकान्तः । यस्य कृष्णसारं चक्षुः तस्य सन्निकृष्टविप्रकृष्टयोस्तुल्योपलब्धिप्रसङ्गः । कृष्णसारं न विषयं प्राप्नोति अप्राप्त्यविशेषात् सन्निकृष्टविप्रकृष्टयोस्तुल्योपलब्धिः प्राप्नोति । विषयाभावादिति चेत् ?—अथ मन्यसे सन्निकृष्टोऽस्य विषयो भवति विप्रकृष्टो न विषयः एवं च न तुल्योपलब्धिरिति ? नोक्तोत्तरत्वात् प्रत्यक्षसूत्र इति ।

अभौतिकानीत्यपरे—

**महदणुग्रहणात् ॥ ३१ ॥**

महदणुग्रहणात् । महदिति महत्तरं महत्तममुच्यते अण्विति अणुतरमणुतममिति(१) तदिदमुभयं चक्षुष्युपलभ्यमानं

(१) महदिति महत्तरमुच्यते अण्विति अणुतरमिति–पा० ४ पु०।

भौतिकत्वं चक्षुषो बाधते भौतिकं हि यावद्व्रजति तावदेव व्याप्नोति अभौतिकं तु व्यापकत्वात् सर्वसम्बद्धम् ।

न भौतिकेषु प्रदीपादिषु दृष्टत्वात्—भौतिकाः प्रदीपादयो महदणवोः प्रकाशका भवन्तीत्यनेकान्तः प्रदीपाद्यनभ्युपगमे वा महदणुप्रकाशकत्वं चक्षुष एवेत्यसाधारणत्वादहेतुः भौतिकाभौतिकयोर्निवृत्तेः । ननु चाभौतिके ज्ञाने महदणुप्रकाशकत्वं दृष्टं ? न दृष्टं—न हि बुद्ध्या महदणुनी प्रकाश्येते, अपि तु प्रकाशो बुद्धिर्न प्रकाशनमिति, अवधारितस्यार्थस्य ज्ञानोपादानोपेक्षाबुद्धीनां साधनं बुद्धिरिति नाभौतिकं महदणुप्रकाशकमस्ति। ननु मनो विद्यते ? सत्यं न पुनस्तद्भौतिकं नाप्यभौतिकमिति । एतेनात्मा व्याख्यातः—न भौतिको नाभौतिक इति। यदि मनो नाभौतिकं यदुक्तं भौतिकानीन्द्रियाणि अभौतिकं मन इति तद्व्याहतं ? नाभौतिकार्थस्याभूतात्मकपर्यायत्वात् अभौतिकं मन इति अभूतात्मकं मन इति यावदुक्तं भवति । मुख्यतस्तु मनो न भौतिकं नाभौतिकमिति । नेन्द्रियेऽपि समानत्वात्—इन्द्रियमभौतिकमिति यावदुक्तं भवति अभूतात्मकमिति ? । अभूतात्मकं व्यापकं चेन्द्रियं प्रतिपद्यमान इदं पर्यनुयोज्यः व्यवहितार्थग्रहणं कस्मान्न भवति? किं कारणम्—व्यापकत्वादिन्द्रियस्य न कुड्यादेरावरणसामर्थ्यमस्तीति ? वृत्तिः प्रतिपिध्यत इति चेत् ?—अथ मन्यसे सत्यं व्यापकमिन्द्रियं तस्य तु पुरुषार्थहेतुना सोऽभ्यमाणस्य महाह्रदादुद्बुद्बुदा इव निःसरन्त्यस्ताः कुड्यादिभिः प्रतिपिध्यन्त(१) इति ? न वृत्तिव्यतिरेकेणेन्द्रियसत्त्वे(२) प्रमाणाभावात्—येयं विषयग्रहणात्मिका वृत्तिः तां त्यक्त्वा तद्व्य-

(१) प्रतिबध्यन्त—पा० ४ पु० ।

(२) व्यतिरिक्तेनेन्द्रियसत्त्वे—पा० ४ पु० ।

तिरिक्तमिन्द्रियमिति किं प्रमाणम् ? न चाप्रामाणिकोऽर्थः शक्यः प्रतिपत्तुम्, न च प्रतिषिध्यमानाप्रतिषिध्यमानयो(१)रेकत्वम्, एकत्वे वाऽऽनर्थक्यं वृत्तिः प्रतिषिध्यते निश्चरतीति च । अव्यतिरेकाच्च तदुत्पत्तिविनाशधर्मकम्—यदि वृत्त्यव्यतिरेकीन्द्रियं यथा वृत्तेरुत्पादविनाशावेवमिन्द्रियस्यापि प्राप्नुतः । वृत्तेर्व्यक्तिर्नोत्पत्तिरिति चेत् ?—अथ मन्यसे न यथा वृत्तेरुत्पत्तिरभ्युपगम्यते ऽपि तु व्यक्तिः न निरोधो विनाशोऽपि तु तिरोभाव इति ? नोत्पत्तिविशेषत्वात्—व्यक्तिरुत्पत्तेर्विशेषः । कथमिति ? नानुपजातविशेषस्य व्यक्तिरिति । अथानुपजातविशेषं व्यज्यत इति मन्यसे ? नित्यं व्यक्तिः स्यात् । एतेन विनाशो व्याख्यातः । तिरोभाव इति विद्यमाने न किञ्चिद्विरुद्धं न ह्यनिवृत्तविशेषस्याग्रहणं भवति । न च सर्वनित्यवादिना ग्रहणाग्रहणे युक्ते—विशेषस्यानुपजननाच्च ग्रहणं विशेषस्यानुपचयाच्चाग्रहणमिति । नित्यं व्यापकञ्चेन्द्रियमभ्युपगच्छतः कारणार्थो हीयते—कारणं नाम यस्यानन्तरं यद्भवति कारणञ्च नित्यं कार्यञ्च नित्यमिति किं कस्यानन्तरं कार्यकारणभावश्च कथं तयोर्नित्यत्वात् । कारकशब्दार्थश्च वाच्यः(२) । ननु करोतीति कारकम् ? सत्यं करोतीति कारकम्(३) न पुनर्नित्यवादिनः किञ्चित्कर्तव्यमस्ति न चासति कर्तव्ये कारकार्थं पश्यामः । व्यक्तौ कारकार्थ इति चेत् ? व्यक्तौ च तुल्यं व्यक्तिरपि व्यङ्ग्यवच्चेत्येति व्यक्तावपि न कारकार्थोऽस्ति(४) युगपदनेकविज्ञानप्रसङ्गाच्च—यदि च वृत्तिर्वृत्तिमतो नान्या भवति वृत्तिमतोऽवस्थानाद्वृत्तीनामवस्थानमिति यु-

(१) प्रतिषध्यमानाप्रतिषध्यमानयोः—पा० १ पु० ।

(२) वक्तव्यः—पा० ४ पु० । (३) वाचकम्—पा० ४ पु० ।

(४) कारकोऽस्ति—पा० १ पु० ।

गपदनेकविज्ञानप्रसङ्गः वृत्त्यनेकत्वे चैकमिन्द्रियमनेकं प्राप्नोति वृत्तिभ्योऽनन्यत्वात् । अथ माभूदिन्द्रियभेद इति ? वृत्तीनां त-र्ह्येकत्वं प्राप्नोति वृत्तिवृत्तिमतोरनन्यत्वात् । अथ माभूदयं दोष इत्युभयं नेष्यते ? भेदस्तर्हि वृत्तिवृत्तिमतोरिति न चान्या गतिर-स्ति तस्मादयुक्तम् व्यापकमिन्द्रियं नित्यं चेति ॥

महदणुग्रहणस्य चान्यथासिद्धेरहेतुः—योऽयं हेतुर्महदणु-ग्रहणा(१)दभौतिकानीन्द्रियाणीत्ययमन्यथासिद्धः न महदणु-ग्रहणमात्रादभौतिकत्वं व्यापकत्वमिन्द्रियाणां शक्यं प्रतिपत्तुं, कस्मात् इदं ? यस्माद्रश्म्यर्थसन्निकर्षविशेषान्महदण्वोर्ग्रहणम् ॥

रश्म्यर्थसन्निकर्षविशेषात् तद्ग्रहणम् ॥ ३२ ॥

चक्षूरश्मेरर्थस्य च सन्निकर्षविशेषान्महदण्वोर्ग्रहणं भवति । तत्र सन्निकर्षमात्रात् सामान्यग्रहणं सन्निकर्षविशेषाद्विशेषग्रह-णम् । कः पुनः सन्निकर्षस्य विशेषः ? भूयोऽवयवसन्निकर्षानु-ग्रह यस्मादयं सन्निकर्षो विशेषप्रतिपत्तिहेतुर्भूयोऽवयवसंयोगै-रनुगृह्यते सोऽयमवयवान्तरसंयोगापेक्षोऽवयवीन्द्रियसन्निकर्षः स-न्निकर्षविशेष इत्युच्यते स च रश्म्यर्थसन्निकर्षविशेषोऽणुमह-तोस्तुल्यो भवतीत्यन्यथा महदण्वोर्ग्रहणं सिद्ध्यति । रश्म्यर्थस-न्निकर्षश्चावरणलिङ्गः कुड्यादिव्यवहितानामप्रकाशरूपत्वात् अ-प्राप्यकारित्वे । न कुड्यादेरावरणसामर्थ्यमस्तीत्यस्ति चाक्षुषो रश्मिः यथा प्रदीपरश्मिरिति ॥

आवरणानुपपत्तेः सतीदमाह—

तदनुपलब्धेरहेतुः ॥ ३३ ॥

तदनुपलब्धेरहेतुः । न चाक्षुषो रश्मिर्विद्यत इति सूत्रार्थः ।

---

(१) महदण्वोर्ग्रहणा—पा० ४ पु० ।

कथमिति ? । उपलब्धिलक्षणप्राप्तत्वादनुमानानुपपत्तिः यत् खलूपलब्धिलक्षणप्राप्तं नोपलभ्यते तन्नास्ति यथा घटादि घटादेर्महदनेकद्रव्यवत्त्वरूपवत्त्वानि सन्तीत्युपलभ्यन्ते घटादयः तथा महदनेकद्रव्यवत्त्वरूपवांश्चाक्षुषो रश्मिः कस्मात् प्रत्यक्षतो(१) नोपलभ्यत इति—महत्त्वं तावत् कारणमहत्त्वबहुत्वप्रचयेभ्यः अनेकद्रव्यवत्त्वमपि कारणबहुत्वादेव रूपस्पर्शवद्धि तेज इति नारूपं तत्—एवमशेषोपलब्धिकारणसन्निधाने सति यन्नोपलभ्यते(२) तेन गम्यते नास्तीति ॥

नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः ॥३४॥

नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः । यत् प्रत्यक्षतो नोपलभ्यते तदनुमानेनोपलभ्यमानं नास्तीत्ययुक्तम्(३) यथा चन्द्रमसः परभागः पृथिव्याश्चाधोभागः प्रत्यक्षलक्षणप्राप्तावपि न प्रत्यक्षत उपलभ्यते अनुमानेन चोपलभ्येते नैतौ न स्तः । किं पुनरनुमानम् ? अर्वाग्भागवदुभयप्रतिपत्तिः तथा चाक्षुषस्य रश्मेः कुड्याद्यावरणमनुमानं सम्भवतीति ।

अपरे तु महदनेकद्रव्यवत्त्वाद्रूपवत्त्वाच्चोपलब्धिरित्युपलब्धौ नियमं वर्णयन्ति । नोपलभ्यमान इति किमुक्तं भवति न ब्रूमो(४) यत्र यत्र महदनेकद्रव्यवत्त्वरूपाणि सन्ति तत्तदुपलभ्यत इति, अपि तु यद्यदुपलभ्यते तत्र तत्र महदनेकद्रव्यवत्त्वरूपाणि सन्तीति ? । एवं तर्हि इदं सूत्रं नोपलब्धेः कारणप्रतिपादकम् सत्स्वभावादिति—सत्सु महदनेकद्रव्यरूपेषु उपलब्धिर्न भवतीति नैतान्युपलब्धिकारणानीति ॥

---

(१) प्रत्यक्षतया—पा० ४ पु० ।
(२) येन नोपलभ्यते—पा० ४ पु० ।
(३) न नास्तीत्यत उक्तम्—पा०४ पु० । (४) न ब्रूमो—पा०पु० ।

द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः ॥ ३५ ॥

द्रव्यगुणधर्मभेदाच्चोपलब्धिनियम इति । शेषं भाष्ये । कस्मात् तर्हि चाक्षुषो रश्मिर्नोपलभ्यते इति ? उपलब्धिकारणाभावादिति । नैतावदेवो(१)पलब्धिकारणं यन्महदनेकद्रव्यरूपाणि, अपि तु रूपग्रहणाद्रूपविशेषोऽभिधीयते न रूपमात्रम् ।

एवं च सूत्रम् ॥

अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः ॥ ३६ ॥

अनेकद्रव्येण समवायाद्रूपविशेषाच्च रूपोपलब्धिरिति । अत्र रूपविशेषग्रहणेन रूपधर्म उद्भवसमाख्योऽभिधीयते न रूपत्वं रूपान्तराद्रूपं विशिनष्टि अपि तूद्भवो विशेषकत्वाद्विशेष इत्युच्यते यथा ब्राह्मणविशेष इति न ब्राह्मणत्वं ब्राह्मणविशेषः एवं समानजातीयविशेषकत्वं यत् तद्विशेष इत्युच्यते उद्भवश्च कार्यगम्यः यस्याभावाद्विपक्वावयवमाप्यं द्रव्यं हेमन्ते न गृह्यते तैजसञ्च ग्रीष्मे(२) यस्य भावात् प्रदीपरश्मिरुपलभ्यते आदित्यरश्मिश्च, स उद्भवो नाम विशेषः स तस्मिन्नायने रश्मौ रूपविशेषो नास्तीत्यतश्चाक्षुषो रश्मिर्नोपलभ्यते दृष्टश्च तेजसो धर्मभेदः । चतुर्विधञ्च तेजो भवति उद्भूतरूपस्पर्शं यथाऽऽदित्यरश्मिः । उद्भूतरूपमनुद्भूतस्पर्शं यथा प्रदीपरश्मिः । उभयं च प्रत्यक्षम् रूपस्योद्भूतत्वात् । उद्भूतस्पर्शमनुद्भूतरूपं यथा वारिस्थितं तेजः । अनुद्भूतरूपस्पर्शं यथा नायनं तेजः(३) । उभयं चाप्रत्यक्षम् रूपस्यानुद्भूतेः ॥

कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः ॥ ३७ ॥

कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः । शेषं भा-

(१) नैतदेवो—पा० ४ पु० । (२) उष्मा इत्यधिकं ४ पु० ।
(३) रूपस्पर्शौ यथा नायनो रश्मि—पा ४ पु० ।

ष्येत । रूपस्पर्शानभिव्यक्तिश्च व्यवहारप्रक्लृप्त्यर्था–यदि नायनो रश्मिरुद्भूतस्पर्शो भवेत् तेन दृश्यमानेन ऽनेकरश्मिसन्निधाने स-ति द्रव्यं दह्येत अनेकरश्मिसन्निपाते च सति(१) व्यवहितत्वा-द्द्रव्यस्यानुपलब्ध्या भवितव्यम् । अथ मन्यसे यथादित्यरश्मि-सम्बद्धेऽर्थे नायनो रश्मिर्न व्यवधीयते एवं रश्म्यन्तरसन्निपाते ऽपीति ? । तत्र व्यतिभिन्नार्थग्राहकत्वात्(२) व्यतिभिन्नादित्यरश्मिं तत्सम्बद्धेन द्रव्येण सम्बध्यते उद्भूतरूपस्पर्शवत्त्वे च चक्षुषो यस्य पूर्वं सन्निपातितं चक्षुस्तादितरेण व्यवहितमपि(३) नार्थं गृ-ह्णीयात् । अथानेकरश्मिसन्निपाते सति समानजातीयद्रव्येभ्यो द्रव्यान्तरं रश्मिरुत्पद्यत इति । एवं सति समग्रासमग्रचक्षुषोस्तु-ल्योपलम्भः प्राप्नोति । न चैतादृष्टमनुपलब्धेरिति व्यवहारक्लृ-प्त्यर्थं च नायनस्य रश्मेरनुद्भूतरूपस्पर्शवत्त्वमिति । सर्वद्रव्याणां विश्वरूपो व्यूहः पुरुषार्थकारित इति । कर्म च धर्माधर्मरूपं चेतनस्योपभोगार्थमिति ॥

अव्यभिचाराच्च प्रतीघातो भौतिकधर्मः ॥३८॥ (४)

अव्यभिचारी तु प्रतीघातो भौतिकधर्मः । भौतिकं चक्षुः कुड्यादिभिः प्रतीघातदर्शनात् घटादिवदिति । अप्रतीघाताद-भौतिकमिति चेत् ?–अथ मन्यसे यदि प्रतीघाताद्भौतिकमप्रतीघा-तादभौतिकम् दृष्टश्चाप्रतीघातः काचाभ्रपटलस्फटिकान्तरितोप-लब्धेः ? नानेकान्तात्–प्रदीपरश्मिवत् भौतिकस्याप्रतीघातः यथा

(१) सन्निधाने सति—पा० ४ पु० ।

(२) ग्राह्यत्वात्—पा० १ पु० ।

(३) व्यवहितमिति—पा० ४ पु० ।

(४) इदं सूत्रं न विश्वनाथपञ्चाननसम्मतम् नापि न्यायसूची-निबन्धे दृश्यते ।

प्रदीपरश्मेरिति । स्थाल्यादिषु च पाचकस्य तेजसोऽप्रतीघातादिति ।

उपपद्यते चानुपलब्धिः कारणभेदात्—

**मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः ॥३९॥**

मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः । यथोपलब्धिलक्षणप्राप्तस्य मध्यन्दिनोल्काप्रकाशस्य निमित्तादग्रहणमभिभवात् तथोपलब्धिलक्षणप्राप्तस्य चाक्षुषस्य रश्मेरग्रहणं निमित्ताद्रूपस्यानुद्भूतेरिति । मध्यन्दिनोल्काप्रकाशो नोपलभ्यते इति आदित्यप्रकाशात्—आदित्यप्रकाशाभिभवादित्ययुक्तम् सर्वरश्मिवत्त्वप्रसङ्गात् ?—एवं सति सर्वं लोष्टादि रश्मिमत् प्राप्नोति ? । अथ लोष्टादिरश्मयः कस्मान्नोपलभ्यन्ते इत्यनुक्तौ सूर्यादादित्यरश्म्यभिभवादित्ययुक्तं तदेतदुत्तरद्वारकं सूत्रम्—

**न रात्रावप्यनुपलब्धेः ॥ ४० ॥**

न रात्रावप्यनुपलब्धेः । यदि लोष्टादिरश्मयः स्युर्दिवादित्यप्रकाशाभिभवाच्च नोपलभ्यन्ते इति रात्रौ तर्ह्युपलभ्येरन् रात्रावपि नोपलभ्यन्ते । व्यञ्जकाभावादिति चेत् ? न हि यद्यस्याभिभावकं तत् तस्याभिव्यञ्जकमिति । कथं न प्राप्नोति लोष्टादिरश्मीनामुपलम्भः अनुमानतश्च नोपलभ्यते लोष्टरश्मिरित्यपिशब्दात् गम्यते । तदेवं सर्वप्रमाणनिवृत्तेर्न विद्यते लोष्टरश्मिः न पुनरेवं चाक्षुषो रश्मिर्निरनुमानः कुड्यादेरावरणस्य सामर्थ्यादिति तस्य विद्यमानस्य बाह्यप्रकाशानुग्रहाद्विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः ॥

**बाह्यप्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः ॥ ४१ ॥**

दृष्टान्तस्थान एवैतत् सूत्रम् । किमुक्तं भवति ? यत् खलु

बाह्यप्रकाशमपेक्षते(१) तस्यानुपलब्धौ रूपानभिव्यक्तित इत्यनुद्भूतेर्यथा विपक्वावयवस्याऽऽप्यद्रव्यस्य रूपानुद्भूतेरग्रहणम् तथा चाक्षुषो रश्मिर्बाह्यप्रकाशानुग्रहमपेक्षते तस्मादस्यापि रूपस्यानुद्भूतेरग्रहणमिति । कस्मात् पुनर्नायनस्य रश्मेरनुपलब्धेरभिभवो न कारणमुच्यते इति ? नोच्यते—

अभिव्यक्तौ चाभिभवात् ॥ ४२ ॥

अभिव्यक्तौ चाभिभवात्—यदुद्भूतरूपं बाह्यप्रकाशानुग्रहं च नापेक्षते तदभिभूयते यथा मध्यन्दिनोल्काप्रकाशः, अनुद्भूतरूपश्च नायनो रश्मिर्बाह्यप्रकाशानुग्रहं चापेक्षते यदनुद्भूतरूपं तन्नाभिभूयते यथा तदेव विपक्वावयवमाप्यं द्रव्यम् । यच्च बाह्यप्रकाशानुग्रहापेक्षं उद्भूतरूपमपि तन्नाभिभूयते यथा घटादिद्रव्यमिति, सोऽयमुभयविषयोऽभिभवो नायनरश्मावनुपपन्न इति विमतिपत्तिविषयः । कृष्णसारं रश्मिमत् द्रव्यत्वे सति रूपोपलब्धौ नियतस्य साधनाङ्गस्य निमित्तत्वात् प्रदीपवदिति । अथवा रश्मिमच्चक्षुः द्रव्यत्वे सति नियतत्वे च सति स्फटिकादिव्यवहितार्थप्रकाशकत्वात् प्रदीपवत् ॥

नक्तञ्चरनयनरश्मिदर्शनाच्च ॥ ४३ ॥

नक्तञ्चरनयनरश्मिदर्शनाच्चेति दृष्टान्तसूत्रम् । मानुषं चक्षू रश्मिमत् अप्राप्तस्वभावत्वे सति रूपाद्युपलब्धिनिमित्तत्वात् नक्तञ्चरचक्षुर्वदिति । जातिभेदादिन्द्रियप्रभेद इति चेत् ?—अथ मन्यसे यथा बिडालत्वं जातिर्व्यपदेशे वर्त्तते न मनुष्ये एवं रश्मिमद्बिडालस्यैव चक्षुर्भविष्यति

(१) प्रकाशानुग्रहमपेक्षते—पा० ४ पु० ।

न मानुषस्येति ? नावरणसामर्थ्यात्—सत्येतस्मिन् जातिभेदे यथा-वृषदंशप्रभृतीनां कुड्यादिभीरश्मय आव्रियन्ते तथा मनुष्याणामपीति समानमेवेति । इतश्च(१) भौतिकानीन्द्रियाणि प्रतिघातित्वात् घटवदितिवत्(२) मूर्तं श्रोत्रं द्रव्यत्वे सति बाह्यमात्रार्थप्रकाशकत्वात् घ्राणादिवदिति ॥

रश्म्यर्थसन्निकर्षग्रहणाचद्ग्रहणमयुक्तमन्यथापि ग्रहणात्—

अप्राप्यग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः॥४४॥

अप्राप्यग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः । तृणादिसर्पद्द्रव्यं काचे ऽभ्रपटले वा प्रतिहन्यते । यदि चाक्षुषो रश्मिः प्राप्तार्थप्रकाशकः स्यात् काचाभ्रपटलैरन्तरिते प्रकाशको न स्यात् । अस्ति तु । तस्मान्न प्राप्यकारि चक्षुरिति । अत एवाभौतिकं प्राप्यकारित्वं भौतिकधर्म इति ।

कुड्यान्तरितानुपलब्धेरप्रतिषेधः ॥ ४५ ॥

न कुड्यान्तरितानुपलब्धेरप्रतिषेध इति ।

अप्राप्यकारित्वे इन्द्रियस्य न कुड्याद्यावरणसामर्थ्यमस्तीत्युक्तम् । शेषं भाष्ये ॥

अप्रतिघातात् सन्निकर्षोपपत्तिः ॥ ४६ ॥

अप्रतिघातात् सन्निकर्षोपपत्तिः(३) । न काचोऽभ्रपटलं वा रश्मिं प्रतिबध्नाति सोऽप्रतिहन्यमानो व्यतिभिद्यार्थेन सम्बध्यते ।

---

(१) अतश्च—पा० ३ पु० ।

(२) घटादिवदिति—पा० ४ पु० ।

(३) सन्निकर्षोपलब्धिः—पा० ४ पु० ।

यश्च मन्येत न भौतिकस्यास्त्यप्रतीघात इति सर्वं हि भौतिकं प्रतीघातधर्मकमिति ? तन्न—

आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्येऽवि-
घातात् ॥ ४७ ॥

आदित्यरश्मेः स्फटिकान्तरितेऽपि(१) दाह्येऽविघातात् । न आदित्यरश्मेरविघातात् स्फटिकान्तरितेऽप्यविघातात् दाह्येऽप्यविघातात् । अविघातादिति(२) पदाभिसम्बन्धाद्वाक्यभेदः । नैकं वाक्यमनेकार्थं प्रतिवाक्यं चार्थभेद इति । शेषं भाष्ये ॥

कोऽयमविघातः ? अव्यूह्यमानावयवद्रव्यानुप्रवेशः—यस्य द्रव्यस्यावयवा न व्यूह्यन्ते तस्यान्तरावयवैरव्यूह्यमानस्य योऽभिसम्बन्धः सोऽविघात इति । अन्तर्व्यवस्थितस्य वा द्रव्यस्य वाऽव्यूह्यमानावयवद्रव्यस्य बहिरवस्थितद्रव्यप्राप्तिः । दृष्टं कलशे निषक्तानामपां बहिःशीतस्पर्शग्रहणम् न हि गुणस्यास्वतन्त्रस्य(३) गुणिनमन्तरेण बहिर्निर्गमनं(४) युक्तमिति । तत्र परिस्पन्दः तिर्यग्गमनं परिस्रवः पात इति ॥

नेतरेतरधर्मप्रसङ्गात् ॥ ४८ ॥

नेतरेतरधर्मप्रसङ्गात् । इतरधर्म इतरत्र प्रसज्यते(५) इतरधर्मश्चेतरत्र यद्यविघातः चक्षूरश्मेः स्फटिकादिभिः कुड्यादिभिरपि

---

(१) स्फटिकान्तरेऽपि—पा० ४ पु० ।
(२) अप्रतिघातादिति—पा० ४ पु० ।
(३) गुणस्य द्रव्यतन्त्रस्य—पा० ४ पु० ।
(४) बहिर्गमन—पा० ४ पु० ।
(५) प्रयुज्यते—पा० ४ पु० ।

प्राप्नोति कुड्यादिभिर्वा प्रतीघातः स्फटिकादिभिरपि प्राप्नोति ?

नैष दोषः—

**आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत् तदुपलब्धिः ॥ ४९ ॥**

आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत्तदुपलब्धिः । आदर्शोदकयोः प्रसादो रूपविशेषः स च स्वो भवति नियमात् । कः पुनरयं रूपविशेषः द्रव्यान्तरासंयुक्तद्रव्यसमवायः तस्य वा रूपोपलम्भनसामर्थ्यं स्वो धर्मः स च स्वभावतः तस्य या विद्यमानता उदकादिषु तत्स्वाभाव्यं प्रसादस्वभावत्वाद् आदर्शोदकादिषु नयनरश्मिः प्रतिहन्यते स च प्रतिहतः प्रतिनिवृत्तौ स्वमुखादिना सम्बध्यते तस्य चाग्रसम्बन्धाद्यदभिमुखमग्रं तदभिमुखं मुखादि पश्यतीति यथाग्रतोऽवस्थितस्य पुरुषस्येति आदर्शमुखग्रहणमनुक्रमेण तदप्याशुभावान्न विभाव्यते आदर्शरूपानुग्रहणात् तदनुरञ्जितः प्रत्ययः । शेषं भाष्ये ॥

**दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः ॥ ५० ॥**

दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः । प्रमाणस्य तत्त्वविषयत्वात्—दृष्टानुमिताः खल्विमे द्रव्यधर्मा यथाभूता भवन्ति तथाभूता एव प्रमाणेन प्रतिपाद्यन्ते इमौ च भवता नियोगप्रतिषेधौ देशितौ क विषये स्याताम्, न चैतद्युक्तम् न हि यथा धूमेनाग्निप्रतिपत्तिस्तथोदकप्रतिपत्तिरपि भवत्विति । न चोदकप्रतिपत्तिर्धूमेन भवतीत्यग्निप्रतिपत्तिरपि न युक्ता, अर्थान्नियुञ्जानो भवाननुपेक्षणीयः प्रतिघाताप्रतिघातयोः खलूपलब्ध्यनुपलब्धी व्यवस्थापिके व्यवहितोपलब्ध्यानुमीयते स्फटिकादिभिरप्रतीघातः व्यवहिता-

नुपलब्ध्या च कुड्यादिभिः प्रतीघात इति । यदि प्राप्यकारि चक्षुर्भवति अथ कस्मादञ्जनशलाकादि नोपलभ्यते ? नेन्द्रियेणासम्बन्धात्(१) इन्द्रियेण सम्बद्धा अर्था उपलभ्यन्ते न चाञ्जनशलाकादीन्द्रियेण सम्बद्धम् अधिष्ठानस्यानिन्द्रियत्वात् रश्मिरिन्द्रियं नाधिष्ठानं न रश्मिनाऽञ्जनशलाका सम्बद्धेति ॥

( इति इन्द्रियभौतिकत्वपरीक्षाप्रकरणम् । )

एवं तावद् भौतिकानीन्द्रियाणीति समर्थितम् । किं पुनरेकमिन्द्रियमाहोऽनेकानीति ? । एके तु—

**स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः ॥ ५१ ॥**

स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः । एके तु स्थानान्यत्वे नानात्वं दृष्टं यथा बहूनां घटानामिति । एकस्य च नानास्थानत्वं यथाऽवयविन इति । अनुपपन्नरूपश्चायं संशयः । कथमिति ? यदि तावदेवं क्रियते स्थानान्यत्वे नानात्वैकत्वदर्शनादिति ? तदैकत्वे स्थानान्यत्वस्या(२)दर्शनान्न समानधर्मः । अथ नानास्थानत्वे सत्येकानेकत्वदर्शनात् संशय इति ? तदा द्रव्यं नानास्थानमनेकं न किञ्चिद्दृष्टमिति न समानधर्मत्वम् यद् घटाद्यनेकं तत्र नानास्थानम् अपि तु स्थानान्यत्वं(३) तस्य, सोऽयं संशय उभयथानुपपन्न इन्द्रियेषु । स्थानेषु तु युक्तः किं नानास्थानानि

(१) नेन्द्रियाणामसम्बन्धात्—पा० ४ पु० ।
(२) स्थाननानात्वस्या—पा० ४ पु० ।
(३) स्थाननानात्व—पा० ४ पु० ।

उत नानास्थानम् ? इन्द्रियेषु तु न स्थाननानात्वात् सम्भवति न च नानास्थानत्वादिति । शरीरव्यतिरेकित्वात् सत्वाच्च संशयः—शरीरव्यतिरिक्तमुभयथा दृष्टमेकमनेकं च यथाकाशं घटादि च । सच्चोभयथा दृष्टमेकमनेकं च । तदेवमुभयथेन्द्रियेषु(१) शरीरव्यतिरेकः सत्त्वं च, तेन सन्दिह्यते ।

एकमिन्द्रियं, किं पुनस्तत्—

त्वगव्यतिरेकात् ॥ ५२ ॥

त्वगव्यतिरेकात् । कः पुनरयमव्यतिरेकः ? सर्वाधिष्ठानसम्बन्धः—नहि न किञ्चिदिन्द्रियं न त्वचा प्राप्तम् । सति भावो वा—न ह्यसत्यां त्वचि किञ्चिदर्थग्रहणं भवति(२) तस्मात् त्वगेकमिन्द्रियम् ।

नेन्द्रियान्तरार्थानुपलब्धेरिति लोकविरोधः—एकमिन्द्रियमिति ब्रुवाणो लोकं विरुणद्धि विद्यमाने त्वगिन्द्रिये स्पर्शोपलब्धिप्रसङ्गः इन्द्रियान्तरार्था रूपादयोऽन्धादिभिरुपलभ्येरन् न तूपलभ्यन्ते तस्मान्नैकमिन्द्रियमिति । यदप्यव्यतिरेकादिति ? तदपि नानेकान्तात् अनेकेन चानिन्द्रियेण सर्वाणीन्द्रियाधिष्ठानानि पृथिव्यादिना प्राप्तानीत्यनेकान्तः । अवयवोपघातादिति चेत् ?—अथ मन्यसे एतत् त्वगवयवः कश्चिदुपहतो भवति तदुपघातादन्धादिभिर्नोपलभ्यन्ते(३) रूपादय इति—यथा त्वगवयवविशेषेणैव धूमोपलब्धिः चक्षुष्यपि त्वगवयवविशेषस्तदुपघातात् धूमस्पर्शानुपलब्धिरिति(४) ? । न व्याघातात्—त्वगवयवविशेषेण धूमो-

(१) उभयमिन्द्रियेषु—पा० ४ पु० ।
(२) किञ्चिद्विषयग्रहणं सम्भवतीति—पा० ४ पु० ।
(३) नोपपद्यन्ते—पा० ४ पु० ।
(४) धूमस्यानुपलब्धिरिति—पा० ४ पु० ।

पलब्धिवद्रूपाद्युपलब्धिरिति ब्रुवता यदुक्तमेकमिन्द्रियमिति तत्राहतं भवति प्रागेकमिन्द्रियं त्वगित्युपगम्येदानीं त्वगवयवविशेषा रूपादिग्राहका इति ब्रुवाणः प्रतिषेध्यमभ्यनुजानाति न ह्यवयव्यनतिरिक्ता अवयवा इति । यांश्चावयवान् रूपादिग्राहकान् त्वचो मन्यन्ते ते किमिन्द्रियात्मका उत नेति? किं चातः ? यदीन्द्रियात्मका नैकमिन्द्रियम्, अथेन्द्रियात्मका न भवन्ति न तर्हीन्द्रियग्राह्या रूपादय इति ।

सूत्रेण चाभिसम्बन्धः—

न युगपदर्थानुपलब्धेः ॥ ५३ ॥

न युगपदर्थानुपलब्धेः । यस्यैकमिन्द्रियं तस्य युगपदर्थानामुपलब्धिः प्रसज्यते । कथमिति ? आत्मा मनसा सम्बध्यते मन इन्द्रियेण, इन्द्रियं सर्वार्थैः सन्निहितैरिति, आत्मेन्द्रियमनोऽर्थसन्निकर्षेभ्यो युगपदुपलब्धयः प्रादुः स्युरिति ।

नैकेन्द्रियग्राह्याणां युगपदुपलब्धिप्रसङ्गात्—यथैकेन्द्रियवादिनो युगपदनेकार्थसन्निधाने(१) सति युगपदुपलब्धिदोषो भवति तथानेकेन्द्रियवादिनोऽपि एकेन्द्रियग्राह्येषु युगपदुपलब्धिप्रसङ्गः । य एवात्र परीहारः स एव ममापि भविष्यतीति । अथायमदुष्टः पक्षः ? अदेश्यं तर्ह्येनव युगपदुपलब्धिप्रसङ्ग इति । अत्र केचित् परिहारं वर्णयन्ति बुभुत्साभेदाच्च युगपदुपलब्धिरिति । ममाप्येवम्-यदि बुभुत्साभेदाच्च युगपदुपलब्धिर्लभ्यते ममापि न बुभुत्साभेदो दण्डवारित इति । सतां च बुभुत्सायामयुगपदुपलब्धौ न्यायोऽन्यो ऽवधारणीय इति । करणत्वा-

(१) सम्बन्धे सति—पा० ४ पु० ।

दित्यन्ये—अन्ये तु ब्रुवते परिहारं करणत्वादिति—करणस्य किलायं धर्मः अधिष्ठितमप्यनेकां युगपत्क्रियां न शक्नोति कर्तुम् अनधिष्ठितं च न प्रवर्तत इति तुल्यम्। यस्याप्येकमिन्द्रियं तस्यापि करणत्वं न निवार्यत(१) इति तस्मायुगपदर्थानुपलब्धिरित्यदोषोऽयमिति। एवं ब्रुवाण एकेन्द्रियवादी विकल्प्य पर्यनुयोज्यः—यत्तदेकमिन्द्रियं सर्वार्थमिति मन्यसे तद् किं प्राप्यकार्याहो नेति, किं चातः? यदि प्राप्यकारि? किं तदिति वक्तव्यम्? यदि त्वक्, त्वचा प्राप्ताना रूपाणामग्रहणप्रसङ्गः। अथाप्राप्तं रूपं गृह्णाति? स्पर्शादिष्वप्येवं प्रसङ्गः। अथ सामिकारीन्द्रियं किञ्चित् प्राप्तं गृह्णाति किञ्चिचाप्राप्तम्? एवं सति करणधर्मातिक्रमः। भवतु करणधर्मातिक्रमः किन्नो बाध्यत इति? एतस्मिन् पक्षे न युगपदुपलब्धिप्रसङ्गादिति सूत्रम्। यथानेकेन्द्रियवादिन(२) एकेन्द्रियग्राह्येषु युगपदुपलब्धिप्रसङ्गे करणत्वादिति परिहारः सोऽस्य(३) न भवति करणधर्मातिक्रमात्। व्याहतं चैतद् करणं प्राप्यकार्यप्राप्यकारि चेति। असाहचर्याच्च न त्वक्—साहचर्यं नाम यस्यैक विषयग्रहणं तस्य द्वितीयमपीत्यन्धबधिराद्यभावप्रसङ्गः॥

विप्रतिषेधाच न त्वगेका॥ ५४॥

विप्रतिषेधाच्च न त्वगेका। शेषं भाष्ये। एकोपघाते तद्विनाशे वा सर्वानुपलब्धिप्रसङ्गः—अथैकमिन्द्रियं भवति तद्विघाते विनाशे वा सर्वानुपलब्धिप्रसङ्गः। आवरणा·

(१) निवर्तत—पा० ४ पु०।
(२) यथा नानेन्द्रियवादिन—पा० ४ पु०।
(३) सोऽत्र—पा० ४ पु०।

नुपपत्तेः—यदि त्वगेकमिन्द्रियं भवति नावरणस्य सामर्थ्यमस्तीति विषक्तप्राप्तस्यितोपलब्धिप्रसङ्गः । दूरान्तिकार्थानुविधानं चोपलब्ध्यनुपलब्ध्योर्न स्यात्—अप्राप्यकारित्वे त्वगिन्द्रियस्यान्तिके ग्रहणं दूरे चाग्रहणमित्येतन्न स्यात् । प्रतिषेधाच्च नानात्वसिद्धौ स्थापनाहेतुरप्युपादीयते प्रतिषेधान्नानात्वं सिध्यतीति । तत्र ब्रुम्महे प्रतिषेधादेकत्वसाधनं न स्यात् नानात्वं कथं सिध्यतीतिनासाधना क्रियेति एकत्वं च प्रतिषेद्धुं कथं शक्यते प्रतिषेधात् एकत्वसाधनमनुमानं निवर्तते न पुनरेकत्वमनेकत्वं वा निवर्तत इति । कथं तर्हि अयं ग्रन्थो ग्राह्यः ? प्रतिषेधाच्चनन्तरं नानात्वसिद्धौ स्थापनाहेतुरप्युपादीयते इन्द्रियार्थपञ्चत्वात् । अथवा प्रतिषेधाच्च नानात्वसिद्धाविति प्रतिषेधहेतुना एकत्वप्रतिषेधे कृते ऽर्थान्नानात्वं सिध्यतीत्यर्थः । कतमः पुनरसौ प्रतिषेधहेतुः ? युगपदर्थोपलब्धिप्रसङ्गादिरयम । अनेकत्वं प्रतिषिद्धम् ।

तदेवमवीतसिद्धौ वीतदर्शनार्थमिदमुच्यते—

इन्द्रियार्थपञ्चत्वात् ॥ ५५ ॥

इन्द्रियार्थपञ्चत्वादिति सूत्रम् । अर्थः प्रयोजनमित्येवमादि भाष्ये । इदं च सूत्रं न कथञ्चन न्यायेन सम्बध्यते । कथमिति ? विधीयमानोऽर्थः साध्यः पञ्चेन्द्रियाणीति इन्द्रियार्थपञ्चत्वादित्यसम्बद्धम्(१) अथ प्रयोजनपञ्चत्वं(२) ? तदप्येवमेव । अथ ग्रहणानि पक्षीक्रियन्ते ? तत्राप्यैकान्तिको हेतुर्नास्तीति । एतेन विग्रहा व्याख्याताः । इदं तु सूत्रमेवं स्यात् रूपरसगन्धस्पर्शशब्देषु नानासाधनक्रियः

(१) इत्यसिद्धम्—पा० ४ पु० ।
(२) परत्वम्—पा० ४ पु० ।

रान्तरेणास्यादिना शब्दमुपलक्षयति(१) नान्यत्रेति तदुपकारमतीकारभेदाद्धोपक्रियते प्रतिक्रियते चेति, न च पुनराकाशं निरवत्वादुपक्रियते न(२) प्रतिक्रियत इति । प्रकृष्टाप्रकृष्टश्रोत्रभेदोऽप्यत एव । जातिरिति योनिं प्रचक्षते । पञ्च खल्विमा इन्द्रिययोनयः पृथिव्यादीनि भूतानीन्द्रियाणां योनय इति योनिस्तादात्म्य न पुनस्तत् कार्यत्वमाकाशे सम्भवति नित्यत्वात् । कथं पुनर्ज्ञायते भूतप्रकृतीनीन्द्रियाणि नाव्यक्तप्रकृतीनीति ? नोक्तोत्तरत्वात् नाव्यक्तप्रकृतीनीन्द्रियाणीत्युक्तोत्तरमेतत् ॥

भूतगुणविशेषोपलब्धेस्तादात्म्यम् ॥ ६० ॥

भूतगुणविशेषोपलब्धेस्तादात्म्यम् । भूतगुणविशेषो गन्धरसरूपस्पर्शशब्दा विशेषकत्वाद्विशेषा इत्युच्यन्ते । यथा गन्धवत्त्वादिना(३) पृथिव्यादिभ्यो भिद्यते रसादिभिरवादय इति । दृष्टो हि वाह्यानामुभयपक्षसम्प्रतिपन्नानां पृथिव्यादिभूतानां स्वगुणाभिव्यक्तिनियमः अस्ति च घ्राणादिभिरपि गन्धाद्यभिव्यक्तिनियमः तेन भूतगुणविशेषोपलब्धेर्भूतप्रकृतीनीन्द्रियाणीति । किं किमात्मकमिति ? येन यद्गुणाभिव्यक्तिः । तत्र पार्थिवं घ्राणं गन्धाभिव्यक्तिहेतुत्वात् वाह्यपार्थिवद्रव्यवदिति । एवं शेषेष्वपि ॥

( इतीन्द्रियनानात्वप्रकरणम् । )

गन्धादयः पृथिव्यादिगुणा इत्युद्दिष्टम् उद्देशश्च नियोगविकल्पसमुच्चयैः समानः तत्र नियोग एकैकगुणत्वं, विक-

(१) शब्दमुपलम्भयति—पा० ४ पु० ।
(२) न—नास्ति ३ पु० ।
(३) गन्धवत्त्वेन—पा० ४ पु० ।

स्यः कस्यचिदेकः कस्यचिद्द्वावित्येवमादिः, समुच्चयः सर्व(१) सर्वत्र, अतो विशेषणार्थम्—

**गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः ॥ ६१ ॥**
**अप्तेजोवायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तरः ॥ ६२ ॥**

गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः, अप्तेजोवायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तरः, नियमार्थे सूत्रे (२) ॥

चत्वारः पृथिव्यामेकैकशोऽपकर्षे उत्तरेषु स्पर्शपर्यन्तानामिति विभक्तिविपरिणामः । तेन किं कृतं भवति ? स्पर्शपर्यन्तानां विनियुक्तानां य उत्तरः स आकाशस्येति आकाशस्योत्तरः शब्दः । उत्तर इत्ययं तरब्निर्देशो न युक्तः द्वयोर्दृष्टत्वात् इह पुनः प्रकृष्टाश्चित्ते सत्युत्तम इति स्यात् ? । नायं (नो)तरब्निर्देशः, अपि तु पराभिधानमेतत् यदुक्तं भवति पर इति तदुक्तं भवत्युत्तर इति । तन्त्रं वा स्पर्शस्य विवक्षितत्वात्—भवतु वा तरब्निर्देशः । नन्वुक्तमुत्तम इति प्राप्नोति ? न स्पर्शस्य विवक्षितत्वात् गन्धादिभ्यः परः स्पर्शः स्पर्शाद्यं पर इति यावदुक्तं भवति तावदुक्तं भवत्युत्तर इति ।

न सर्वगुणानुपलब्धेः—

**न सर्वगुणानुपलब्धेः ॥ ६३ ॥**

नायं गुणेषु विनियोगः साधुः, कस्मात् ? पार्थिवेन घ्राणेन पार्थिवानां गन्धादीनामुपलम्भप्रसङ्गात्, एवमाप्येन रसनेन त्रयाणां, तैजसेन चक्षुषा द्वयोरिति ।

कथं तर्हीमे गुणा विनियोक्तव्याः ?—

---

(१) सर्वे—पा० ४ पु० ।     (२) नियमार्थं सूत्रद्वयम् ।

एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तद-
नुपलब्धिः ॥ ६४ ॥

एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः यस्मादेकैकगुणानि भूतानि तस्मादेकगुणग्रहणमिति(१) एकैकश्येनेति सौत्रो निर्देशः(२)

कथं तर्ह्यनेकगुणानि भूतानि गृह्यन्त इति ?–

संसर्गात्त्वनेकगुणग्रहणमिति । संसृष्टाऽबादिभिः पृथिवी तस्मादनेकगुणा(३) गृह्यत इति । एवं शेषेषु । संसर्ग(४)स्त्वमतिषिद्धो मिथः पञ्चानां चेति । नियमस्तर्हि न प्राप्नोति पृथिव्यां चत्वारो नेतरेषु संसर्गस्यानियमादिति ? न न प्राप्नोति, कस्मात(५) ?–

विष्टं ह्यपरं परेण ॥ ६५ ॥

विष्टं ह्यपरं परेण—

विष्टमबादिना परेणापरं, नापरेण पृथिव्यादिना परमबादि । विष्टत्वं–संयोगविशेषः ।

न पार्थिवाप्ययोः प्रत्यक्षत्वात् ॥ ६६ ॥

न पार्थिवाप्ययोः प्रत्यक्षत्वादिति(६) ।

नेति त्रिसूत्रीमनन्तरोक्तामनेन प्रत्याचष्टे । यस्यैकैकगुणानि भूतानि तस्य तैजसमेव द्रव्यं रूपवत्त्वात् प्रत्यक्षं प्राप्नोति

(१) तस्मादेकैकगुणग्रहणमिति–पा० ४ पु० ।
(२) सूत्रे निर्देशः—पा० ४ पु० ।
(३) अनेकगुणानि गृह्यन्ते–पा० १ पु० ।
(४) संयोगः–पा० ४ पु० ।
(५) कथं यस्मात्–पा० ४ पु० ।
(६) प्रत्यक्षसिद्धत्वात्—पा० ४ पु० ।

न पार्थिवमाप्यं वा अरूपत्वात् । अस्य सूत्रस्य विकल्पतोऽनेकः सूत्रार्थः कल्प्यत इति भाष्ये वर्णितम् ।

तदेवं न्यायविरुद्धं प्रवादं प्रतिषिध्य न सर्वगुणानुपलब्धेरिति यत् देशितं तत्समाधीयते ॥

पूर्वपूर्वगुणोत्कर्षात्(१) तत्तत् प्रधानम् ॥ ६७ ॥

पूर्वपूर्वगुणोत्कर्षात् तत् तत्प्रधानम् तस्मान्न सर्वगुणोपलब्धिः–घ्राणादीनामिन्द्रियाणां पूर्वं पूर्वमिन्द्रियं परस्मात् प्रधानम् । का प्रधानता ? चतुर्गुणत्वादिः । को गुणोत्कर्षः ? स्वगुणाभिव्यक्तिसामर्थ्यम्–येन गुणेन यद्द्रव्यमुत्कृष्यते स तज्जातीयाभिव्यञ्जकत्वादुत्कृष्टो भवति यथा बाह्यानां द्रव्याणामिति । अस्ति चेन्द्रियाणामपि स्वगुणाभिव्यक्तिनियमः तस्मान्न सर्वगुणोपलब्धिः(२) । यः पुनर्गन्धगुणत्वाद् घ्राणं गन्धग्राहकमिति प्रतिजानीते तस्य सर्वगुणोपलब्धिप्रसङ्गः ।

कस्मात् पुनर्न सर्वं पार्थिवं घ्राणमिति ?

तद्व्यवस्थानं तु(३) भूयस्त्वात् ॥ ६८ ॥

व्यवस्थानियमज्ञापनार्थम् तद्व्यवस्थानं तु भूयस्त्वादिति सूत्रम् किं पुनरिदं भूयस्त्वम् ? अर्थनिर्वृत्तिसमर्थस्य प्रविभक्तस्य द्रव्यस्य संसर्गः पुरुषसंस्कारकारितो भूयस्त्वम्, दृष्टो हि प्रकर्षे भूयस्त्वशब्दः(४) यथा लोके प्रकृष्टो विषयो भूयानित्युच्यते । यथा च पृथगर्थक्रियासमर्थानि पुरुषसंस्कारोपग्रहात् विषौषधिमणिप्रभृतीनि द्रव्याणि निर्वर्त्यन्त इति ॥

---

(१) पूर्वपूर्वं गुणोत्कर्षात्—पा० ४ पु० ।
(२) सर्वगुणोपलब्धिप्रसङ्गः—पा० ४ पु० ।
(३) तद्व्यवस्थापनं तु—पा० ४ पु० ।
(४) भूयस्त्वे प्रकर्षशब्दः—पा० ४ पु० ।

स्वगुणान्नोपलभन्त इन्द्रियाणि । कस्मादिति चेत् ?—केन कारणेन स्वानि गन्धादीनि इन्द्रियाणि नोपलभन्त इति ?—

**सगुणानामिन्द्रियभावात् ॥ ६९ ॥**

सगुणानामिन्द्रियभावात्—सह गुणेनेन्द्रियं भवति, निर्गुणं नेन्द्रियमतो न गृह्णाति ।

यदि पुनरिन्द्रियस्य, सहकारी च गन्धः स्याद् ग्राह्यश्चेति ?—

**तेनैव तस्याग्रहणाच्च ॥ ७० ॥**

तेनैव तस्याग्रहणाच्च—यदीन्द्रियं स्वगन्धं गृह्णीयात् ते, नासाविन्द्रियगन्धः । अथेन्द्रियगन्धः ? नेन्द्रियग्राह्यः स्यात् गन्धश्च गृह्णीयादिन्द्रियमात्मानं गृह्णीयात् आत्मा ह्यस्य गन्ध इति । न चात्मसाधनं करणमस्तीति दृष्टान्तविरोधः । न चैतत् प्रत्यक्षं यद् घ्राणगन्धो घ्राणग्राह्य इति । कस्मात् पुनरिदं न दृश्यते घ्राणेन घ्राणं कस्मान्न गृह्यत इति ? । न दृश्यते ऽदृष्टत्वात्—न दृष्टं घ्राणेन घ्राणस्य ग्रहणमित्यतो न दृश्यत इति ? तुल्यं—घ्राणेन स्वस्य गन्धस्याग्रहणमित्येतदपि अदृष्टानीयम्—स्वगुणान्नोपलभन्त(१) इन्द्रियाणि, कस्मादिति ? तुल्यो ह्युभयत्र हेत्वभावः ॥

**न शब्दगुणोपलब्धेः ॥ ७१ ॥**

न शब्दगुणोपलब्धेः—स्वगुणान्नोपलभन्त इन्द्रियाणीत्येतदयुक्तम् । स्वगुण उपलभ्यते आकाशेन शब्द इति ।

न पुनः श्रोत्रं मशब्दमिन्द्रियमिति—यथेतराणि सगुणानीन्द्रियाणि नैवमाकाशमिति । कस्मात् ? शब्दस्येतरगुणवैधर्म्यात्—आकाशस्येतरद्रव्यवैधर्म्यात् अस्यार्थस्य ज्ञापनार्थं तदुपलब्धिरितरेतरधर्मवैधर्म्यादिति सूत्रम्—

(१) नोपलभ्यन्त—शा० ४ पु० । एवमग्रेऽपि ।

तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ॥ ७२ ॥

न शब्दः शब्दस्य व्यञ्जको नाकाशं सगुणमिन्द्रियमिति । किं पुनरिदं श्रोत्रम ? आकाशं परिशेषात् । तत्रात्मा तावन्न श्रोत्रं, कर्तृत्वात्—श्रोता आत्मा न श्रोत्रम् । मनः श्रोत्रं(१) भविष्यतीत्यपि न, मनसः श्रोत्रत्वे बधिराद्यभावः सर्वविषयत्वाच्च मनसः—सर्वविषयं च श्रोत्रं माप्नोति । पृथिव्याद्यपि न श्रोत्रं, घ्राणादिभावेन विनियोगात्—घ्राणादिविनियुक्ताः पृथिव्यादयः श्रोत्रभावे च घ्राणादीनां तद्वैकल्ये शब्दानुपलब्धिप्रसङ्गः । त्वचः श्रोत्रभावे(२) बधिराद्यभावः सर्वोपघाते च मारणम् । दिक्कालयोः श्रोत्रभावे च शब्दस्यान्यगुणत्वादग्रहणप्रसङ्गः । तद्गुणत्वमेवेति चेत् ? नास्ति विवादः—यस्य शब्दो गुणस्तदाकाशं, भवता सञ्ज्ञामात्रं भिद्यते तौ दिक्कालाविति । आकाशगत्याख्यानं वाऽन्यगुणत्वाच्छब्दस्य—यदि शब्दो दिक्कालगुणो भवति आकाशं तर्हि प्रत्याख्यातम् । न हि शब्दमन्तरेणाकाशास्तित्वे लिङ्गमिति(३) यथा दिक्कालयोः परापरादि(४) लिङ्गमिति । न च द्रव्यान्तरं शिष्यते । न च गुणानां श्रोत्रभावो युक्तः, न च कर्मणाम्, न च सामान्यविशेषसमवायानां सामर्थ्यानुपलब्धेः । न चेदं श्रोत्रं नास्ति शब्दोपलब्धिलिङ्गं, शिष्यते चाकाशं, तस्मादाकाशं श्रोत्रमिति ॥

( इति अर्थपरीक्षाप्रकरणम् । )

इति—औद्योतकरे न्यायवार्त्तिके तृतीयस्याध्यायस्याद्यमाह्निकम् ॥

(१) श्रवणं—पा० ४ पु० ।    (२) श्रोत्रत्वे—पा० ४ पु० ।
(३) लिङ्गमस्ति—पा० ४ पु० ।    (४) परत्वापरत्वे—पा० ४ पु० ।

# तृतीये ऽध्याये

## द्वितीयमाह्निकम् ।

ॐ नमः परमात्मने ।

परीक्षितानीन्द्रियाण्यर्थाश्च, बुद्धेरिदानीं परीक्षाक्रमः। सा किमनित्या नित्या वेति धर्मविचारः सत्त्वस्याधिगतत्वात्, तस्यां च संशयमुपपादयति(१) ॥

**कर्माकाशसाधर्म्यात् संशयः ॥ १ ॥**

कर्माकाशसाधर्म्यात् संशयः । उभाभ्यां साधर्म्यमस्पर्शवत्त्वम्, विशेष उपजननापायधर्मकत्वं(२) विपर्ययश्च बुद्धौ नोपलभ्यते ततः संशयः ।

अनुपपन्नरूपः खल्वयं संशयः सर्वशरीरिणां प्रत्यात्मवेदनीयत्वात्—सर्वशरीरिणां प्रत्यात्मवेदनीयमेतद् यदुत(३)-नित्या बुद्धिरिति, त्रैकाल्यव्यक्तेश्च—बुद्धौ त्रैकाल्य व्यज्यमानं दृष्टम्—जानामि ज्ञास्याम्यज्ञासिषमिति ।, न चोपजननापायावन्तरेण त्रैकाल्यव्यक्तिः—न ह्यनुपजननापायधर्मेषु आकाशादिषु त्रैकाल्यं व्यज्यते । न च विशेषदर्शने सति युक्तः संशयः तस्मात् संशयप्रक्रियानुपपत्तिरिति ? । शेषं भाष्ये । दृष्टिप्रवादोपालम्भार्थं प्रकरणम्—न च बुद्धेरनित्यत्वं

(१) उत्पादयति—पा० ४ पु० ।

(२) उपजनापायधर्मकत्वं—पा० ४ पु० । पञ्चमेऽपि ।

(३) यद्धता—पा० ४ पु० ।

प्रतिपाद्यमपि तु परस्य दर्शनं निवर्तनीयमिति । एवं हि प-श्यन्तः प्रवदन्ति साङ्ख्या नित्या बुद्धिरिति ।

साधनं च प्रचक्षते विषयप्रत्यभिज्ञानादिति—

विषयप्रत्यभिज्ञानात् ॥ २ ॥

यं पूर्वमज्ञासिषं तमिमं जानामीति ज्ञानयोः समानेऽर्थे प्रतिसन्धानमवस्थितायाः बुद्धेरुपपन्नम्—बुद्धिनानात्वे प्रत्यभि-ज्ञानानुपपत्तिः यथा पुरुषान्तरबुद्धिषु ॥

साध्यसमत्वादहेतुः ॥ ३ ॥

साध्यसमत्वादहेतुः । यथैव बुद्धेर्नित्यत्वं साध्यं तथैव बुद्धौ प्रत्यभिज्ञानमपि साध्यम्, कस्मात् ? चेतनधर्मस्य करणे ऽनुपपत्तेः—पुरुषधर्मः खल्वयं ज्ञानं दर्शनमुपलब्धिर्बोध इति । चेतनो हि पूर्वज्ञातमर्थं प्रत्यभिजानातीति तस्यैव तस्माद्धेतो-र्नित्यत्वं युक्तम् ।

क्रियानाधारत्वाच्च करणस्य । न हि करणं क्रियाया आधारो भवति, उपलब्धिश्च क्रिया सा च न करणे भ-वितुमर्हतीति । स्वक्रियाधारत्वादयुक्तमिति चेत् ?—अथ म-न्यसे सर्वं कारकं स्वक्रियाया आधारो भवतीत्यतोऽयुक्तं क्रियानाधार इति ?, सत्यम् भवति स्वक्रियाधारो, न पुनः स्वक्रियातः करणव्यपदेशः । स्वक्रियायां सर्वं कारकं कर्तृ भवति, करणभावं चाश्रित्य बुद्धौ विचारः, तस्माद्-युक्तमेतत् । सर्वकर्तृत्वप्रसङ्ग इति चेत् ?—यदि पुनः स्वक्रि-यानिमित्तकः कर्तृव्यपदेशः सर्वं कारकं कर्तृ प्राप्तं ?, सत्य-मेतत् नाभ्युपगमा एव दोषत्वेन देश्यन्त इति । कर्तृकर-णादिव्यपदेशश्च कथं ? प्रधानक्रियापेक्षः कर्तृकरणादिव्यपदेशः

यदर्थं करण(१)मुपादीयते सा प्रधानक्रिया, तस्यां च साधनभावे विवक्षिते भेदे वा ऽविवक्षिते कारकमित्यनेन शब्देनाभिलप्यन्ते कर्त्रादयः, यदा तु भेदो विवक्षितस्तदा कर्तृकरणकर्मशब्दवाच्यानीति । कारकशब्देनापि सामान्येनाभिधीयमानेषु कारकेषु यः स्वगतो विशेषः इतरेतरव्यावृत्तः सोऽभिधीयते अन्यस्याभावात्, प्रधानक्रियापेक्षं तु कारकाणां कर्त्राद्यभिधानमिति(२) । तत्र यदितरांप्रयोज्यमितरकारकप्रयोक्तृ च तत् कर्तृ, एवं शेषेषु कारकशब्दाः पूर्ववद्वक्तव्याः(३) । यद्यन्यकारकाप्रयोज्यत्वं कर्तृत्वं मन्त्रयमपि कारकोपादानेन प्रयुज्यते ? न प्रयुज्यते फलस्य प्रयोजकत्वात्–फलं कर्तारं प्रयोजयति, न कारकं करणादि, न च फलं कारकमिति तेषां तन्नान्तरीयकमुपादानम् । न हि करणादिकारकोपादानमन्तरेण क्रिया सम्भवतीति तन्नान्तरीयकत्वात् कारकाण्युपादीयन्त इति । तस्मात्तेनतद्धर्मः करणे न सम्भवतीति ।

उपेत्य प्रत्यभिज्ञानमन्तःकरणे तस्यैकानेकव्यावृत्तेरसाधारणता । न हि प्रत्यभिज्ञानमेकत्वे दृष्टं न नानात्व इति प्रत्यभिज्ञानेन स्वरूपावधारणे च सति विरुद्धः । यदा चेदं प्रत्यभिज्ञानं निरूप्यते तदा बुद्धिभेदं प्रतिपादयति प्रत्यभिज्ञानं हि नामाद्यप्रत्ययसन्निरोधे द्वितीयदर्शने प्रागाहितसंस्काराभिव्यक्तौ स्मृतिपूर्वं तृतीयं दर्शनम् । न च बुद्ध्यभेदवादिनो द्वितीयमपि तावद्दर्शनमस्ति कुतस्तृतीय-

(१) कारक—पा० १ पु० ।
(२) अभिधानादिति—पा० ४ पु० ।
(३) पूर्ववद् प्रयोक्तव्या —पा० ४ पु० ।

मिति । प्रत्ययभेद इति चेत्?—अथ मन्यसे अवस्थिताया बुद्धेः प्रत्ययास्तिरोभवन्ति उपजायन्ते च, तत्राऽऽद्यदर्शनतिरोभावे प्रत्ययान्तराविर्भावे च प्रत्यभिज्ञानमिति? तन्न युक्तम् तद्व्यतिरेकेण बुद्धिस्वभावानवधारणात्—यां तां प्रत्ययव्यतिरिक्तां बुद्धिं भवन्तः कल्पयन्ति तस्याः कः स्वभाव इति वक्तव्यम्? । अस्माकं तु प्रत्ययमात्रं बुद्धिः-अर्थग्रहणं हि बुद्धिरिति । दर्शनदृष्टस्य स्पर्शनेन प्रत्यभिज्ञानाज्ज्ञानात्वे प्रत्यभिज्ञानमिति विरुद्धः प्रदीपान्तरदृष्टस्य प्रदीपान्तरेणेति ।

यदि बुद्धिरध्यवस्यति? अथ बुद्धौ वर्तमानेन ज्ञानेन चेतनः किं करोति, चेतयत इति? कश्चेतयते? यदि यस्याऽध्यवसायः स चेतयते विरुद्धमेतत् । अथात्मा चेतयते? कथं बुद्धौ वर्तमानेन प्रत्ययेनात्मा चेतयते—न ह्यन्यत्र वर्तमानया क्रियया अन्यस्य तद्वत्ता भवति । अथ पुरुषश्चेतयते बुद्धिर्जानीत इति? नेदं ज्ञानादर्थान्तरमुच्यते यावदुक्तं भवति चेतयते तावदुक्तं भवति जानीत(१) इति । बुद्धिर्ज्ञापयतीति चेत्?—अथ मन्यसे बुद्धिर्ज्ञापयत्यात्मा जानीते इति? अद्धा जानीते च पुरुषो बुद्धिर्ज्ञापयतीति अध्यवसायचेतनयोश्च स्वभावभेदो वक्तव्यः । भवताप्येकत्वं वक्तव्यम्? (२) देशकालस्वभावाभेदात् यस्मादविदेशमविकालं च बुद्ध्याऽध्यवसितमात्माप्यध्यवस्यति । स्वभावाभेदोऽसिद्ध इति चेत्?—अथ मन्यसे सत्यमभिन्नकालमभिन्नदेशं च बुद्ध्याऽध्यवसितमात्माप्यध्यवस्यति न पुन(र्य)-

(१) जानातीति—पा० ४ पु० ।

(२) वाच्यम्—पा० ४ पु० ।

स्चेतनात्मैवाध्यवसाय इति ? । न प्रतिशरीरमनेकपुरुषप्रसङ्गात् यद्यन्यश्चेतयिता अन्यश्चाध्यवसाता भवति, अन्यः प्रतिजानीते अन्यः पश्यत्यन्यः शृणोति मन्तेत्येवमादिषु, पुरुषान्तराणि खल्विमानि द्रष्टा श्रोता मन्तेति, नैकस्यैते धर्मा इति । अत्र भवता किं वक्तव्यम् ? अभिन्नार्था एते शब्दा इत्येतद्वक्तव्यम् अभिन्नार्थास्तदेते शब्दा भवन्ति, नत्वधाप्यर्थो न भिद्यते चेतनोऽध्यवसाता मन्ता बोद्धेति(१) तस्माद्युक्तमेतद् बुद्धिरध्यवस्यत्यात्मा चेतयत इति । यदि पुनरिदं प्रत्यभिज्ञानं मनसो नित्यत्वसाधकं(२) स्यात् न युक्तमेवं भवितुम् मनसोनित्यत्वाभ्युपगमात्(३) अभ्युपगम्यते मनसो नित्यत्वमिति तत्र साधनमनर्थकम् । अनेकान्ताच्च न प्रत्यभिज्ञानात् करणैकत्वं सिध्यति दृष्टं करणभेदे ऽपि प्रत्यभिज्ञानं ज्ञातुरेकत्वात् दर्शनदृष्टस्य स्पर्शनेन प्रत्यभिज्ञानात् प्रदीपदृष्टस्य प्रदीपान्तरेणेति ॥

यच्चेदं मन्यते बुद्धेरवस्थिताया यथाविषयं वृत्तयः प्रादुर्भवन्ति वृत्तिश्च वृत्तिमतो नान्येति(४) तच्च न युगपदग्रहणात्,

न युगपदग्रहणात् ॥ ४ ॥

वृत्तिमतोऽवस्थानाद् वृत्त्यवस्थानमिति सूत्रार्थः ॥

अप्रत्यभिज्ञाने च विनाशप्रसङ्गः ॥ ५ ॥

अप्रत्यभिज्ञाने च विनाशप्रसङ्गः वृत्तीनामपगमे वृत्तिमतोऽप्यपगम इति सूत्रार्थः ।

---

(१) मन्ता चेति—पा० ४ पु० ।
(२) साधनं—पा० १ पु० ।
(३) नित्यस्याभ्युपगमात्—पा० ४ पु० ।
(४) ऽनन्येति—पा० ४ पु० ।

अविभु चैकं मनः पर्यायेणेन्द्रियैः सम्बध्यत इति—

क्रमवृत्तित्वादयुगपद्ग्रहणम् ॥ ६ ॥

क्रमवृत्तित्वादयुगपद्ग्रहणम् । वृत्तिवृत्तिमतोर्नानात्वादिति सूत्रार्थः । वृत्तिवृत्तिमतोरेकत्वे प्रादुर्भावतिरोभावयोरभाव इति ॥

अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात् ॥७॥

अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गादिति वृत्तिवृत्तिमतोर्भेदे सत्युपपद्यत इति । एकत्वे त्वनर्थको व्यासङ्ग इति । विभुत्वे चान्तः-करणस्य पर्यायेणेन्द्रियैः संयोगः

न, गत्यभावात् ॥ ८ ॥

न गत्यभावात् । प्राप्तान्यन्तःकरणेनेन्द्रियाणीति सूत्रार्थः । व्यापित्वे च युगपदनेकेन्द्रियसम्बन्धाद्युगपद्ग्रहणप्रसङ्गश्च दोषः ।

अणावपि मनस्येकेन्द्रियग्राह्येषु युगपदुपलब्धिप्रसङ्ग इति चेत् ? करणत्वान्न युगपद्ग्रहणम् । ममाप्येवं कस्मान्न परिहारः ? न कारणभेदे दृष्टत्वात्—यानि खलु(स्व)-भिन्नानि कारणानि तान्येकेनैवाधिष्ठायकेनाधिष्ठितानि युगपत्प्रवर्तमानानि दृष्टानि । यथोभयहस्ताधिष्ठिते वास्यौ प्रवर्तेते तथेन्द्रियाणि व्यापकेनान्तःकरणेनाधिष्ठीयन्त इति युगपत्प्रवृत्तिः प्रसक्ता, तत्प्रसक्तौ च युगपद्ग्रहणप्रसङ्ग इति । गत्यभावाच्च विभुनोऽन्तःकरणस्य प्राप्त्यर्थस्य गमनस्याभावात् । न चायुगपत्प्रत्ययोत्पत्तौ प्रमाणमस्ति येन प्रमाणेन प्रतिषिद्धमपि प्रत्ययायौगपद्यं प्रतिपद्येत यथा किञ्चि(१)त्प्र-

(१) कथञ्चित्–पां० ४ पु० ।

तिषिद्धमपि प्रतिपद्यते यथा(१) चक्षुषो गतिः प्रतिषिद्धा केनचित् सन्निकर्षविप्रकर्षयोस्तुल्यकालग्रहणात्—यस्मात् सन्निकृष्टं पाणिं विप्रकृष्टं चन्द्रमसमेकस्मिन् काले चक्षुषा प्रतिपद्यते तस्मान्न गतिमच्चक्षुरिति विप्रतिषिद्धापि सती गतिर्व्यवधानप्रतिघातेनानुमीयत इति । न चाऽयुगपत्प्रत्ययोत्पत्तौ प्रमाणमस्ति ।

सोऽयं नान्तः करणे विवादो न तस्य नित्यत्वे । कुतस्तर्हि विवादः ? तस्य विभुत्वे । तच्च प्रमाणतोऽनुपलब्धेर्नास्ति । न ह्यन्तःकरणस्य विभुत्वप्रतिपादकं प्रमाणमस्ति एकमन्तःकरणं नाना चेमाश्चक्षुर्विज्ञानाद्यात्मिका वृत्तय इति—एतच्च वृत्तिवृत्तिमतोरेकत्वे ऽनुपपन्नम् । यस्य पुनर्वृत्तिवृत्तिमतोर्नानात्वं तस्यान्तःकरणसाधनश्चक्षुरादिसाधनश्चात्मा अर्थानुपलभत इति युक्तम् । एतेन विषयान्तरव्यासङ्गः प्रत्युक्तः पुरुषो जानीते नान्तःकरणमिति । कः पुनरयं व्यासङ्गः ? अभीष्टविषयोऽनेकविज्ञानोत्पादः स च पुरुषस्य नान्तःकरणस्य, यः पुनरयं सन्निधानासन्निधानलक्षणोऽन्तःकरणस्य व्यासङ्गः सोऽनुज्ञात इति ।

एकमन्तःकरणं नाना वृत्तय इति नैतन्न्यायविरसम्प्राणकः प्रतिपत्तुमर्हति यथैवान्तःकरणमेकं तथा वृत्तिरिति । दृष्टविरोध इति चेत् ?—अथ मन्यसे यदि चान्तःकरणान्न वृत्तिर्भिद्यते ननु दृष्टं विरुध्यते रूपं रसो गन्धः स्पर्श इति दृष्टः प्रत्ययभेदो न स्यात् ?, न न स्यात् विषयभेदानुविधानात् वृत्तिरभिन्नापि विषयभेदमनुविधीयमाना भिन्नेव ख्याति यथोपधानभेदमनुविधीयमानं स्फटिकादिद्रव्यं

(१) तथा—पा० ४ पु० ।

भिन्नामिव प्रकाशते । अस्य चार्थस्य ज्ञापनार्थं स्फटिकान्यत्वाभिमानवद् तदन्यत्वाभिमान इति सूत्रम्—

स्फटिकान्यत्वाभिमानवत् तदन्यत्वाभिमानः ॥ ९ ॥

नानेकान्तात्—उभयथा खल्वयं नानात्वाभिमानो दृष्टः नानाभूतेषु, गन्धादिषु, अभिन्ने च स्फटिक इति ।

यथा श्रुति सूत्रे हेत्वभावो दृष्टान्तमात्रत्वात्—दृष्टान्तमात्रमेतत्नात्र हेतुरस्तीति । विकल्पानुपपत्तेश्च—योऽयं दृष्टान्तः स्फटिकवदिति विकल्पोऽत्र किमयं स्फटिक उपधानभेदेन भिद्यते उत न, किं चातः ? यदि भिद्यते ? न दृष्टान्तः । अथ न भिद्यते ? नानात्वाभिमानः कथम् ? यद्युपधानभेदाद् ? भिन्नमुपधानमिति कथं प्रतिपद्यसे ? यदि प्रत्ययभेदाद्व्याघातः—अभिन्ना वृत्तिः प्रत्ययश्च भिन्न इति व्याघातः प्रत्ययपर्यायत्वाद् वृत्तेः । अथ भवतां वृत्तीनां भेदे किं प्रमाणम् ? ज्ञानानां क्रमेणोपजनापायदर्शनं–क्रमेण ज्ञानान्युपजायन्ते अपयन्ति चेति दृश्यते, एकानेकविषयत्वाच्च प्रत्ययनानात्वाभिमानस्य । एकानेकविषयाधिगतिः कथम् ? एकस्मिंश्च विषये नानात्वाभिमानः स्फटिके दृष्टः(१) नानाभूतेषु च गन्धादिषु नानात्वाभिमानो दृष्टः तेन नानात्वाभिमानस्योभयथा दृष्टत्वादिदमेकमिदमनेकमिति न युक्तः प्रत्यय इति । यश्चायमभिन्ने स्फटिके भेदप्रत्ययः सोऽपि प्रत्ययभेदमन्तरेण न युक्तः । न हि प्रत्ययाभेदवादिनः स्फटिके नीलादिप्रत्ययभेदो युक्त इति । स्फटिके नीलादिप्रत्ययोऽसम्बन्धान्न युक्तः न हि नीलं द्रव्यं चक्षुःसन्निकृष्टमिति ? । अथ सन्निकृष्टं तदेव नीलं न स्फटिक इति

(१) दृष्टान्तः—पा० ४ पु० ।

स्फटिकसमानाधिकरणः स्फटिके नीलप्रत्ययो न युक्तः ? । न नैरन्तर्यदर्शनात्—नैरन्तर्येणावस्थिते स्फटिकनीलद्रव्ये चक्षुषा सन्निकृष्यते तत्सन्निकर्षान्नीलगुणाध्यारोपेण स्फटिके मिथ्याप्रत्ययो नील इति यथा सान्तरेष्वन्तरालादर्शनात् संयुक्तप्रत्यय इति । यस्य च प्रत्ययो न भिद्यते तस्य त्रीणि प्रमाणानीति शास्त्रं व्याहन्यते(१) न हि प्रत्ययाभेदे प्रमाणभेदः सम्भवति । विषयभेदात् त्रित्वमिति चेत् ?—अथ मन्यसे विषयस्त्रेधा भिन्नस्तेनानुरञ्जितः प्रत्ययस्त्रेधैव भवति ?, तन्न युक्तम् प्रमाणाभेदे विषयभेदानधिगतेः । न हि प्रमाणभेदमन्तरेण विषयभेदोऽधिगन्तुं शक्यते इति । विषयतादात्म्यादिति चेत् ?—अथ मन्यसे विषय एवासौ तथा व्यवस्थितस्तादात्म्यात् तथा ख्यातीति ? तन्न, प्रमाणवैयर्थ्यात्(२)—एवं सति व्यर्थं प्रमाणं, न विषयभेदं प्रमाणभेदोऽवगमयति विषयस्तु तादात्म्यात् तथा व्यवतिष्ठते इति । ययाऽपवक्ष्यति तथा. चेतयत इति च व्याघातः—अप्रकारत्वात्—प्रकारवशेन-युक्तम्, अप्रकारे न युक्तम् । बुद्धिस्थं प्रत्ययमुपलभत इति च विरोधोऽधिकरणाधेययोरभेदात्—यः प्रत्ययः स बुद्धिरित्यधिकरणाधेययोरभेदः । एवं च सति बुद्धिस्थं प्रत्ययमुपलभत इति व्याहतम् ॥

( इति बुद्ध्यनित्यताप्रकरणम् । )

स्फटिकान्यत्वाभिमानवत् तदन्यत्वाभिमान इत्येतदुच्यमानः क्षणिकवाद्याह—

(१) भिद्यते—पा० ४ पु० ।
(२) वैयर्थ्यप्रसङ्गात्—पा० ४ पु० ।

**स्फटिके ऽप्यपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनामहेतुः ॥ १० ॥**

स्फटिके ऽप्यपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनामहेतुः।

स्फटिकस्याभेदेनावस्थितस्यान्यत्वाभिमान इत्ययुक्तम् क्षणिकत्वाद्व्यक्तीनाम् क्षणिकत्वमुपचयापचयप्रबन्धदर्शनात्—पक्वाच्छरीरादिषु पक्तिनिर्वृत्तं रसद्रव्यं(१) प्रतिक्षणमुपचीयते चापचीयते च, उपचयाद्व्यक्तीनामुत्पादः अपचयाद्व्यक्तिनिरोधः, तौ चोत्पादनिरोधौ तस्य कालान्तरेण दृष्टौ अतोऽवगम्यते प्रतिक्षणमुपचीयते चापचीयते च शारीरमिति। यस्य खलु प्रतिक्षणमुपचयापचयौ न दृष्टौ तस्य कालान्तरेणापि न भवतो(२) यथा भूमेरपच्यमानायाः पाकजानामिति। पच्यमानभूमिपाकजवच्च प्रतिक्षणं विशेष इति। अस्य प्रयोगः प्रतिक्षणं शरीरमन्यच्चान्यच्च भवति बाह्यप्रत्ययाभेदे सत्यन्ते विशेषदर्शनात् पच्यमानभूमिपाकजवत् अपच्यमानभूमिपाकजवच्चेति।

**नियमहेत्वभावाद् यथादर्शनमभ्यनुज्ञा ॥ ११ ॥**

तदिदमुपचयापचयप्रबन्धदर्शनं शरीरे दृष्टत्वाच्छरीरस्यान्यत्वं साधयतु, न पुनरनुपलभ्यमानोपचयापचयविशेषाणां स्फटिकादीनामेतस्मादन्यत्वं सिध्यतीत्यहेतुः। यन्नोपलभ्यस्तस्यान्यत्वमिति चेत् ?—अथ मन्यसे नैवास्माभिरुपचयापचयप्रबन्धदर्शनेन सर्वभावानां क्षणिकत्वं साध्यते अपि तु यत्र तदस्ति तस्मिन्(३) क्षणिकत्वमिति ?। सत्यम् यस्य

(१) रसवद्द्रव्यं—पा० १ पु०।
(२) न भवति—पा० ४ पु०।
(३) तत्र—पा० ४ पु०।

यस्योपचयापचयप्रबन्ध उपलभ्यते तस्य तस्यान्यत्वमिति, न तु क्षणिकत्वम्, उपचयापचयप्रबन्धदर्शनं चान्यथाभवदहेतुः क्षणिकत्वे । कथमन्यथा पूर्वावयवा(१) आहारावयवसहिताः पूर्वव्यूहपरित्यागेन व्यूहान्तरमापद्यमानाः शरीरान्तरमुत्पादयन्तीति युक्तो भेद इत्यहेतुरेषः । तुल्यं पक्षप्रतिज्ञानमिति चेद् ?–अथ मन्यसे पूर्वाहारावयवोपचययोगे(२) सति शरीरावयवाः शरीरान्तरमारभन्ते पूर्वव्यूहपरित्यागेन, न पुनः क्षणिकत्वादन्यज्जातमित्यत्र को हेतुरिति ? । नासाधनात्–न मयाऽऽहारोपचयापचययोगाच्छरीरस्यान्यता साध्यते, अपि तु भवता विशेषदर्शनाच्छरीरस्यान्यत्वमभ्यधायि ततश्च क्षणिकत्वमिति विशेषदर्शनं क्षणिकत्वसाधनम् । तदस्माभिर्विशेषदर्शनमन्यथाभवद् क्षणिकत्वे न साधनमित्येतावन्मात्रमुच्यते न साधनमभिधीयत इति ।

नोत्पत्तिविनाशकारणोपलब्धेः ॥ १२ ॥

अथावश्यं साधनं वक्तव्यम् इदं प्रमः–नोत्पत्तिविनाशकारणोपलब्धेः ॥

उत्पत्तिकारणं विनाशकारणं चोपचयापचयौ वल्मीकघटादीनां दृष्टाविति तदुभयं क्षणिकत्वे न स्यात् । उपचय इति च वृद्धिः उपचितो गौरिति, अपचय इति ह्रासः अपचितो गौरिति, उभयं चैतदवस्थितवस्तुविषयम्, न ह्यपूर्वं जायमानं वर्द्धत इत्युच्यते नापि विनश्यदपचितमित्युच्यते उपचयापचयोत्पत्तिविनाशकारणोपलब्धेरिति सूत्रार्थः ।

---

(१) पूर्वशरीरावयवाः—पा० ४ पु० ।
(२) पूर्वापरावयवोपचययोगे—पा० ४ पु० ।

अथवा कारणमित्याधारोऽभिधीयते कार्यमित्याधेयम् । न च क्षणिकत्वे आधाराधेयभावः सम्भवति न चाधाराधेयभावमन्तरेण कार्यकारणभावः तस्मात् कार्यकारणभावोपलब्धेरक्षणिकत्वमिति । अस्य प्रयोगः कार्यकारणे एककालानुभाविनी आधाराधेयभावात् क्षीरकुण्डवदिति । क्षीरं कुण्डे वर्तते तच्च कुण्डकालमनुभवति तथा च कार्यं कारणे वर्तते तस्मात् तदपि कारणकालमनुभवति । नाधाराधेयभावस्यासिद्धत्वादिति चेन् ?—अथ मन्यसे ऽसिद्धः कार्यकारणयोराधाराधेयभावः कार्यस्यानाधारत्वात्—नैव हि न किञ्चित् कार्यमाधारवद्दृष्टमिति ? । नानेकान्तात्—नायमेकान्तः सर्वं कार्यमनाधारमिति । यथोभयपक्षसम्प्रतिपत्त्या रूपं कार्यं चाधारवच्च स्पर्शस्तदाश्रय इति च व्याघातः—यदि च रूपमनाश्रितं भवति स्पर्शस्तदाश्रय इति व्याहतम् । अनेन च रूपदृष्टान्तेन यावद्यावत् समानकालतया साध्यते सर्वं तदेककालानुभावि भवतीति । सिद्धः कार्यकारणभावः क्षणिकेष्वपि, नाशोत्पादयोरेककालत्वात् तुलान्तयोरुन्नमनावनमनवदिति चेन् ?—अथ मन्यसे कार्यकारणभावः क्षणिकेष्वपि सम्भवतीति कारणविनाशसमकाले कार्यभावात्—यदा कारणं विनश्यति तदा कार्यमुत्पद्यते विनश्यच्च कारणमस्ति कारणविनाशेनाभिन्नकालः कार्योत्पादः यथा तुलान्तयोर्नामोन्नामाविति ? । न हेत्वर्थापरिज्ञानात्—न ब्रूमः क्षणिकत्वे(१) कार्यकारणभावो नास्ति, अपि त्वाधाराधेयभावो भिन्नकालत्वात् कार्यकारणयोर्न युक्त इति । कार्यं चानाधारमिति न दृष्टान्तोऽस्ति, अस्मत्पक्षे तु कार्यमाधारवदित्यस्ति दृष्टान्तो रूपादि-

(१) क्षणिके—पा० ४ पु०।

रिति । तुलाधारस्य च व्यापारे(१) नामोन्नामभावानभ्युपगमाद्(२) युगपद्भावानुपपत्ति(३)रेकत्वात् । यदि तुलामधिकृत्य ब्रवीषि ? तदेकं कर्म भ्रमणाख्यमेकत्वाद् युगपद्भावो न युक्तः न ह्येकं युगपद्भवतीति । अथात्रयन्त्रकर्मणी ? तयोरपि कार्यकारणभावेनानभ्युपगमात् किं केन सम्बध्यते । अथ युगपद्भावमात्रं विवक्षितमिति ? युगपद्भावः कारणयौगपद्यात्—यावतामर्थानां कारणानि युगपद्भवन्ति तावतामेकस्मिन् काले भाव इति नामोन्नामावसम्बद्धौ कारणयौगपद्यं तु—गुरुत्वमयत्नसंयोगा उन्नतेः, अवनतेरपि गुरुत्ववद्द्रव्यसंयोगानुगृहीतो रज्जुतुलासंयोगः । अथापि न कर्मार्थान्तरं संयोगं वा परः प्रतिपद्यते ? तस्याप्युक्तमुत्तरं संयोगोऽप्यर्थान्तरमिति संयोगकारणत्वेन च कर्माप्यर्थान्तरमिति । यथा च भावानामुत्पत्तिविनाशकारणमुपलभ्यते नैवं स्फटिकस्य, न चानुपलभ्यमानं शक्यमभ्यनुज्ञातुमिति ।

क्षीरविनाशे कारणानुपलब्धिवद् दध्युत्पत्तिवच्च तदुपपत्तिः ॥ १३ ॥

क्षीरविनाशे कारणानुपलब्धिवद्दध्युत्पत्तिवच्च तदुपपत्तिः(४) यथा क्षीरस्य विनाशकारणमनुपलभ्यमानमभ्यनुज्ञायते दध्नोत्पत्तिकारणमेवं स्फटिकादिव्यक्तीना(५)मनुपलभ्यमानम् उत्पत्तिविनाशकारणे अभ्यनुज्ञेये इति ॥

---

(१) कर्मणः—पा० ४ पु० ।
(२) भावेनानभ्युपगमात्—पा० ४ पु० ।
(३) भावानुत्पत्ति—पा० ४ पु० ।
(४) क्षीरविनाशकारणानुपलब्धिवद्दध्युत्पत्तिवच्च तदुत्पत्तिः—पा० ४ पु० । (५) स्फटिकादीनां—पा० ४ पु० ।

लिङ्गतो ग्रहणान्नानुपलब्धिः ॥ १४ ॥

लिङ्गतो ग्रहणान्नानुपलब्धिः । यल्लिङ्गत उपलभ्यते न तन्नास्तीति । विपर्ययश्च स्फटिकादौ, न हि स्फटिकादिव्यक्तीनामपरापरोत्पत्तौ लिङ्गमस्तीति ।

न नास्ति शीतोष्णस्पर्शभेदस्य नानात्वे साधनत्वात्(१)—शीतोष्णस्पर्शभेदो नानात्वे दृष्टो यथाग्नौ उदके च, अस्त्ययं शीतोष्णस्पर्शभेदः स्फटिके ? सत्यमस्ति स तु निमित्तान्तराद्भवति । किं पुनर्निमित्तम् ? अप्तेजोऽवयवानुप्रवेशाच्छीतः तेजोऽवयवानुप्रवेशाच्चोष्ण इति । अप्तेजोऽवयवानुप्रवेशो न युक्तः अल्पतरबहुतरानुप्रवेशे हेत्वभावात्—हेमन्ते ह्याकाशे पर्युषितानां काष्ठभूम्यश्मलोहानां शैत्यस्योत्तरोत्तरो विशेषो दृष्टः तथा पुनर्ग्रीष्मातपसन्तापितानां तेषामेवौष्ण्यस्य, न हि तेष्वल्पतरबहुतरप्रवेशे कारणं पश्यामः तस्मात् स्वगतमहाभूतविशेषापेक्षाण्यवासादितबाह्यनिमित्तानि भूतान्येव तथा तथोत्पद्यन्त इति युक्तम् ? । न युक्तम्—न ह्यप्तेजोऽवयवानुप्रवेशेन भूतस्वभावो निवार्यत इति भूतस्वभावस्योभयपक्षसाम्यादसाधनं भूतस्वभाव इति । विरुद्धश्चायं हेतुः(२) यद्यवयवानुप्रवेशं न प्रतिपद्यसे खरस्नेहोष्णेरणात्मकानि भूतानीति व्याहन्यते । कथमिति ? यत् कठिनं तदेकस्मिन् काले उष्णमपि भवतीति, यच्चोष्णं तत् कठिनं गच्छतीति, तदेकस्वभावकं वस्तु द्विस्वभावकं त्रिस्वभावकं च प्राप्नोति । यस्य पुनरवयवानुप्रवेशस्तस्यैष दोषो नास्ति अन्यत्रावस्थितस्य संयुक्तसमवेतस्य औष्ण्यस्य ग्रहणादिति ।

(१) साधनात्—पा० ४ पु० ।
(२) स्वभावहेतुः—पा० ५ पु० ।

विरुद्धश्चायं हेतुः । कथम् ? एकस्य विशेष(स्य)ाभ्युपगमात्–एकं वस्त्वेकस्मिन् काले कठिनमुष्णं गच्छति चेति त्रिस्वभावकं, ततश्च विशेषदर्शनादित्ययं हेतुः सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध इति विरुद्धो भवति । अथ मन्यसे न विशेषमात्रं नानात्वं प्रतिपादयत्यपि तु विरोधी विशेषो नानात्वे साधनमिति ? । नाभिप्रायापरिज्ञानात्–वयमपि न ब्रूमो विशेषमात्रं नानात्वसाधन,मपि तु विरोधी विशेष इतरेतरव्यावृत्तो लक्षणत्वेनोपपन्नः स विरुद्धः, यद्यविरुद्धः स्यान्न लक्षणं स्यात् एकवृत्तित्वे वा लक्षणत्रयस्य तत्तद्वस्तु किमभिधीयते ।.यदि तावद् पृथिवी ? तन्न युक्तमौष्ण्यस्य दर्शनात् । अथ तेजः ? तदपि न युक्तं काठिन्यदर्शनात् । एतेन वायुर्व्याख्यातः । सोऽयं हेतुर्भूतलक्षणं साधने नानात्वसाधनं वा न भवति । एतेन जले तापग्रहणं प्रत्युक्तम् । तत्राप्यौष्ण्यस्निग्धनैरण्तता च युगपद्भवतीति । जलेऽग्निरूपग्रहणमसङ्गत्वु न युक्तोऽभिभवात् । तन्न, सिद्धान्तापरिज्ञानात्–नायं सिद्धान्तो जलरूपेणाग्निरूपमभिभूयत इति, अपि तु तेजसश्चातुर्विध्यात् तत्र न रूपग्रहणम्—चतुर्विधं तेज इत्येतद् प्रसाधित(१)मिन्द्रियप्रकरण इति ।

या चेयं प्रतिज्ञा अन्यश्चान्यश्च स्फटिक इति, अस्याश्च कोऽर्थः ? यदि तावदन्यत्वमात्रं तदा सिद्धसाधनं भवति कुम्भादिभ्योऽन्यः(२) स्फटिक इति । अथ स्फटिकान्तरादन्य इति ? तदपि तादृगेव । अथ पूर्वस्फटिकादन्य इति ?, कतमोऽसौ पूर्वस्फटिको यतोऽयमन्य इति । व्यवच्छेदस्याशक्यत्वादनभिधानम्—यथोभयपक्षसम्प्रतिपन्ना रूपादयः

(१) प्रतिपादितम्–पा० ४ पु० ।
(२) स्तम्भादिभ्योऽन्यः—पा० ४ पु० ।

तेभ्योऽन्यानन्यविचारो घटादेर्युक्तः न पुनरिह पूर्वस्फटिकान्तरमुभयपक्षसम्प्रतिपन्नं यतो वर्तमानमन्यत्वेन साध्यते । अथोभयपक्षसम्प्रतिपन्नं पूर्वस्फटिकान्तरं ? व्यर्थं साधनम् । अथ वर्तमानं स्फटिकमभ्युपगम्य यदतीतं स्फटिकान्तरं तदन्यदिति साध्यते ? एवं सति शीतोष्णस्पर्शभेदो न तद्धर्मः वर्तमानस्फटिकधर्मत्वात् । वर्तमानाच्च स्फटिकादन्यदतीतमिति केनैतद्य प्रतिपन्नम् । अथ तदेवान्यदिति ? व्याघातः तदेवान्यच्चेति । एवं यथायथाऽन्यत्वं विचार्यते तथा तथा सिद्धसाधनं भवति सिद्धान्तं च बाधते ।

अथायुगपत्कालप्रसयानामालम्बनं स्फटिको न भवतीति प्रतिज्ञार्थः ? एतस्मिन्नपि प्रतिज्ञार्थे न दृष्टान्तोऽस्ति । प्रदीपो दृष्टान्तः प्रदीपोऽयुगपत्कालप्रसयानामनालम्बनं सदादिधर्मा चेति विद्यते दृष्टान्तः ?, नासिद्धत्वात्–असिद्धमेतत् अयुगपत्कालप्रसयानालम्बनाः प्रदीपादयः तेषामनेकक्षणावस्थानात्—प्रदीपस्य तावत् स्वकारणसत्तासम्बन्धकालः सामान्याभिव्यक्तिकालः अवयवकर्मकालः तदनन्तरं विभागकालः तदनन्तरं तत्संयोगविनाशकालः ततो द्रव्यनाश इति । यथा प्रदीप एवं सर्वे भावाः स्वकारणसत्तासम्बन्धा(१)भिव्यक्तितद्विरोध्याश्रयविनाशानुविधानेन विनश्यन्ति, अकारणस्य विनाशानभ्युपगमात् । न हि नः किञ्चिन्निष्कारणं विनश्यति । विनश्यदवस्थद्रव्यकर्मैवहेतव स्यात् ? न कर्मणोऽभ्युपगमे विरोधात् अनभ्युपगमाच्च । विनाशहेत्वभावादिति चेत् ?–अथ मन्यसे न विनाशकारणमस्ति तस्मादुत्पन्नमात्र एवायं भावो विनश्यतीति ?–न विकल्पानुपपत्तेः—विनाशहेतुर्नास्तीति कु-

(१) सम्बन्धेति नास्ति ४ पु० ।

शाणः पर्यनुयोक्तव्यः(१) किमकारणत्वाद्विनाशो नास्ति उ-ताकारणत्वान्नित्य इति । भवतां पक्षे ऽकारणं द्वेधा नि-त्यमसच्च(२) अस्माकं तु नित्यमेव । यद्यकारणत्वान्नित्यो विनाशः कार्यस्योत्पादो न प्राप्नोति उत्पन्नस्य च भावस्य विनाशेन सहावस्थानमिति च दोषः । ततश्च भावानाम-भावाविरोधादत्यन्तमवस्थानमिति । अथासन्विनाश ? एवमपि सर्वनित्यत्वं विनाशाभावात् । यदि चासन्विनाशो विनश्य-तीत्यसति विनाशे मत्ययो न प्राप्नोति नासत्यां गतौ ग-च्छतीति भवति । अथाविनाशित्वादकारणो विनाश इति मन्यसे ? विनाशो न विनश्यतीति कुत एतत् । विनष्टानां पुनरनुत्पत्तेरिति चेत् ?-अथ मन्यसे यदि विनाशो विनश्येत विनष्टः पुनरुत्पद्येत ? । न युक्तमेतत्–न हि विनाशा(भावा)-भावो यतोऽस्य विनाशाद्भवेत्(३) अपि तु कारणवान् भावस्तस्य यदा कारणं भवति तदोत्पाद इति । अपि च विनाशः कारणवाँश्च न विनश्यसभावत्वात्, भावधर्म एषः (४) यद् कारणवत् तद्विनश्यतीति अभावस्त्वकारणोऽपि विनश्यतीति यथा प्रागभावः, कारणवानपि न विनश्यति यथा प्रध्वंसाभावः । यदि कारणवान् विनाशो ननु ज-नकं विनाशकं प्राप्नोति–य एवाग्निसंयोगः पाकजानामुत्पा-दयिता(५) स एव पाकजान्तरोत्पादे पूर्वपाकजानुच्छिनत्ती-

(१) पर्यनुयोज्यः-पा० ४ पु० ।
(२) अकारण द्विधा भवति नित्यमसच्च-पा० ४ पु० ।
(३) यतो विनाशविनाशाद्भवेत्—पा० ४ पु० ।
(४) एव—पा० ४ पु० ।
(५) उत्पादकः—पा० ४ पु० ।

ति जनकं विनाशकं प्राप्तम्(१) ? नानवरोधात्(२)—नेदं भवता काश्यपीयं दर्शनं व्यज्ञायि, न हि नो य एवाग्निसंयोगः पाकजानुत्पादयति स एवोच्छिनत्ति, अपि त्वग्निसंयोगान्तरं पूर्वरूपाद्युच्छिनत्ति समनन्तरकालाद्रूपादीनारभते(३) ततस्तान्यप्यन्यस्तान्यप्यन्य इत्येवं जनकस्य विनाशकत्वप्रसङ्गो नास्ति । अथ मन्यसे जनकस्वरूपमपि विनाशकं न भवति ? न न भवति—दृष्टो ह्यवादिसंयोगादङ्कुरस्योत्पादः स एवाबादिसंयोगस्तद्विनाशक इति । न हि दृष्टेऽनुपपन्नं नाम । यश्चाकारणविनाशे दोषः सोऽपरिहार्य इत्यत एवमुच्यते जनकस्वरूपं विनाशकमिति ।

एवं तावदन्यत्वे साध्ये दोष उक्तः । ये तु क्षणिकत्वं साधयन्ति विशेषदर्शनाद्विनाशहेत्वभावाच्च, तान् प्रतीदमुच्यते क्षणिकाः संस्कारा इति ब्रुवाणः क्षणिकशब्दार्थं प्रष्टव्यः किमुक्तं भवति क्षणिका इति । यदि विनाशिन इति ? सिद्धसाधनम् । अथाशुविनाशिन इति ? तदा विशेषणं सिद्धान्तविरोधि । अथोत्पन्नप्रध्वंसिन इति ? एतदपि तादृगेव । उत्पन्नाः प्रध्वंसिन इति ? सिद्धसाधनम् । अथोत्पन्नो विनष्ट इत्येकः कालः उत्पत्तिविनाशावेककालाविति ? । तेन यथाऽनुत्पन्नस्योत्पत्तिरेवमनुत्पन्नस्य विनाश इति प्राप्तम् । अथोत्पन्नं विनश्यतीति ? एतस्मिन्नपि पक्षे उत्पत्तिवद्विनाशः कारणवान् यथोत्पत्तिः क्रियात्वात् कादाचित्कत्वात् सकारणा तथा

(१) प्राप्नोति—पा० ४ पु० ।
(२) नानवबोधात्-पा० ४ पु० ।
(३) समनन्तरकालान् रूपादीनारभते-पा० ४ पु० ।

विनाशकारणमनुभवति(१) ततो विनश्यतीति अकारणे च विनाशे दोष उक्तः। यश्चायं मत्वर्थीयः क्षणिका इति स कथं? यदि निरुक्तन्यायेन क्षयः क्षण इति क्षणोऽस्यास्तीति क्षणिक इति? तन्न युक्तं कालभेदात्—यदा क्षयो न तदा क्षयीति भिन्नकालयोर्न मत्वर्थीयो दृष्टः। अथ पुनर्भावप्रत्यानन्तरेण विनाशेन विशिष्यमाणः क्षणिक(२) इत्युच्यते? तथापि तेनैव तदेव तद्वत् भवतीति न युक्तो मत्वर्थीयः। अथ क्षणावस्थितिकालाः क्षणिका इति? सर्वान्सं कालं क्षणत्वेन प्रतिपद्य तत्र ये ऽवतिष्ठन्ते ते क्षणिका इति?। एतदपि न युक्तम्—सञ्ज्ञामात्रत्वेन कालस्याभ्युपगमात्। पञ्चभिस्तवः सञ्ज्ञाभेदमात्रमिति शास्त्रम्। न हि सञ्ज्ञामात्रं वस्तुविशेषणत्वेन युक्तम्। क्षणिका इति च प्रतिज्ञां कृत्वा न दृष्टान्तोऽस्तीत्युक्तम् प्रदीपादेरसिद्धत्वात्।

ये ऽपि हेतवोऽन्ते विशेषदर्शनादिसेवमादयस्तेऽप्यसिद्धाः अन्यथासिद्धा विरुद्धा वा भवन्तीसंहनवः। उपेत वा विशेषवत्त्वं वर्तमानैकक्षणविशेषवत्त्वेनानैकान्तिकम् उभयपक्षसम्प्रतिपत्त्या य एव क्षणो वर्तमानः स विशेषवान् भवत्येकश्चेत्यनेकान्तः। अन्ते विशेषदर्शनादिति च विशेषणानर्थक्यम् अन्तार्थानभिधानात् कतमस्मिन्नन्ते विशेषदर्शनादिति च वक्तव्यम्।अथान्तो विनाशः? नैतस्मिन् विशेषदर्शनमस्ति? अथान्तिमं वस्त्वेवान्तशब्दवाच्यम्? एवं सत्येकस्मिन् विशेषदर्शनमिति विरुद्धो हेतुः।

योऽप्ययं हेतुर्दर्शनादर्शनादिति-अस्यार्थः-नीयमानस्य किल म

---

(१) तथा विनाशिन इत्युत्पद्य विनाशकारणमनुभवति—पा० ४ पु०। 'तथा विनाश इत्युत्पत्य विनाशकारण' इति क्वचित् पा०।
(२) क्षण इत्युच्यते—पा० ४ पु०।

दीपादेर्द्रव्यस्य देशान्तरे उत्पादो देशान्तरे निरोधः तत्कृते दर्शनादर्शने स्तः अतश्च देवदत्तादेर्गच्छतो दर्शनादर्शनादतस्तस्यापि प्रतिक्षणमुत्पादविनाशाविति ? । नैतन्न्याय्यम्—देवदत्तादेर्दर्शनादर्शनयोरन्यनिमित्तत्वात् संयोगविभागकृते(१) दर्शनादर्शने नोत्पादविनाशकृते, यस्मिन् देशे संयोगो विनष्टः तस्मिन् संयोगी न गृह्यते यस्मिन्नुत्पन्नस्तस्मिन् गृह्यत इति यद्योगाद्धि द्रव्ये इहबुद्धिर्भवति तद्भावाभावयोस्तद्वत्त्वादिति । अथ संयोगविभागौ न विद्येते ? तस्यापि संयोगोऽर्थान्तरं भवतीति प्रतिपादितम् । एतेन विभागो व्याख्यातः । तदेवं संयोगविभागोत्पत्तेर्द्रव्यस्य दर्शनादर्शने भवतो नान्यथेति ।

यत्पुनरेतत् प्रदीपस्य देशान्तर. उत्पाद इत्येतदपि न बुध्यामहे । कथमिति ? भवतावद्भवतां पक्षे वस्तूत्पन्नं(२) यत्र तत्रैव तद् ध्वंसते यदुत्पित्सु तदनाहितसंस्कारमसत्त्वाद्देशान्तरे नोत्पत्तुमर्हतीति । अथानाहितसंस्कारस्यापि देशान्तरे उत्पादो ? न किञ्चिद्वस्तु स्वाभिन्नदेशमुत्पद्यते । अथ कारणं संस्कृतमिति ? तदाधेयवशात् कार्यमपि तथाभूतमेवोत्पद्यत इति तुल्यम् कार्येण, यथैव कार्ये संस्कार आधातुमशक्यः तथा कारणे ऽपीति तुल्यम् । नित्यं भवतां पक्षे भिन्नदेशेन कार्येणोत्पत्तव्यमभिन्नदेशेन वा । एतेनैवातुल्यपातो व्याख्यातः । अतुल्यपातात् क्षणिकत्वमिति न किलाकाशे पततो लोष्टादेः प्रतिबन्धकं किञ्चिदस्ति यदनुविधानेन लोष्टादिकं किञ्चिच्चिरेण पतति किञ्चिदाशिवति, तस्मात् क्षणिकत्वात् काश्चिदवस्थास्तादृश्य उत्पद्यन्ते यासां न भवत्यधः सन्तानोत्पत्तौ सामर्थ्यं पुनश्च तादृश्य उत्पद्यन्ते यासां भवतीति ? एतदप्यन्यथासिद्धमेव

(१) संयोगविनाशकृते–पा० ४ पु० । (२) वस्तूपपन्नं–पा० १ पु० ।

तुल्यानां गुरुत्ववतां द्रव्याणामेकस्य गुरुत्वमयत्नक्षेपाः कारणम् एकस्य गुरुत्वमात्रमेकस्य गुरुत्वमयत्नाविति । तदेवं कारणभेदानुविधायीनि गुरुत्ववन्ति द्रव्याणि चिराशुपातानुविधानभाञ्जि भवन्तीत्यहेतु(१)स्तुल्यपातः । यदपीदमिषोश्चापतनं भवेदिति ? । संस्कारैकत्ववादिनो दोषः अयमपि संस्कारैकत्वानभ्युगमेन प्रत्युक्तः । यथा चानेकः संस्कार इति तथोक्तं पाणिनिपमित्तमश्लेषसूत्र इति । एकश्च संस्कारः यदा कदाचिन्निमित्तभेदात् पटूनि कर्माणि करोति कदाचिन्मन्दानीति गुरुत्ववद्द्रष्टव्यम्—यथैकं गुरुत्वं सहकारिसंयोगात् मन्दं पातं करोति तदेव प्रतिबन्धापगमे पटुं करोति । दृष्टो हि ग्राव्ण आकाशे मुक्तस्य पटुः पातो मन्दोऽपामिति तदेवमतुल्यपातोऽप्यहेतुः ।

अथाक्षणिकत्वे किं प्रमाणम् ? उक्तमाधाराधेयभावादेककालानुभावीनि कार्यकारणे कुण्डे वदरवदिति अतश्च विमतिपन्ना अयुगपत्कालाः प्रत्यया एकविषयाः अन्युत्थायितप्रत्ययसामानाधिकरण्ये सति समानशब्दवाच्यत्वात् वर्तमानैकक्षणानेकपुरुषप्रत्ययवत् यथा वर्तमानक्षणविषयाणामनेकपुरुषप्रत्ययानामव्युत्थायितप्रत्ययसामानाधिकरण्ये सति समानशब्दवाच्यानामेकविषयत्वम् तथा चाव्युत्थायितप्रत्ययसमानाधिकरणाः समानशब्दवाच्याश्च विमतिपन्ना अयुगपत्कालाः प्रत्ययास्तेऽप्येकविषया इति प्रत्ययाश्च नानेककर्तृकाः प्रत्यया अप्रतिसन्धानप्रसङ्गाद्देवदत्तादिप्रत्ययवदिति । रूपरसगन्धस्पर्शप्रत्यया एकानेकनिमित्ताः प्रत्येतिप्रतिसन्धानात् कृतसमयानां बहूनां वर्तमानैकक्षणानेकविज्ञानवदिति। स्वस्तनाद्यतनविज्ञानान्येकसन्ततौ एकानेकनिमित्तानि

(१) चिराशुपाताद्याशुतरपातानुविधानभाञ्जि भवन्तीति न हेतुः—पा० ४ पु० ।

मयेतिप्रतिसन्धानात् पूर्ववत् । शास्त्रार्थप्रत्यया एकानेकनिमित्ताः प्रतिसन्धानात् पूर्ववत् । नानाविषयाणां च नानाकर्तृकाणां च प्रत्ययानामप्रतिसन्धानादिति पूर्ववदेव न्याय इति ॥

न पयसः परिणामगुणान्तरप्रादुर्भावात् ॥ १५ ॥

न पयसः परिणामगुणान्तरप्रादुर्भावात् । नैवं क्षीरं विनश्यति नापि दध्युत्पद्यते, अपि त्ववस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरमुत्पद्यत इत्येके वर्णयन्ति । अपरे त्ववस्थितस्य द्रव्यस्य गुणनिवृत्तौ गुणान्तरमुत्पद्यत इति । स खल्वयमेकपक्षीभाव इव (१)क उपमानार्थः उभयत्र द्रव्यमवतिष्ठते एकस्य तिरोभावाभिव्यक्ती एकस्य विनाशप्रादुर्भावावित्युपमानार्थः । उभयत्रोत्तरम्—

व्यूहान्तराद् द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम् ॥ १६ ॥

व्यूहान्तराद्द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम् । शेषं भाष्ये । यत्पुनरेतदेकस्य तिरोभावाभिव्यक्ती एकस्य विनाशप्रादुर्भावाविति ? तन्न, पूर्वावस्थापरित्यागात् । यदि विनाशोत्पादौ निवृत्तिप्रादुर्भावात्तथाप्याभिव्यत्त्यनभिव्यक्तौ सर्वथा पूर्वावस्थां जहाति द्रव्यमिति न ह्यनपहृतस्य पूर्वावस्थातोऽभिव्यत्त्यनभिव्यक्ती भवतो विनाशप्रादुर्भावौ चेति । तस्मादयुक्तमवस्थितस्य परिणाम इति ।

अभ्यनुज्ञाय च निष्कारणं क्षीरविनाशं निष्कारणं च दध्युत्पादम्—

---

(१) भाव इति-पा० १ पु० ।

**क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः ॥ १७ ॥**

क्वचिद्विनाशकारणानुपलब्धेः(१) क्वचिच्चोपलब्धेरनेकान्तः। क्षीरदधिवन्निष्कारणौ विनाशोत्पादौ स्फटिकव्यक्तीनां, न पुनः कुम्भादिवत् सकारणाविति नात्र हेतुरस्तीति। निरधिष्ठानं च दृष्टान्तवचनम्। कोऽधिष्ठानार्थः? आश्रयार्थः। किमुक्तम्भवति निरधिष्ठानमिति? धर्मी नास्तीति यावदुक्तं भवति, न हि स्फटिकस्योत्पादविनाशौ प्रतिक्षणमुपलभ्येते यत इयं चिन्ता भवेत् किमेतौ सकारणावाहोस्विदकारणाविति, यथाऽनभ्युपगतशब्दसत्त्वं प्रति कश्चिद्ब्रूयात् कृतकत्वादनित्यः शब्दस्तद्वदेतदिति धर्म्यसिद्धेश्च दृष्टान्ताभाव इति च समानम्। अभ्यनुज्ञाय च स्फटिकस्योत्पाद(२)विनाशौ योऽत्र साधकस्तस्याभ्यनुज्ञानादप्रतिषेधः उभावेतौ दृष्टान्तौ क्षीरदधिवत् कुम्भादिवच्च तत्र किं कुम्भादिदृष्टान्तो भवत्वथ क्षीरदधिनी इति। तत्र कुम्भादिवदिति युक्तम् कुम्भाद्युत्पत्तिविनाशकारणस्य दृष्टत्वात्। क्षीरदधिवत्तु न युक्तम् अनुमानतो ग्रहणादिति सिद्धमनित्या बुद्धिरिति। इतश्चानित्या बुद्धिः गुणत्वे सति प्रत्यक्षाया व्यापकद्रव्यसमवायात् शब्दवत् जातिमत्त्वे सति अस्मदादिप्रत्यक्षत्वादाश्रितत्वात् शब्दवत् करणभावे सत्ययोगिप्रत्यक्षत्वात् शब्दवदेव॥

( इति क्षणभङ्गप्रकरणम्। )

सा चेयं बुद्धिः कस्य गुण इत्येतच्चिन्त्यते। न गुणभावासिद्धेः? अनित्यत्वे सत्यचाक्षुषप्रत्यक्षत्वाद्गुणभावः। सन्निकर्षोत्पत्तेः संशय इति। तत्रायं विशेषः—

(१) नुपपत्तेः– पा० १ पु०। (२) तस्योत्पाद–पा० ४ पु०।

नेन्द्रियार्थयोस्तद्विनाशे ऽपि ज्ञानावस्थानात् ॥ १८ ॥

नेन्द्रियार्थयोस्तद्विनाशे ऽपि ज्ञानावस्थानात् । भवति खल्विन्द्रिये ऽर्थे च विनष्टे ज्ञानमद्राक्षमिति । अद्राक्षमित्येतन्नेन्द्रियार्थसन्निकर्षात् स्मृतित्वात् स्मृतिरेषा नेन्द्रियार्थसन्निकर्षाद्भवितुमर्हति । स्मृतावपि तुल्यं यथैव ज्ञातारमन्तरेण ज्ञानं न भवत्येवमनुभवितरि नष्टे अनुभवितारमन्तरेण स्मृतिरयुक्तेति ।

अस्तु तर्हि मनो गुणः ज्ञानं—

युगपज्ज्ञेयानुपलब्धेर्न मनसः ॥ १९ ॥

युगपज्ज्ञेयानुपलब्धेर्न मनसः । तत् खलु युगपज्ज्ञेयानुपलब्ध्या समधिगतं मनो नातस्तस्य गुणो ज्ञानम् । विशेषणोपादानादन्तःकरणबहुत्वमसङ्ग इति चेत् ?–अथ मन्यसे यत् खलु युगपज्ज्ञेयानुपलब्ध्या समधिगतं मनो न तस्य गुणो ज्ञानमित्येवं ब्रुवाणेन बहून्यन्तःकरणानि प्रतिपन्नानि भवन्ति न ह्यसत्यन्तःकरणबहुत्वे विशेषणमर्थवदिति ? । न, सर्वस्येन्द्रियस्य मनननिमित्तत्वात्–सर्वमिन्द्रियं मनननिमित्तत्वान्मन इत्युच्यते । एवं च सति विशेषणं युक्तम् युगपज्ज्ञेयानुपलब्ध्या यत् समधिगतं मनो न तस्य गुणो ज्ञानमिति । एवमपि विशेषणं व्यर्थम्—अन्यस्यानभ्युपगमात्–यदि तस्यान्तःकरणस्य न भवत्यन्यस्य तर्हि साधनस्य ज्ञानं गुण इति प्राप्तम् ? अन्यस्यानभ्युपगमात् ? । अन्यस्योपपत्तेरप्रतिषेधः–अनवस्थितत्वात् प्रमाणप्रमेयभावस्य, यदायं योगी पुरुषान्तरेण पुरुषान्तरं परिच्छिनत्ति तदा पुरुषान्तरपरिच्छेदे पुरुषान्तरं साधनमिति तत्त्वज्ञानगुणं भवतीति युक्तं विशेषणमिति । तस्मान्न तस्य गुणो ज्ञानमिति । कस्य तर्हि ? ज्ञस्य, वशित्वात्–वशी ज्ञाता, वश्यं करणमिति। न चायं ज्ञातरि नि-

यतो ज्ञाता तश्चेत तश्चोऽपि भवतीति। अचेतने तु नियमः—अचेतने तु सर्वं वश्यमिति। तदर्थं मनोऽचेतनत्वात् घ्राणादिवदिति। ज्ञानगुणत्वे वा सञ्ज्ञाभेदमात्रम् चित्तं चान्तःकरणं ज्ञानगुणं चेति सञ्ज्ञामात्रं भिद्यते। यथा च ज्ञातुर्ज्ञानसाधनमिन्द्रियमेवं मन्तुर्मतिसाधनेनावश्यं भवितव्यमिति। उभयोश्चेतनत्वे प्रत्ययव्यवस्थानुमानं न स्यात् विभु चान्तःकरणं ज्ञानगुणमिति सर्वेन्द्रियैर्युगपदुपलब्धिप्रसङ्गः॥

तदात्मगुणत्वे ऽपि तुल्यम्॥ २०॥

तदात्मगुणत्वे ऽपि तुल्यम्। यस्यात्मा विभुश्च ज्ञानगुणश्च तस्यापि सर्वेन्द्रियैः सम्बन्धस्याप्रतिषेधाद् युगपदुपलब्धिप्रसङ्गः।

इन्द्रियैर्मनसः सन्निकर्षाभावात् तदनुत्पत्तिः॥२१॥

न प्रसङ्गः कारणान्तरभावात्—इन्द्रियार्थसन्निकर्षवदिन्द्रियमनःसन्निकर्षोऽपि कारणमिति। तस्यायौगपद्यमणुत्वान्मनस इति। यदि पुनरात्मेन्द्रियार्थसन्निकर्षादेव ज्ञानमुत्पद्येत किं स्यात्—

नोत्पत्तिकारणानपदेशात्॥ २२॥

नोत्पत्तिकारणानपदेशात्। अस्मादेवोत्पद्यतामिति न कारणमपदिश्यत इति सूत्रार्थः। आत्मेन्द्रियार्थसन्निकर्षाद् ज्ञानमुत्पद्यत इति। अयुगपदुत्पत्तौ वा न कारणान्तरमपदिश्यत इति। विदेहप्रलयानुपपत्तौ वा। यदेन्द्रियमर्थेन बहिरवस्थितेन सम्बद्ध्यते आत्मसम्बन्धोऽपि तत्रास्तीति(१) कस्माद्विदेहप्रलयो न भवतीति वक्तव्यम्। अन्तःकरणप्रत्याख्याने च केवलमात्मा स्मृत्यादिकारणमिति कस्मान्न युगपदुत्पत्तिः स्मृतीनाम्, यदा चेन्द्रियमात्मा चार्थेन युगपत्सम्बद्धौ तदा किमिन्द्रियार्थ-

(१) तस्यास्तीति—पा० ४ पु०।

सन्निकर्षः कारणम् उत आत्मार्थ(१)सन्निकर्षः उतात्मेन्द्रियार्थसन्निकर्ष इति कारणानपदेशः ।

**विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥ २३ ॥**

विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः । तदात्मगुणत्वे ऽपि तुल्यम् इत्येतदनेन समुच्चीयते यथाऽऽत्मगुणो बुद्धिर्भवति विनाशकारणाभावान्नित्यत्वमस्याः प्रसज्येत । कथमिति ? गुणानां द्वौ विनाशहेतू आश्रयाभावो विरोधिगुणप्रादुर्भावश्च तत्र नित्यत्वादात्मनोऽनुपपन्नः पूर्वः विरोधी च गुणो नास्तीति नित्यत्वप्रसङ्गः ॥

**अनित्यत्वग्रहणाद्बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् ॥२४॥**

अनित्यत्वग्रहणाद्बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् । अनित्या बुद्धिरित्येतत् प्रतिपादितम् । तत्रास्या बुद्ध्यन्तराद्वा संस्काराद्वा विनाश इति प्रतिपत्तव्यम् । न द्वे सहेति चेत् ?— अथ मन्यसे न द्वे बुद्धी सह भवतो यतः परया पूर्वा निवर्त्येत ? तच्च न युगपदुत्पत्तिनिषेधात्—युगदुत्पत्तिः प्रतिषिध्यते न सहभावः न हि बुद्ध्योर्युगपद्भावे किञ्चिद्विरुध्यत इति । लब्धात्मकेन च कार्येण कारणविनाशाभ्युपगमात्—यदा च कार्यं लब्धात्मकं भवति तदा कारणं विनाशयति शब्दवत् । यथा लब्धात्मकः(२) कार्यः शब्दः कारणं शब्दं निर्माष्टि तथा॰ बुद्धिरपीति । अन्त्ययोर्न स्यादिति चेत् ? अथ मन्यसे यदि पूर्वौ बुद्धिशब्दौ पराभ्यां विनाश्येते अन्त्य-

(१) उतात्मार्थयो—पा० ४ पु० ।
(२) लब्धात्मा—पा० ४ पु० ।

योर्बुद्धिशब्दयोः कथं(१) विनाशकारणमिति—यथा चान्त्यौ बुद्धिशब्दौ विना निमित्ताद्विनश्यतः एवमन्यदपि कार्यमिति ? । न स्पर्शवद्द्रव्यसंयोगान्न तदुत्पत्तिः(२) स्पर्शवद्द्रव्यसंयोगेनान्त्यशब्दो विरुध्यते । ये कुड्यादिभिः कारणस्य संयोगास्त एकार्थसमवायिनं शब्दं प्रतिबध्नन्ति अतोऽस्यन्त्यमश्रुतिः शब्दस्येति । अन्त्या बुद्धिः स्थितिहेत्वभावाद्विनश्यतीति कालाद्वा संस्काराद्वा । कथं कालात् ? यावस्य जन्मनः स्थितिहेतू धर्माधर्मौ तयोरभावादन्त्या बुद्धिर्विनश्यतीति । कस्मात् पुनरेवमुच्यते ? न पुनरहेतुको विनाशोऽभ्युपगम्यत इति ? नाभ्युपगम्यते उक्तदोषात् । निर्हेतुके विनाशे उक्तो दोषः(३) क्षणभङ्गं निराकुर्वद्भिरिति । यदि कारणस्यायौगपद्याद्बुद्धीनामयुगपदुत्पत्तिः यत्र कारणस्य यौगपद्यमस्ति तत्र युगपदुत्पत्तिप्रसङ्गो यथा स्मृतिषु । अत्र तावदेकः परिहारः करणस्यैकक्रियानिर्वृत्तौ सामर्थ्यात्—न हि करणमेकस्मिन् काले ऽनेकां क्रियां निर्वर्तयितुं शक्तमिति परिच्छेदत्वाच्च स्मृतीनां ज्ञानवदयुगपदुत्पत्तिरिति । अपरे तु कारणस्यायौगपद्यमुपपादयिष्यन्तः ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिरित्याहुः—

ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः ॥ २५ ॥

नान्तःशरीरवृत्तित्वान्मनसः ॥ २६ ॥

एतत्तु न सम्यगिति प्रतिपादयितुमाह नान्तःशरीरवृत्तित्वान्मनसः ॥

---

(१) कि—पा० ४ पु० । (२) तदनुपपत्तेः—पा० ४ पु० ।
(३) उक्ते हेतुः—पा० ४ पु० ।

अन्तःशरीरे मनो वर्तते इति को वृत्त्यर्थः ? । न तावदाश्रयाश्रितभावः—न हि मनः क्वचिदाश्रितम् । नापि वृत्तिः स्वकार्यसामर्थ्यम् बहिःकार्यदर्शनान्मनसाधिष्ठितं चक्षुर्निःसृत्य रूपादि ग्राहयति(१) चक्षुषोर्वोसरावों(?)मनसः कार्यं तद्भावभावित्वात् न चान्या वृत्तिः सम्भवति तस्मान्नान्तःशरीरवृत्ति मन इति ? । अत्र ब्रूमः नाश्रयाश्रितभावो(२) मनसो वृत्तिर्नापि कार्यप्रतिलम्भोऽपि तु नाशरीरस्य मनसः कार्यमिति मनसो वृत्त्यर्थः—न ह्यशरीरं मनः पुरुषस्यार्थं करोतीति ।

साध्यत्वादहेतुः ॥ २७ ॥

साध्यत्वादहेतुः । अशरीरं मनः पुरुषार्थासमर्थमिति साध्यमेतत् ।

स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः ॥ २८ ॥

स्मरतः शरीरधारणोपपत्तेर्न प्रतिषेध(३) स्मरणशरीरधारणे युगपद्भवत इति दृष्टम् । दृष्टं च सर्वेण प्रतिपत्तव्यम् । चिरनिश्चरिते च मनसि स्मरतः शरीरधारणं न स्यात् ।

न तदाशुगतित्वान्मनसः ॥ २९ ॥

न तदाशुगतित्वान्मनसः—उभयं सिध्यति स्मरणं धारणं च ।

न स्मरणकालानियमात् ॥ ३० ॥

न स्मरणकालानियमात् । अनियतःस्मृतिकालोऽतोऽयुक्तमेतत् । शरीरसंयोगानपेक्षं चात्मनः संयोगं स्मृतिकारणं ब्रुवतः शरीरस्योपभोगायतनत्वं निवर्तते । ततस्तन्निवृत्तौ शरीरोत्पत्तिवैयर्थ्यमिति ॥

---

(१) रूपादिमदर्थं ग्राहयति—पा० ४ पु० ।

(२) नाश्रयाश्रयिभावो—पा० ४ पु० ।

(३) रप्रतिषेधः—पा० ४ पु० ।

**आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः॥३१॥**

अपरे तु आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेष इति परिहारं ब्रुवते ॥

**व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम् ॥ ३२ ॥**

एतच्च व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानं भवतीत्यपरिहारः । कर्मादृष्टमुपभोगार्थं नियामकं भवतीति न युक्तं समानत्वात् । तस्मात् पूर्व एव परिहारो नान्तःशरीरवृत्तित्वान्मनस इति ।

यदि तर्हि ज्ञानसमवेतात्मप्रदेशसन्निकर्षायौगपद्यादिति परिहारो नेष्यते प्राप्तः स्मृतीनां युगपदुत्पादः कारणस्य यौगपद्यादिति ?। नापेक्षाकारणस्यायुगपद्भावात् ।

**प्रणिधानलिङ्गादिज्ञानानामयुगपद्भावादयुगपदस्मरणम् ॥ ३३ ॥**

**प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्त्ते यौगपद्यप्रसङ्गः ॥ ३४ ॥(१)**

यतः प्रणिधानाद्यात्ममनःसंयोगस्य सहकारि कारणं तच्च युगपद्भवतीत्ययुगपदुत्पत्तिः स्मृतीनाम् । यदि प्रणिधानाद्यपेक्षात्ममनःसंयोगो न युगपत् स्मृतिकारणं याः स्मृतयः प्रणिधानादिसन्निधानमन्तरेण(२) भवन्ति तासां यौगपद्यं स्यात् ? नानभ्युपगमात्—न हि प्रणिधानाद्यनपेक्षं स्मार्त्तमस्ति ?, सतः स्मृतिहेतोरसंवेदनात् प्रातिभेन समानाभिमानोऽयमिति । प्रातिभं तर्हि

(१) न्यायसूचीनिबन्धे सूत्रमिदं नास्ति ।
(२) सन्निधानाद्यन्तरेण—पा० ४ पु० ।

युगपद्भवितुमर्हति—न हि तस्यासान्निहितं कारणमिति ? नोक्तोत्तरत्वात्—उक्तोत्तरमेतत्—न हि करणस्यानेकक्रियानिर्वृत्ति(१)सामर्थ्यमस्ति, प्रातिभं चानेकं ज्ञानं भवदेकस्मिन्नर्थे भवेदथानेकस्मिन् ? । न तावदेकस्मिन् वैयर्थ्यात् । नानेकस्मिन्, सामर्थ्याभावात् । न चायं नियमः प्रत्ययानां यौगपद्यं न भवतीति, ज्ञातुर्विकरणधर्मणो देहनानात्वे प्रत्ययानां यौगपद्यादिति । यदि च ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्न स्मृतीनां युगपदुत्पत्तिः ये संस्कारा एकदेशास्तेष्ववस्थितशरीरस्यानेकज्ञानसमवायादेकदेशे युगपदनेकार्थस्मरणं स्यात्, न चैतदस्तीति अतश्चापरीहार इति । अत्रास्थितशरीरस्य संस्काराः समानदेशा इत्ययुक्तम्—आत्मप्रदेशानामद्रव्यान्तरत्वात्, एवं सति सर्वसंस्काराणां समानदेशत्वे प्रत्ययौगपद्यप्रसङ्गोऽपरिहार्यः । संस्कारप्रत्यासत्त्या स्मृतियौगपद्यं न भवतीति । का प्रत्यासत्तिः ?—न हि संस्काराणां सन्निकृष्टविप्रकृष्टभावोऽस्ति समानदेशत्वात् ? । न ब्रूमः—सन्निकृष्टता प्रत्यासत्तिरपि तु संस्कारस्य सहकारिकारणसमवधानं प्रत्यासत्तिः शब्दवत्—यथा शब्दाः सन्तानवर्तिनः सर्व एवाकाशे(२) समवयन्ति समानदेशत्वे ऽपि यस्योपलब्धेः कारणानि सन्ति स उपलभ्यते नेतरे, तथा संस्कारेष्वपीति ॥

पुरुषस्य ज्ञानमिच्छादयोऽन्तःकरणस्येति कस्यचिद्दर्शनं तत्प्रतिषिध्यते—

ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः ॥ ३६ ॥

ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः । ज्ञातुरेवेच्छादय इति सूत्रार्थः । यद्यन्तःकरणस्येच्छादयः स्युर्न प्रत्यक्षाः स्युः—न

(१) निमित्त-पा० १ पु० । (२) सर्वत्रैवाकाशे-पा० १ पु० ।

हीच्छादयोऽन्यत्र वर्तमाना अन्यस्य प्रत्यक्षा भवितुमर्हन्तीति । नित्यं चेच्छादयोऽप्रत्यक्षाः स्युः मनोगुणानामतीन्द्रियत्वात् । आरम्भनिवृत्त्योश्च प्रत्यगात्मनि दृष्टत्वात् परत्रानुमानम् ॥

तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः ॥३६॥

तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः । प्रवृत्तिनिवृत्तिभ्यां सामानाधिकरण्यात् शरीरादिषु (च)प्रसङ्ग इति सूत्रार्थः ॥

परश्वादिष्वारम्भनिवृत्तिदर्शनात् ॥ ३७ ॥

परश्वादिष्वारम्भनिवृत्तिदर्शनादनेकान्तो वाक्यार्थः ॥

नियमानियमौ तु तद्विशेषकौ ॥ ३८ ॥

नियमानियमौ तु तद्विशेषकौ । प्रयुज्यमानभूतविषयत्वं प्रवृत्तिनिवृत्त्योर्नियमः—यानि भूतानि प्रयुज्यन्ते तेषु प्रवृत्तिनिवृत्ती भवतो न सर्वेष्विति । यदि पुनर्ज्ञत्वाद्भूतानां प्रवृत्तिनिवृत्ती स्यातां भूतमात्रे स्याताम्—यथा गुरुत्वादिभ्यो, यानि गुरुत्वादिमन्ति भूतानि तानि स्वगुणात् पतन्तीति, नियमश्च दृष्टः तस्माच्च भूतानि चेतनानीति । एकशरीरे च ज्ञातृबहुत्वं निरनुमानमिति—यस्य भूतानि चेतनानि तस्यैकशरीरे बहूनि भूतानीति बहवश्चेतनाः स्युः । भवन्तु बहवश्चेतनाः किन्नो बाध्यत इति चेत् ? न, बहुत्वे प्रत्ययव्यवस्थानानुमानं(१) भवेत्, अव्यवस्थानं तु पश्यामः प्रत्ययानां प्रतिसन्धानात्—सर्वः प्रत्ययः प्रतिसन्धीयमान एकस्मिन् कार्यकारणसङ्घाते दृष्ट इति । अन्यथाभिधानाच्च—हिताहितप्राप्तिपरीहारार्थः परिस्पन्दः प्रवृत्तिनिवृत्ती, भवता तु क्रियामात्रं क्रियोपरमं चाश्रित्य तल्लिङ्गत्वा-

(१) न भवेत् इति तात्पर्यटीकासम्मतः पाठ ।

दिक्छाद्रेपयोः पार्थिवाद्येष्वप्रतिषेध इत्युक्तम् यथाविधे च प्रवृत्तिनिवृत्ती प्रयुज्यमानभूताधारत्वेन तथाभूते(१) भूतमात्रे भवत इति भूतेन्द्रियमनसां समानः प्रतिषेधः ।

मनस्तूदाहरणमात्रम्—

**यथोक्तहेतुत्वात् पारतन्त्र्यादकृताभ्यागमाच्च न मनसः ॥ ३९ ॥**

यथोक्तहेतुत्वात् पारतन्त्र्यादकृताभ्यागमाच्च न मनसः । यथोक्तहेतुत्वादिति—दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्येवमादीनां हेतूनामप्रतिषेधात् । पारतन्त्र्यादिति–परतन्त्राणि शरीरेन्द्रियमनांसि धारणप्रेरणव्यूहनक्रियासु प्रयत्नवशात् प्रवर्तन्ते चैतन्ये पुनः स्वतन्त्राणि स्युः । अकृताभ्यागमाच्च–चेतनत्वाच्छरीरादीनां तैः कृतं कर्म पुरुषेण भुज्यत इति अकृतकृतागमनाशदोषप्रसङ्गः अचेतनत्वे तु तत्साधनस्य स्वकृतकर्मफलोपभोग इति ॥

अथायं सिद्धोपसङ्ग्रहः—

**परिशेषाद्यथोक्तहेतूपपत्तेश्च ॥ ४० ॥**

**स्मरणं त्वात्मनो ज्ञस्वाभाव्यात् ॥ ४१ ॥**

परिशेषाद्यथोक्तहेतूपपत्तेश्च आत्मनो गुणो ज्ञानमिति प्रकृतम् । यथोक्तहेतूपपत्तेरिति आत्मप्रतिपादकानां हेतूनामप्रतिषेधात् । परिशेषादिति शरीरेन्द्रियमनसां प्रतिषेधादन्यस्य च शिष्यमाणस्यासम्भवात् आत्मनश्च शिष्यमाणत्वात् तस्य गुणो ज्ञानमिति । उपपत्तेरिति वा स्वतन्त्रो हेतुः आत्मनित्यत्व इति । कस्योपपत्तेः ? संसारापवर्गयोरुपपत्तेरित्येवमादि भाष्ये ॥

स्मृतिहेतूनामयौगपद्यादयुगपत् स्मरणमित्युक्तम् । अथ

---

(१) तथाविधे–पा० ४ पु० ।

केभ्यः स्मृतिरुत्पद्यत इति? स्मृतिकारणानामयौगपद्यप्रतिपादनार्थं प्रणिधानादि सूत्रम्—

**प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः ॥ ४२ ॥**

एवमुपपन्नमनित्या बुद्धिरिति ॥

इति बुद्धेरात्मगुणत्वप्रकरणम्।

अनित्यायां च बुद्धावुत्पन्नापवर्गित्वात् कालान्तरावस्थितत्वाच्च(१) संशयः उत्पन्नापवर्गिणी बुद्धिः शब्दवत् आहो कालान्तरस्थायिनी(२) कुम्भवदिति। उत्पन्नापवर्गिणीति युक्तम्। कः पुनरयमर्थः उत्पन्नापवर्गिणीति? अन्येभ्योऽपि विनाशिभ्य आशुतरं विनश्यतीति, न स्वयमर्थ उत्पत्त्यनन्तरं ध्वंसत(३) इति। कः पुनरत्र न्यायः? आशुतरविनाशिनी बुद्धिः जातिमत्त्वे सत्यस्मदादिप्रत्यक्षतायां व्यापकद्रव्यसमवायात् शब्दवत् प्रतिक्षणमपूर्वोत्पत्तौ(४) करणत्वे सति प्रत्यर्थप्रकाशकत्वात् यस्य प्रतिक्षणमपूर्वोत्पन्नपदार्थप्रकाशकत्वं करणत्वे सति तस्याशुतरविनाशित्वं दृष्टं यथा प्रदीपस्य, प्रतिक्षणमपूर्वोत्पन्नान्(५) प्रध्वंसिनः पदार्थान् बुद्धिः प्रत्यर्थनियमेन प्रकाशयति तस्मादियमप्याशुतरविनाशिनीति। अथवा आशुतरविनाशिनी बुद्धिः

---

(१) वस्थायित्वाच्च—पा० ४ पु०।
(२) कालान्तरावस्थायिनी—पा० ४ पु०।
(३) ध्वंस इति—पा० १ पु०।
(४) अयुगपदुत्पत्तौ—इत्याधिक १ पु०।
(५) प्रतिक्षणमुत्पन्नान्—पा० ४ पु०।

गुणत्वे सत्यवाह्यकरणप्रत्यक्षत्वात् सुखवदिति ॥

अस्यार्थस्य ज्ञापनार्थं कर्मानवस्थायिग्रहणादिति सूत्रम्—

**कर्मानवस्थायिग्रहणात् ॥ ४३ ॥**

यदि तर्ह्यनवस्थायिपदार्थेषु अनवस्थिता बुद्धिः अथ यदा बुद्धिस्थिरं(१) कुम्भादिकमुपलभ्यते तदा किं कुम्भवत् कालान्तरावस्थायिनी उताशुविध्वंसिनीति ? । अवस्थितग्रहणे ऽपि प्रत्यक्षनिवृत्तेः प्रध्वंसिनी—यदाप्यवस्थितं कुम्भादिकमुपलभते तदापि मन्तानेनैव बुद्धयो निवर्तन्ते । कस्मात् व्यवहिते ? प्रत्यक्षनिवृत्तेः—यदि कुम्भवत् कालान्तरावस्थायिनी बुद्धिरभविष्यत् व्यवहिते ऽपि प्रत्यक्षमवास्थास्यत् न त्ववतिष्ठते तस्मान्न कालान्तरावस्थायिनीति । स्मृतेरवतिष्ठत इति चेत् ?–यदि बुद्धिध्वंसिनी स्यात् स्मृतिर्न स्यात् न हि बुद्धिभेदे स्मृतिं पश्याम इति यथा पुरुषान्तरबुद्धिषु, अस्ति च स्मृतिः तस्मादवतिष्ठते बुद्धिरिति ? नातं एवानवस्थानात्—न हि बुद्धाववस्थितायां स्मृतिः सम्भवति—स्मृतिर्नाम प्रत्यक्षबुद्धिनिरोधे तत्पूर्वको विषयप्रतिसन्धिः यथेदमद्राक्षमिति, एतच्च न प्रत्यक्षबुद्धाववस्थितायां युक्तमिति । अन्यतश्च तद्भावात् स्मृतिरलिङ्गमिति–येयं स्मृतिर्बुद्धावस्थानलिङ्गत्वेनाभ्युपगम्यते नेयं लिङ्गमन्यतस्तद्भावात् अवतिष्ठते हि बुद्धिजः संस्कार इति ततः प्रणिधानादिनिमित्तापेक्षात् स्मृतिरिति ॥

हेत्वभावं इति चेत् अथ मन्यसे संस्कारात् स्मृतिर्न बुद्ध्यवस्थानादित्यत्र को हेतुः ? स्मृतिरेव—यद्यवतिष्ठते बुद्धिः स्मृतिर्न स्यादिति—

---

(१) यदावस्थितं—पा० ४ पु० ।

अव्यक्तग्रहणमनवस्थायित्वाद् विद्युत्सम्पाते रूपाव्यक्तग्रहणवत् ॥ ४४ ॥

हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा ॥ ४५ ॥

अव्यक्तग्रहणमनवस्थायित्वात् विद्युत्सम्पाते रूपाव्यक्तग्रहणवत् । यद्यनवस्थायिनी बुद्धिरव्यक्तं व्यक्तस्य ग्रहणं प्राप्नोति यथा विद्युत्प्रकाशितानामव्यक्तग्रहणमिति ? न विरोधात् अव्यक्तग्रहणादवस्थायिनी बुद्धिरिति ब्रुवाणोऽनवस्थायिनी बुद्धिरिति यत्प्रतिषेध्यं(१) तदभ्यनुजानासि तस्य चाभ्यनुज्ञानाद्यदुक्तं कालान्तरावस्थायिनी बुद्धिरिति तद्बाधितं भवति । अव्यक्तग्रहणस्य चान्यनिमित्तत्वात् नाव्यक्तग्रहणाद् बुद्ध्यनवस्थानं सिद्ध्यति । यत्तद्व्यक्तमव्यक्तं च ग्रहणं न बुद्धेरवस्थानानवस्थानाभ्यामपि तु ग्रहणहेतोर्भेदादिति । तदसम्भवाच्च नाव्यक्तं नाम ग्रहणमस्ति । कस्मात् ? अर्थग्रहणमात्रत्वाद् बुद्धेः—अर्थग्रहणमात्रं बुद्धिः—तत्रार्थग्रहणं सामान्यतो विशेषतश्च यच्च सामान्यविषयं तत्सामान्यं प्रति व्यक्तम् । एवं विशेषविषयम् एवं तद्बुद्धिरपमिति । तदिदमव्यक्तग्रहणं देशितम् कथमेकस्मिन्(२) विषये बुद्ध्यनवस्थानकारितं स्यात् । लोकविरोध इति चेत् ?—यदि तर्हि व्यक्ताव्यक्तग्रहणे न स्यातां योऽयं व्यवहारो लोकेषु व्यक्तं(३) पश्यामीति स कथम् ? नान्यथा तदुपपत्तेः—नायं सामान्यविशेषवद्वस्तु व्यक्ताव्यक्तग्रहणभेदोऽपि तु धर्मिणः सामान्यतोऽधिगतस्य विशेषत उपलिप्साद्वारकमव्यक्तग्रहणमिति । अनेकान्ताच्च(४)—नायमेकान्तो-

(१) प्रतिषेध्यम्—पा० ४ पु० । (२) कतमस्मिन्—पा० ४ पु० ।
(३) लोकेऽव्यक्तं—पा० ४ पु० ।
(४) अनैकान्तिकत्वाच्चेति तात्पर्यटीकासम्मतः पाठः ।

ऽस्ति यद्द्रव्यग्रहणहेतोर्ग्राह्यस्य चानवस्थानं तत्राव्यक्तग्रहणम्॥

**न प्रदीपार्चिषः सन्तत्यभिव्यक्तग्रहणवत् तद्ग्रहणम् ॥ ४६ ॥**

न प्रदीपार्चिषः सन्तत्यभिव्यक्तग्रहणवत् तद्ग्रहणम् । अनवस्थायित्वे ऽपि यथा प्रदीपार्चिषां सन्तत्या वर्तमानानां ग्राह्यानवस्थानं ग्रहणानवस्थानं च भवति, भवति च व्यक्तं ग्रहणमर्चीषीति यथार्चिःषु, तथान्यत्रापीति, व्यक्तास्थिरं क्षणिका बुद्धिरिति।

( इति बुद्धेरुत्पन्नापवर्गित्वप्रकरणम् । )

शरीरगुणश्चेतना सति शरीरे भावादसति चाभावादिति–यद्य यस्मिन् सति भवति असति च न भवति तस्य तदिति विज्ञायते यथा रूपादय इति । ? न सति भावात् शरीरगुणत्वं चेतनायाः सिद्ध्यति सति भावस्यान्यगुणत्वे ऽपि दर्शनात्, न तावत् संयोगविभागसंस्काराः कर्मगुणाः अथ च सति कर्मणि भावोऽसति चाभाव इति । संयोगविभागशब्देषु च सत्सु शब्दो भवत्यथ च न तद्गुण इति । तद्गुणत्वं च तत्रोपलब्ध्या सिद्ध्यति यद्यत्र वर्तमानमुपलभ्यते रूपादिकं तत्तस्य गुण इति । अथ सति भावादित्यनेन शरीरे चेतनोपलब्धिं ब्रूयात् ? तस्याप्यसिद्धत्वा दोषः–न हि शरीरे चेतनोपलभ्यते, चेतनामात्रं तूपलभ्यते, तच्च सन्दिग्धं किं शरीरे उतान्यस्मिन् इति । उपेत्य शरीरे चेतनोपलब्धिं किं शरीरगुणश्चेतना उत द्रव्यान्तरगुण इति—द्रव्ये स्वगुणपरगुणोपलब्धेः संशय इत्युक्तार्थं सूत्रम्—

द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ॥ ४७ ॥

न शरीरगुणश्चेतना यावद्द्रव्यभावित्वा(१)द्रूपादीनाम् ॥

दृष्टान्तसूत्रम्—

यावद्द्रव्यभावित्वाद्रूपादीनाम् ॥ ४८ ॥

वैधर्म्येण ये शरीरगुणा भवन्ति ते यावच्छरीरं वर्तन्ते यथा रूपादयः न तु यावच्छरीरं चेतना वर्तते तस्मान्न तद्गुण इति । साधर्म्येण वा न तद्गुण इति यथाप्सूष्णतेति(२) । संस्कारवदिति चेत् ?–अथ मन्यसे यथा संस्कारः शारीरगुणो न च यावच्छरीरं वर्तते तथा चेतनापीति ? न कारणानुच्छेदात्–संस्कारस्य न शरीरमात्रं कारणं तस्य नोदनादिकारणसंन्निधाने तदभावे भावाभावौ युक्तौ कारणसन्निधानवतोऽयुक्तमेतदिति । चेतनानिमित्तस्याप्यसंन्निधानमिति चेत् ?–अथ मन्यसे यथैव संस्कारस्य कारणमसंन्निहितमेवं चेतनाकारणमपीति ? तदयुक्तम् विकल्पानुपपत्तेः—यच्छरीरे चेतनोत्पत्तिकारणं तत्किं शरीरस्थमुत द्रव्यान्तरस्थम् ? शरीरस्थमपि किं यावच्छरीरभावि उत नैमित्तिकमिति ? । यदि यावच्छरीरभावि ? न कदाचिच्चेतनाहीनं शरीरमुपलभ्येत निमित्तस्य संन्निहितत्वात् । अथ नैमित्तिकं ? यच्छरीरे चेतनोत्पत्तेर्निमित्तस्य कारणं तत्रापि(३) चेतनावस्थसङ्गः । अथ द्रव्यान्तरस्थं द्रव्यान्तरस्थितिनिमित्तं शरीरे चेतनां करोति न द्रव्यान्तरेष्वित्यत्रापि नियमहेतुर्वक्तव्यः । द्रव्यान्तरस्थं च नित्यमनित्यं वा, अनित्यमपि कालान्तराव-

(१) यावच्छरीरभावित्वा—पा० ४ पु० ।

(२) यथाप्स्वग्न्युष्णतेति—पा० ४ पु० ।

(३) तत्रापि—पा० १ पु० ।

स्यायि क्षणमध्वंसि वेति(१) चेतनावत् प्रसङ्गः ॥

यच्च मन्यते श्यामादिगुणं च द्रव्यं भवति न च यावद्द्रव्यभाविनी श्यामतेति ? तच्च न,

न पाकजगुणान्तरोत्पत्तेः ॥ ४९ ॥

पाकजगुणान्तरोत्पत्तेः । नात्यन्तं श्यामतोपरमे(२) रूपान्तरोत्पत्तिः चेतनोपरमस्त्वत्यन्तं इति ॥

इतश्च—

प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ॥ ५० ॥

प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः । यावत्सु द्रव्येषु पूर्वगुणप्रतिषेधस्तावत्सु प्रतिद्वन्द्विनो गुणान्तरस्य दर्शनम्—यथा श्यामानिवृत्तौ रक्तादीनामिति । न पुनः शरीरे चेतनाविपरीतं गुणान्तरमुपलभ्यते चेतनाभावोपरमस्त्वत्यन्तं इति । अथ मन्यसे शरीरेऽप्यचेतनत्वं नाम(३) गुणान्तरमिति ? तन्न, स्वरूपतोऽनिर्देशात्—यत्तदचेतनत्वं नाम, किं तद् चेतनाविपरीतं धर्मभूतं वस्तु उत चेतनाविप्रतिषेधमात्रमिति ? यदि विपरीतं चेतनावत् संवेद्यं स्यात् । अथ चेतनाविप्रतिषेधमात्रं ? तन्न गुण इति ॥

इतश्च न शरीरगुणश्चेतना—

शरीरव्यापित्वात् ॥ ५१ ॥

शरीरव्यापित्वात्—शरीरवत् शरीरावयवाश्चेतनोत्पत्त्या व्याप्यन्ते । को व्याप्त्यर्थः ? न कश्चित् शरीरावयवश्चे-

---

( १ ) प्रतिक्षणं ध्वंसि वेति—पा० ४ पु० ।

( २ ) श्यामरूपोपरमे—पा० ४ पु० ।

( ३ ) अचेतना नाम-पा० ४ पु० ।

द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ॥ ४७ ॥

न शरीरगुणश्चेतना यावद्द्रव्यभावित्वा(१)द्रूपादीनाम् ॥

दृष्टान्तसूत्रम्—

यावद्द्रव्यभावित्वाद्रूपादीनाम् ॥ ४८ ॥

वैधर्म्येण ये शरीरगुणा भवन्ति ते यावच्छरीरं वर्तन्ते यथा रूपादयः न तु यावच्छरीरं चेतना वर्तते तस्मान्न तद्गुण इति । साधर्म्येण वा न तद्गुण इति यथाप्युष्णतेति(२) । संस्कारवदिति चेत् ?—अथ मन्यसे यथा संस्कारः शरीरगुणो न च यावच्छरीरं वर्तते तथा चेतनापीति ? न कारणानुच्छेदात्—संस्कारस्य न शरीरमात्रं कारणं तस्य नोदनादिकारणसंनिधाने तद्भावे भावाभावौ युक्तौ कारणसन्निधानवतोऽयुक्तमेतदिति । चेतनानिमित्तस्याप्यसन्निधानमिति चेत् ?—अथ मन्यसे यथैव संस्कारस्य कारणमसंनिहितमेवं चेतनाकारणमपीति ? तदयुक्तम् विकल्पानुपपत्तेः—यच्छरीरे चेतनोत्पत्तिकारणं तत्किं शरीरस्थमुत द्रव्यान्तरस्थम् ? शरीरस्थमपि किं यावच्छरीरभावि उत नैमित्तिकमिति ? । यदि यावच्छरीरभावि ? न कदाचिच्चेतनाहीनं शरीरमुपलभ्येत निमित्तस्य संनिहितत्वात् । अथ नैमित्तिकं ? यच्छरीरे चेतनोत्पत्तेर्निमित्तस्य कारणं तत्रापि(३) चेतनावस्थप्रसङ्गः । अथ द्रव्यान्तरस्थं द्रव्यान्तरवृत्तिनिमित्तं शरीरे चेतनां करोति न द्रव्यान्तरेष्वित्यत्रापि नियमहेतुर्वक्तव्यः । द्रव्यान्तरस्थं च नित्यमनित्यं वा, अनित्यमपि कालान्तराव-

(१) यावच्छरीरभावित्वा—पा० ४ पु० ।
(२) यथाप्युष्णगुणतेति—पा० ४ पु० ।
(३) तदापि—पा० १ पु० ।

स्थायि क्षणप्रध्वंसि वेति(१) चेतनावत् प्रसङ्गः ॥

यच्च मन्यसे श्यामादिगुणं च द्रव्यं भवति न च यावद्द्रव्यभाविनी श्यामतेति ? तच्च न,

न पाकजगुणान्तरोत्पत्तेः ॥ ४९ ॥

पाकजगुणान्तरोत्पत्तेः । नात्यन्तं श्यामतोपरमे(२) रूपान्तरोत्पत्तिः चेतनोपरमस्त्वत्यन्तं इति ॥

इतश्च—

प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ॥ ५० ॥

प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः । यावत्सु द्रव्येषु पूर्वगुणप्रतिषेधस्तावत्सु प्रतिद्वन्द्विनो गुणान्तरस्य दर्शनम्—यथा श्यामानिवृत्तौ रक्तादीनामिति । न पुनः शरीरे चेतनाविपरीतं गुणान्तरमुपलभ्यते चेतनामात्रोपरमस्त्वत्यन्तं इति । अथ मन्यसे शरीरेऽप्यचेतनत्वं नाम(३) गुणान्तरमिति ? तन्न, स्वरूपतोऽनिर्देशात्—यत्तदचेतनत्वं नाम, किं तत् चेतनाविपरीतं धर्मभूतं वस्तु उत चेतनाविप्रतिषेधमात्रमिति ? यदि विपरीतं चेतनावत् संवेद्यं स्यात् । अथ चेतनाविप्रतिषेधमात्रं ? तन्न गुण इति ॥

इतश्च न शरीरगुणश्चेतना—

शरीरव्यापित्वात् ॥ ५१ ॥

शरीरव्यापित्वात्—शरीरवत् शरीरावयवाश्चेतनोत्पत्त्या व्याप्यन्ते । को व्याप्त्यर्थः ? न कश्चित् शरीरावयवश्चे-

( १ ) प्रतिक्षणं ध्वंसि वेति—पा० ४ पु० ।
( २ ) श्यामरूपोपरमे—पा० ४ पु० ।
( ३ ) अचेतना नाम-पा० ४ पु० ।

तनादीनां भवतीति सर्वस्य चेतनानिमित्तत्वात् शरीरवच्छरीरावयवाश्चेतनाः प्राप्नुवन्ति । भवन्तु शरीरावयवाश्चेतनाः ? न प्रत्ययव्यवस्थाप्रसङ्गात्—शरीरवच्छरीरावयवाश्चेतना इति प्रत्ययव्यवस्थानं स्यात् ।

न शरीरावयवाश्चेतनाः—

न(१) केशनखादिष्वनुपलब्धेः ॥ ५२ ॥

केशनखादिष्वनुपलब्धेः इति दृष्टान्तसूत्रम् ॥

त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः ॥५३॥

त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः । संयोगिद्रव्यं केशनखादयो न तु शरीरावयवा इति, तस्मान्नायं प्रसङ्ग इति ।

इतश्च न शरीरगुणश्चेतना—

शरीरगुणवैधर्म्यात् ॥ ५४ ॥

शरीरगुणवैधर्म्यात् ॥ द्वये शरीरगुणा भवन्ति बाह्यकरणप्रत्यक्षा रूपादयोऽतीन्द्रियं च गुरुत्वं, विधान्तरं तु चेतना न बाह्यकरणप्रत्यक्षा सुखंवेद्यत्वात्, नातीन्द्रिया मनोविषयत्वात्, तस्मान्न शरीरगुण इति ।

न रूपादीनामितरेतरवैधर्म्यात् ॥ ५५ ॥

न रूपादीनामितरेतरवैधर्म्यात् ॥ यथेतरेतरविधर्माणो रूपादयो न शरीरगुणत्वमतिवर्तन्ते तथा रूपादिवैधर्म्ये सति चेतना शरीरगुणत्वं न हास्यति ॥

ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः ॥ ५६ ॥

ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः । द्वये शरीरगुणा भवन्तीत्युक्तः सूत्रार्थः । रूपादीनामितरेतरवैधर्म्यमननुसंहितं चा-

(१) न-इति नास्ति ४ पु० ।

व्यावृत्तं चेति वैधर्म्यमात्रमन्वयव्यतिरेकि तु चेतनायाः शरीरगुणत्वसाधनं न भवतीति, तस्मादसमेतत् । ये हेतवोऽनेन प्रकरणेन(१) लभ्यन्ते तेषां प्रयोगः—न शरीरगुणश्चेतना निमित्तान्तराभावे विरोधिगुणादर्शने च सत्ययावद्द्रव्यभावित्वात् अप्सु औष्ण्यवदिति । शरीरव्यापित्वादिति तु न साधनं, किन्तु शरीरे चेतनां ब्रुवतो दोषोऽनेकचेतनत्वप्रसङ्गः । न शरीरगुणश्चेतना बाह्यकरणाप्रत्यक्षत्वात् सुखादिवदिति । अथेदं प्रकरणं निर्णीतार्थं कस्मात्पुनरारभ्यमिति ? बहुधा परीक्ष्यमाणं तत्त्वं(२) निश्चिततरं भवतीत्यत आरभ्यत इति । परीक्षिता बुद्धिरिति ॥

( इति बुद्धेः शरीरगुणव्यतिरेकप्रकरणम् । )

मनोऽवसरप्राप्तं परीक्ष्यते तत् प्रतिशरीरमेकमनेकमिति वा विचारे—

ज्ञानायौगपद्यादेकं मनः ॥ ५७ ॥

ज्ञानायौगपद्यादेकं मनः ॥ अयुगपज्ज्ञानानि भवन्तीति प्रत्यक्षम् एतच्च मनस एकत्वं साधयति । कथमिति ? यदि बहूनि मनांसि स्युः प्रतीन्द्रियं मनसः सम्बन्ध इति युगपदनेकार्थसन्निधाने युगपदनेकज्ञानानि भवेयुः प्रत्येकेन्द्रियग्राह्येष्वर्थेषु विज्ञानानामयुगपद्भावः तत्र मनस एकत्वे लिङ्गं अन्यतस्तद्भावात् अन्यथा हि करणत्वात्तद्भवतीत्युक्तम् ॥

न युगपदनेकक्रियोपलब्धेः ॥ ५८ ॥

न युगपदनेकक्रियोपलब्धेरिति । शेषं भाष्ये ।

अस्योत्तरद्वारकं सूत्रम्—

---

( १ ) प्रकरणे–पा० १ पु० । ( २ ) परीक्षितं तु–पा० ४ पु० ।

अलातचक्रदर्शनवत् तदुपलब्धिराशुसञ्चारात् ॥५९॥

अलातचक्रदर्शनवत् तदुपलब्धिराशुसञ्चारात् । यथाऽलातस्य भ्रमतो विद्यमानः क्रमो नोपलभ्यते तथा बुद्धीनामाशुभावाद्विद्यमानः क्रमो नोपलभ्यते न चास्त्युभयपक्षसम्प्रतिपन्ना(१) युगपदुत्पत्तिर्यया बहुत्वं मनसः प्रतिपद्येमहीति ॥

यथोक्तहेतुत्वाच्चाणु(२) ॥ ६० ॥

यथोक्तहेतुत्वाच्चाणु(३) य एवैकत्वे हेतुर्मनस उक्तोऽनेनैवाणु मनोऽवसातव्यमिति ॥

( इति मनःपरीक्षाप्रकरणम् । )

मनसः खलु भोः सेन्द्रियशरीरे वृत्तिः । शरीरे विचार्यमाणे(४) मन एव विचारितं भवत्यतः शरीरं पुनर्विचार्यते—किमयं शरीरसर्गः कर्मनिरपेक्षैर्भूतैरारभ्यते आहोस्वित् सापेक्षैरिति ? विमतिपत्तेः संशयः—श्रूयते खल्वत्र विप्रतिपत्तिः ।

तत्रेदं तत्त्वं—

पूर्वकृतफलानुबन्धात् तदुत्पत्तिः ॥ ६१ ॥

पूर्वकृतफलानुबन्धात् तदुत्पत्तिः ॥ पूर्वशरीरे या प्रवृत्तिर्वाग्बुद्धिशरीरारम्भलक्षणा तत्पूर्वकृतं, तस्य फलं—तज्जनितौ धर्माधर्मौ, तयोरनुबन्ध–आत्मसमवेतयोरवस्थानं, विपाककालस्यानियमात्—अनियतो विपाककाल इहामुत्र जात्यन्तरे चेति । तेनावस्थितेन प्रयुक्तेभ्यो भूतेभ्यः तस्य शरीरस्योत्पत्तिर्न स्वतन्त्रेभ्यः । कस्मात् पुनः कर्म धर्माधर्मसञ्ज-

(१) न चास्त्योभयपक्षसम्प्रतिपन्ना–पा० ४ पु० ।
(२) यथोक्तनिमित्तत्वाच्चाणु—पा० ४ पु० ।
(३) यथोक्तनिमित्तत्वाच्चाणु—पा० ४ पु० ।
(४) विचारिते—पा० ४ पु० ।

कमुत्पत्तिसमकालं फलं न ददाति ? । क एवमाह न ददातीति विपाककालस्यानियमात्-यदा ऽशेषकारणसन्निधानं भवति, सन्निधाने ऽपि यदा कारणान्यप्रतिबद्धानि भवन्ति तदा ददात्येव(१) यदा पुनर्न ददाति तदा विपच्यमानकर्मातिशयप्रतिबन्धात्-यो विपच्यमानः कर्मातिशयो भवति यस्य धर्माधर्मसमाख्यासो(तो)ऽनुपभुक्तफलः तेन प्रतिबन्धात् विद्यमानमपि कर्म फलं न ददाति । यानि वा प्राण्यन्तराणि तस्य कर्मणः समानोपभोगानि तेषां विपच्यमानैः कर्माशयैः प्रतिबन्धात् न सर्वदा फलम्। यानि वा प्राण्यन्तराणि कर्मभागीनि तस्य कर्मणस्तत्कर्मभिः प्रतिबन्धात् तस्य वा कर्मणः सहकारिधर्माधर्मलक्षणं निमित्तं नास्तीत्यतः फलस्यानारम्भः, तस्य वा सहकारिणः प्रतिबन्धात्, सत्त्वान्तरकर्मणां वा सहकारिणां प्रतिबन्धात् न सर्वदा फलं धर्माधर्मौ प्रयच्छत इति । दुर्विज्ञेया च कर्मगतिः सा न शक्या मनुष्यधर्मणाऽवधारयितुम् । आकृतिमात्रं तूक्तम् ।

कः पुनरत्र न्यायः कर्मतन्त्राणि भूतानि शरीरमारभन्ते न निरपेक्षाणीति ? अयं न्यायोऽभिधीयते-पुरुषविशेषगुणप्रेरितभूतपूर्वकं शरीरं कार्यत्वे सति पुरुषार्थक्रियासामर्थ्यात् यत् पुरुषार्थसमर्थं तत् पुरुषविशेषगुणप्रेरितभूतपूर्वकं दृष्टं यथा रथादि, पुरुषविशेषगुणेन प्रयत्नेन प्रेरितैर्भूतैरारभ्यमाणं पुरुषार्थक्रियासमर्थं दृष्टं तथा च शरीरम् तस्मादिदमपि सापेक्षैर्भूतैरारभ्यते सुखदुःखनिमित्तत्वात् घटादिवदिति । इतश्च कार्यत्वात् रथादिवत् बाह्यकरणग्राह्यत्वे सति(२)रूपादिमत्वात् घटादिवदेव ॥ अत्र नास्तिक एवमाह—

(१) ददात्यपि—पा० ४ पु०।
(२) बाह्यकरणप्रत्यक्षत्वे सति—पा० ४ पु०।

**भूतेभ्योमूर्त्युपादानवत् तदुपादानम् ॥ ६२ ॥**

भूतेभ्योमूर्त्युपादानवत् तदुपादानम् ॥ यथा कर्मनिरपेक्षेभ्यो भूतेभ्यो निर्वृत्ता मूर्तयः सिकताशर्करागैरिकाञ्जनप्रभृतयः पुरुषार्थक्रियाकारित्वादुपादीयन्ते तथा शरीरसर्गोपीति पुरुषार्थक्रियासामर्थ्यादस्यैतस्य हेतोरनैकान्तिकद्वारकं सूत्रम् । साधनपक्षे दृष्टान्तपात्वस्त्वादसिद्धम् ।

अथ पक्षः कर्मनिरपेक्षाणि भूतानि शरीरमारभन्ते पुरुषार्थक्रियासामर्थ्यात् सिकतादिवदिति ? एतच्च न—

**न साध्यसमत्वात् ॥ ६३ ॥**

साध्यसमत्वात् । यथैव शरीरसर्गः कर्मनिरपेक्षैर्भूतैरारभ्यत इति साध्यं तथा सिकतादीनामकर्मनिमित्तः सर्गः साध्यत इति । सिकतादीनामपि कर्मनिमित्तः सर्ग इत्येतस्मादेव हेतोः सिध्यतीति । यथा चोभयपक्षसम्प्रतिपन्नो रथादिर्दृष्टान्तः पुरुषविशेषगुणप्रेरितभूतपूर्वकोऽस्ति न तथा अकर्मनिमित्तसर्गपक्षे दृष्टान्तोऽस्तीति ।

विषमश्चायमुपन्यासः भूतेभ्योमूर्त्युपादानवदिति ?—

**नोत्पत्तिनिमित्तत्वान्मातापित्रोः ॥ ६४ ॥**

नोत्पत्तिनिमित्तत्वान्मातापित्रोः ॥ मातापितृशब्देन लोहितरेतसी बीजभूते गृह्येते—तत्र पित्रोः पुत्रफलानुभवनीये कर्मणी सत्त्वस्य गर्भवासानुभवनीयं कर्म सह मातृगर्भाशये शरीरोत्पत्तिं प्रयोजयति । तत्र चोपपन्नं बीजानुविधानं, बीजानुविधानाच्च यज्जातीयौ तस्य पितरौ तज्जातीयः सम्भवतीति ॥

**तथाहारस्य ॥ ६५ ॥**

*तथाहारस्य*—उत्पत्तिनिमित्तत्वादिति प्रकृतम् । एतदपि सिकतादिभिर्वैधर्म्यमेवोच्यते—अशितपीतमाहारः तस्य पाका-

द्रव्यद्रव्यं निर्वर्त्यते तस्मात् शरीरे(१) उपचीयते, गर्भशरीरे चोपचितं(२) कललादिभावेनोपचीयमानं कर्मसापेक्षभूतैः पाण्यादिभावमापद्यते । यदि पुनः कर्मनिरपेक्षाणि भूतानि स्युः स्थाल्यादिगतमिवान्नं पच्येत, न त्विदमस्ति तस्मात् सापेक्षाणीति ॥

प्राप्तौ चानियमात् ॥ ६६ ॥

प्राप्तौ चानियमात् ॥ कर्मनिरपेक्षाणि भूतानि शरीरमारभन्त इति सर्वो दम्पत्योः संयोगः पुत्रादिफलकः स्यात् । कर्मसापेक्षेषु भूतेषूपपन्नो नियमाभाव इति ।

सर्वात्मभिः सम्बन्धात् साधारणविग्रहवत्त्वमसङ्गः नियमहेत्वभावादिति चेत् ?—अथ मन्यसे शरीरं सर्वात्मभिः सम्बध्यते संयोगजेन च संयोगेन क्रियाजेन वा तत्र शरीरादिगतो न कश्चिन्नियमहेतुरिति येन शरीरमेव तस्यात्मनो व्यवतिष्ठेत, न च पुरुषगतो विशेषः कश्चिद्विद्यते येन शरीरमेकस्य पुरुषस्य उपभोगसाधनं भवेत् अस्ति च नियमः तस्माद्वक्तव्यो नियमहेतुरिति ? ।

अस्योत्तरद्वारकं सूत्रम्—

शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म ॥६७॥

शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म ॥ येनैव कर्मणा शरीरमुत्पाद्यते तदेव संयोगं नियमयति अकर्मनिमित्ते तु शरीरसर्गे यथोक्तदोष इति ।

तदस्थता कुत इति चेत् ?—अथ मन्यसे यदि कर्म नियामकं शरीरसर्गस्याथ कर्मणि कुतो नियम इति ? न, स्वसंयोगोत्पत्तिनियमात्—यो यस्यात्मनः संयोगः तस्माद्यत् कर्मोपजायते

(१) तस्माद्य शरीरे च—पा० १ पु० । (२) उपहितं—पा० ■ पु० ।

तत्तस्य भवतीति । संयोगे कुतो नियम इति ? यथैव कर्मणि पर्यनुयोगो न व्यावर्तते तथा संयोगेऽपीति ! न, मनोनियमहेतुत्वात्–यस्यात्मनो यन्मनस्तेन यः संयोगो जन्यते स तस्य भवतीति । मनस्यपि तुल्यम् ?–मनसस्तर्हि सर्वात्मभिः सम्बन्धात् किं नियामकमिति ? कर्मैव–यन्मनो यदीयेन कर्मणा उपनिबद्धं तदीयं तद्भवतीति । सर्गादौ कथमिति चेत् ? सर्गादेरनभ्युपगमाददेश्यम्–अनादिः संसारः पूर्वाभ्यस्तसूत्रे प्रतिपादितमेतत् आदिमति संसार एष देश्यो नानादाविति ॥

एतेनानियमः प्रत्युक्तः ॥ ६८ ॥

एतेनानियमः प्रत्युक्तः । कः पुनरयं नियमः ? यथैकस्यात्मनः शरीरं तथा सर्वात्मनामिति नियमः अन्यस्यान्यथाऽन्यस्यान्यथेत्यनियमो भेदो व्यावृत्तिर्दृष्टः शरीरभेदः प्राणिनामनेकरूपः स च कर्मनिरपेक्षैर्भूतैः शरीरारम्भे न युक्तः, कर्मणां भेदाच्छरीराणि भिद्यन्त इति युक्तम् । उपपन्नश्च तद्वियोगः कर्मक्षयोपपत्तेः । द्वे शरीरस्य प्रकृती व्यक्ता चाव्यक्ता च । तत्राव्यक्तायाः कर्मसमाख्यातायाः प्रकृतेरुपभोगात् प्रक्षयः प्रक्षीणे च(१) कर्मणि विद्यमानानि भूतानि न शरीरमुत्पादयन्तीति उपपन्नोऽपवर्गः, कर्मनिरपेक्षेषु कस्य प्रक्षयान्मोक्षमाणा अपवृज्येरन् भूतलक्षणायाः प्रकृतेरनुच्छेदात् ॥

तददृष्टकारितमिति चेत् पुनस्तत्प्रसङ्गोऽपवर्गे ॥६९॥

अदृष्टकारितमिति चेत् ?–अथ मन्यसे अदृष्टकारिता शरीरोत्पत्तिः–अदृष्टशब्देनादर्शनमुच्यते अदर्शनमदृष्टमिति, सर्गादौ प्रधानं पुरुषार्थेन हेतुना प्रवर्तते, तत्तु प्रवर्तमानं महदादिभा-

(१) प्रक्षीयमाणे च—पा० ४ पु० ।

येन शरीरमुत्पादयति उत्पन्ने शरीरे द्रष्टा दृश्यं पश्यतीति। दृश्यं च द्वेधा विषयो नानात्वं (१) च प्रकृतिपुरुषयोः, दृष्टेन प्रधानं चरितार्थत्वान्न प्रवर्तत इति तदेवमदर्शनं शरीरसर्गहेतुस्तद्भावभावित्वादिति(२)? एतस्मिन् खल्वदर्शने पुनस्तत्प्रसङ्गोऽपवर्गे—या च प्राक् प्रवृत्तेर्दर्शननिवृत्तिरदर्शनाभिमता या चोत्तरकालं निवृत्ते सर्गे नैतयोरदर्शनयोः कश्चिद्विशेषः। अदर्शननिमित्ता चेत् शरीरोत्पत्तिर्भवति तेन यथा प्राक् नानात्वदर्शनात् प्रधानं पुरुषार्थं प्रवर्तते तथाऽपवृक्तेऽपि प्रवर्तेत, न चैवमभ्युपगम्यते, तस्मान्नादर्शनं शरीरसर्गे कारणमिति। चरितार्थता विशेषो(३) भविष्यतीति न युक्तं (न) चरितार्थानामचरितार्थानां च भूतानां पुनरारम्भदर्शनात् आद्येन शरीरेण रूपाद्युपलब्धेः कृतत्वाद् द्वितीयादिशरीरं शब्दाद्युपलब्धिसाधनं न स्यात्, भवति च शब्दाद्युपलब्धिसाधनं द्वितीयादिशरीरं, तेन गम्यते चरितार्थान्यपि भूतानि पुनः शरीरमारभन्त इति। पुरुषार्थेन च हेतुना पुनः शरीराण्यारभन्त इति—पुरुषार्थश्च पुरुषप्रधाननानात्वदर्शनं ?, तस्य चाकरणादनर्थकः शरीरारम्भो भवेदिति। दिदृक्षाविशेषोऽदर्शनमिति चेत् ?—अथ मन्यसे नादर्शनं दर्शनाभावः किन्तु दिदृक्षा दर्शनमित्युच्यते सा चापवृक्ते प्रधाने दिदृक्षा न भवतीति ?, न प्राक्प्रवृत्तेस्तदभावात्—यावत्प्रधानं महदादिभावेन न परिणमते तावद्दिदृक्षा नास्ति कथं कारणं भविष्यति प्रवृत्तेरिति। सर्वशक्तिमत्त्वात् तदाप्यस्तीति चेत् ?—अथ मन्यसे सर्वाः कारण-

---

(१) भेद इत्यर्थः। (२) स्तद्भावभावादिति—पा० १ पु०।

(३) चरितार्थताविशेषो—पा० ४ पु०।

शक्तयः प्रधाने विद्यन्ते तदिदमात्मभूताभिः कारणशक्तिभिः सर्वशक्तिमत्प्रधानं, सर्वशक्तिमत्त्वाच्च प्रागपि प्रवृत्तेः प्रधाने दिदृक्षाऽस्तीति ? न अपवर्गाभावप्रसङ्गात्–दिदृक्षावन्नानात्वदर्शनमप्यस्तीत्यपवर्गाभावः विद्यमाने च नानात्वदर्शने प्रधानस्य प्रवृत्तिरयुक्ता—यदा च नानात्वदर्शनं तदापि दिदृक्षा न व्यावर्त्तेत न हि महात्मानं जहातीति वः पक्षः । दिदृक्षायां च सत्यां कुतोऽपवर्गः ? दिदृक्षानानात्वदर्शने च विरुद्धे कथमेकस्मिन् काले भवतः । अज्ञानमदर्शनमिति च ब्रुवाणो विकल्पतः पर्यनुयोज्यः किं ज्ञानाभावोऽज्ञानमुत मिथ्याज्ञानमिति ? किं चातः ? यद्यभावोऽपवर्गो न प्राप्नोति प्राक् प्रवृत्तेरप्रवृत्ते च प्रधाने ज्ञानाभावस्य तुल्यत्वात् । अथ मिथ्याज्ञानं ? तन्न युक्तं, प्राक् प्रवृत्तेस्तदभावात् । कथमभावो ? बुद्धिधर्मकत्वात् अप्रवृत्ते च प्रधाने न बुद्धिरिति(१) कथं तद्धर्मोऽज्ञानं भविष्यतीति । सत्कार्यवादाभ्युपगमात् सर्वदास्तीति ब्रुवाणो मोक्षं बाधते । कथं ? तत्त्वज्ञानस्य सर्वदाभावात् तत्त्वज्ञानमिथ्याज्ञानयोश्च सहानवस्थानात् प्रवृत्तेस्तादार्थ्य(२)मयुक्तम् । न हि भवतां पक्षे किञ्चिदसद्भवति सद्वात्मानं जहातीति सर्वार्थानां सम्भवात् प्रधानं किमर्थं प्रवर्तेत इति वक्तव्यम् । अथाभिव्यक्तिनिमित्तां प्रवृत्तिं प्रतिपद्येयाः ? साप्यभिव्यक्तिः प्राक् प्रवृत्तेः सती आहोऽसतीति पूर्ववत्प्रसङ्गः । अथ प्रागनुपलब्धं पश्चादुपलभ्यते ? किमुपजातविशेषमुतानुपजातविशेषमिति । यदि विशेषोपजननात् पश्चादुपलभ्यते व्याहतं भवति । अनुपजातविशेषः कस्मात् प्राङ्नोपलभ्यत इति वक्तव्यम् ? सत्का-

(१) बुद्धिरस्ति—पा० पु० । (२) तादात्म्य—पा० ४ पु० ।

यैर्वादाभ्युपगमे च स्फूर्ज्जतापि न विशेषोपजनः शक्यः प्रतिपादयितुम्। न च विशेषोपजनप्रत्याख्याने वस्तुन उपलब्ध्यनुपलब्धिविषयत्वं शक्यमवगमयितुम्। कर्मनिमित्ते तु सर्गे दर्शनार्थं भूतानि शरीरं पुरुषगुणप्रेरितान्यारभन्त इति युक्तम्। न ह्यनुत्पन्ने शरीरे द्रष्टा निरायतनो दृश्यं पश्यतीति॥

अपरे त्वदृष्टं परमाणुगुणं वर्णयन्ति तेषामपि पुनस्तत्प्रसङ्गोऽपवर्गे इति परमाणुगुणस्य शरीरोत्पत्तिनिमित्तत्वात् पुनस्तत्प्रसङ्गोऽपवर्गे इति॥

मनःकर्मनिमित्तत्वाच्च संयोगाद्यनुच्छेदः(१)॥७०॥

मनःकर्मनिमित्तत्वाच्च संयोगाद्यनुच्छेदः। परमाणवः स्वगुणाददृष्टात् संहन्यन्ते संहताश्च द्व्यणुकादिप्रक्रमेण शरीरमुत्पादयन्ति तन्मनः स्वगुणाददृष्टादुपसर्पतीति। उपसर्पणहेतोरदृष्टस्य नित्यत्वात् किंकृतमपसर्पणमिति?। कर्माशयक्षये कर्माशयादपसर्पणमिति युक्तं प्रायणम्। उभयहेतुर्मनोवृत्तिरदृष्टो भविष्यतीति न युक्तम् एकस्य जीवनप्रायणहेतुत्वानुपपत्तेः॥

नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः॥७१॥

नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः॥ नित्यत्वप्रसङ्ग इति प्रायणानुपपत्तिं ब्रूमः तदिदमुक्तमुपसर्पणहेतोरदृष्टस्यानित्यत्वादपसर्पणहेतोश्चादृष्टस्याभावात् याद्दच्छिके तु प्रायणे प्रायणभेदो न स्यात्॥

अणुश्यामतानित्यत्ववदेतत् स्यात्॥७२॥

अणुश्यामतानित्यत्ववदेतत् स्यादिति परिहारं वर्णयन्ति। यथा किलाणोः श्यामता नित्याऽपि संयोगेन प्रतिबध्यते

(१) संयोगाद्युच्छेदः—पा० पु०।

एवमणुमनसोरदृष्टः सम्यग्ज्ञानेन प्रतिषिध्यते इति ॥

एतच्च न—

नाकृताभ्यागमप्रसङ्गात् ॥ ७३ ॥

अकृताभ्यागमप्रसङ्गादिति ॥ अनुपपन्नप्रमाणस्याभ्युपगमोऽकृताभ्यागम इति सूत्रार्थः। यथाश्रुति वा सूत्रार्थः अकृतस्य कर्मण उपभोगप्रसङ्गादिति। एतत्सविस्तरोक्तं भाष्य इति ॥

आत्मा शरीरं करणमर्थो बुद्धिर्मनस्तथा।
यद्यथा वस्तु तत्त्वेन तद् तथेहोपपादितम् ॥

( इति मासाङ्किकमदृष्टनिष्पाद्यत्वप्रकरणम्। )

इति श्रीऔद्योतकरे न्यायसूत्रवार्त्तिके तृतीयाध्यायस्य द्वितीयमाह्निकम् ॥

तृतीयोऽध्यायः समाप्तः ॥



# चतुर्थोऽध्यायः

मनसोऽनन्तरं(१) प्रवृत्तिरवसरप्राप्ता परीक्षितव्येत्यत आह—

प्रवृत्तिर्यथोक्ता ॥ १ ॥

प्रवृत्तिर्यथोक्ता—तथा परीक्षितेत्यर्थः सूत्रस्य । किं पुनः प्रवृत्तेः परीक्षितमिति ? यावद्धर्माधर्माश्रयं परीक्षितं सर्वा प्रवृत्तेः परीक्षा । तत्र प्रवृत्तिर्द्वेधा भवति—कारणरूपा कार्यरूपा च । कारणरूपा—प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति । कार्यरूपा—धर्माधर्मसमाख्या(२) दुःखादिसूत्रे वर्णिता । तत्र कारणरूपायाः प्रवृत्तेर्विंशतिधा भेदः । कार्यरूपा तु प्रवृत्तिरेकद्रव्याऽभ्युदयस्य प्रतिनियमात् अवस्थिता विपाककालस्य नियमात्, आत्मसमवायात् गुणभूता, अनित्या प्रायणादिदर्शनात् । तदुक्तं विपच्यमानकर्माशयक्षये प्रायणमिति । जन्मनः कारणम् पूर्वकृतफलानुबन्धात् तदुत्पत्तिरिति संसारापवर्गहेतुभूता तद्भावे संसारः तदभावे ऽपवर्ग इत्येवमाद्युक्तम् ॥

प्रवृत्तेरनन्तरास्तर्हि दोषा इत्यभिधीयन्तामित्यत आह—

तथा दोषाः ॥ २ ॥

तथा दोषाः ॥ उक्ता इति । बुद्धिसमानाश्रयत्वादात्मगुणाः संसारस्यानादित्वात् अनादिना प्रबन्धेन प्रवर्तन्ते सम्यग्ज्ञानाच्च

---

(१) अनन्तरा—इति क्वचित् । (२) समाख्याता—इति क्वचित् ।

मिथ्याज्ञाननिवृत्तौ निवर्तन्त इत्युत्पादनिरोधधर्मकाः । कार्यत्वे सतीन्द्रियान्तरप्रत्यक्षत्वात् अचाक्षुषप्रत्यक्षत्वाच्च गुणाः ।

( इति प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम् । )

प्रवर्तनालक्षणादोषा इत्युक्तं, तथा च मानादयः प्रवर्तयन्तीति लक्षणसाम्यात् तेऽप्युपसंख्येया इति ? नोपसंख्यायन्ते संगृहीतत्वात् । केन संग्रहः ? प्रवर्तनालक्षणा दोषा इत्यनेनैव । तेषां तु संगृहीतानां—

तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ॥ ३ ॥

तत् त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ॥ तेषां दोषाणां त्रयो राशयः—त्रयः पक्षाः सम्भवन्ति, रागपक्षः—कामो मत्सरः स्पृहा तृष्णा लोभ इति । द्वेषपक्षः—क्रोधः ईर्ष्याऽसूया द्रोहोऽमर्ष इति । मोहपक्षः—मिथ्याज्ञानं विचिकित्सा मानः प्रमाद इति ।

कामो मत्सर इत्यादि(१) किं पर्यायवचनम् आहोऽर्थान्तरभाव इति ? । किं चातः ? यदि पर्यायवचनं त्रयो राशय इत्ययुक्तम्—न हि पर्यायशब्देषु राशित्वं सम्भवति, न हीन्द्रशक्रपुरन्दरशब्दानां राश्यर्थः कश्चित् सम्भवति, अर्थान्तरभावे विशेषो वाच्य(२) इति ? । अर्थान्तरभाव इति ब्रूमः—तत्र कामः स्त्रीगताऽभिलाषः—या स्त्रीगता प्रार्थना सा काम इति । एवं चाहुः नाकामयमानो मण्डयत इति । अक्षीयमाणवस्त्वपरित्यागेच्छा मत्सरः— यथा राजकीयोदपानान्मोदकं वा इति । अस्ववस्त्वादानेच्छा स्पृहा—यद्वस्तु स्वं न भवति तस्य या आदानेच्छा सा स्पृहा । पुनर्भवप्रतिसन्धानहे-

(१) इत्येवमादिकं—पा० ४ पु० । (२) वक्तव्य— पा० ४ पु० ।

तुभूता तृष्णा-या पुनर्भवप्रार्थना सा तृष्णा(१) । प्रमाणविरुद्धपरद्रव्यापहारेच्छा लोभः-प्रमाणविरुद्धं परद्रव्यादानं कुर्वाणो लुब्ध इत्युच्यते । एषां च सामान्यं रागः सामान्येन विशेषः सङ्गृहीत इति । शरीरेन्द्रियाधिष्ठानवैकृत्यहेतुः क्रोधः-सञ्जाते यस्मिन् शरीरेन्द्रियाधिष्ठानानि विकृतानि भवन्ति स क्रोध इति । साधारणे वस्तुनि पराभिनिवेशप्रतिषेधेच्छा ईर्ष्या-यदपरिगृहीतं साधारणं वस्तु तस्मिन् यः पराभिनिवेशप्रतिषेधाभिप्रायः सेर्ष्या । परगुणासमता असूया-या परगुणान् श्रुत्वा असमतोपजायते सा असूया । परपकारेच्छा द्रोहः-अशक्तस्य या परस्मस्यापचिकीर्षा(२) सा द्रोहः । कृतापकारासहिष्णुता अमर्षः-या कृतापकारस्याऽसहिष्णुता सोमर्षः । अस्य च द्वेषः सामान्यं तेन सङ्ग्रहः । विपर्ययज्ञानं मिथ्याज्ञानम् अतस्मिंस्तदिति प्रत्यय इति । संशयो विचिकित्सा किंस्विदिति । तथा(३) विद्यमानाविद्यमानगुणाध्यारोपेणात्मोत्कर्षप्रत्ययो मानः अहोऽहमस्मि(४) इति । शक्तस्य कर्तव्याकरणं प्रमादः—यतः शक्तः स्वकर्तव्यं न करोति ॥ प्रमाद इति । अस्य च सामान्यं मोहः तेन संग्रह इति । अतस्त्रैराश्यान्नोपसंख्यायन्त इति ।

कुत एतत् ? लोकतस्तदवगतेः(५)-लोकत(६) एते कामादयः एवम्भूतेष्वभिप्रायेषु प्रयुज्यन्ते नाभिप्रायमात्रे, न हि भिक्षां प्रार्थयमानः कामयत इत्येवं भवतीति । लक्षणस्य तर्हि अभेदात् त्रित्वमनुपपन्नमिति ?-एकं रागद्वेषमोहाः लक्षणाभेदात् रागभेदवदिदिति ? । नानुपपन्नं रागद्वेषमोहार्थान्तरभावात्-सत्यपि लक्षण-

(१) सा तृष्णेति—पा० ४ पु० । (२) चिकित्सा-पा० १ पु० ।
(३) यथा—पा० ४ पु० । (४) अहोऽहमस्मि-पा० १ पु० ।
(५) तदधिगतेः—पा० ४ पु० । (६) लोके—पा० ४ पु० ।

स्याभेदे आन्तर्गणिकं भेदकं लक्षणमस्ति तदुपपत्तोह्रित्वम् । यथा रागलक्षणेन सङ्गृहीतानां कामादीनामिति । न च सामान्यमेकत्वे कारणं (तथा च) सामान्यस्यैवाभावः स्यात् यदि रागद्वेषमोहानामेकत्वं स्यात् समानमेतल्लक्षणमित्येतदेव न स्यादिति न ह्येकस्य समानं भवतीति । किं पुनरान्तर्गणिकं लक्षणमिति ? सक्तिलक्षणो रागः—यो विषयेष्वभिषङ्गः स रागः । अमर्षलक्षणो द्वेषः—असहिष्णुता दुःखस्य दुःखसाधनानां चेति द्वेषः । मिथ्याप्रतिपत्तिलक्षणो मोहः—यथाऽवस्थितविषये ऽयथाभावप्रतिपत्तिर्या एतच्च रागद्वेषमोहानां व्यवच्छेदकं लक्षणमात्मप्रत्यक्षमिति(१) ॥

नैकप्रत्यनीकत्वात्(२) ॥ ४ ॥

एकं रागद्वेषमोहा एकप्रत्यनीकत्वात् विभागवदिति—यथा विभाग एकेनैव संयोगेन विरुध्यमान एको भवति तथा तत्त्वज्ञानेनैकेन विरुध्यन्ते रागादयस्तस्मादेकं रागादय इति ॥

व्यभिचारादहेतुः ॥ ५ ॥

व्यभिचारादहेतुः ॥ एकप्रत्यनीकाश्च रूपादयः एकाग्निसंयोगविरोधिनः न चैषामेकत्वमिति अनैकान्तिकम् । एकयोनित्वादेकं रागादयः शब्दवदित्यप्यनेनैव प्रत्युक्तम् । एकयोनयो रूपादयो न चैषामेकत्वमिति ।

सति चार्थान्तरभावे—

तेषां मोहः पापीयान् नामूढस्येतरोत्पत्तेः ॥ ६ ॥

तेषां मोहः पापीयान्—पापतमः—पापिष्ठ इति वा प्राप्ते द्वौ

(१) एकप्रत्यनीकभावात्—अधिकं ४ पु० ।
(२) प्रत्यनीकभावात्—पा० ४ पु० ।

द्वावभिमेत्य पापीयानित्युच्यते रागमोहयोर्मोहः पापीयान् द्वेषमोहयोर्मोहः पापीयानिति । कस्मात् ? नामूढस्येतरौ भवतः मूढः कुप्यति मूढो रज्यते मूढो मुह्यतीति । तत्त्वज्ञानाच्च मोहनिवृत्तौ रागादिनिवृत्तिरित्येकप्रत्यनीकता–यस्मात् तत्त्वज्ञानान्निवृत्ते मोहे न रागद्वेषौ भवतः अत एकप्रत्यनीकता न पुनरनेकत्वादिति । एवं च कृत्वा दुःखादीनामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति सिध्यति ॥

प्राप्तस्तर्हि–

**निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः ॥ ७ ॥**

निमित्तनैमित्तिकभावा(१)दर्थान्तरभावो(२) दोषेभ्यः । अदोषो मोहः दोषनिमित्तत्वाद्रूपादिवदिति ॥

**न दोषलक्षणावरोधान्मोहस्य ॥ ८ ॥**

न दोषलक्षणावरोधात्(३) न कार्यकारणभावेन पदार्थानां तथाभावोऽतथाभावो वा सिध्यति, किन्तु लक्षणस्याभेदादिति दोषलक्षणं च मोहे ऽस्तीति दोषो मोहः ॥

**निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः ॥ ९ ॥**

निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः(४)तुल्यजातीयानामनेकविधविकल्पो निमित्त(५)नैमित्तिकभावो दृष्ट इति । यथा बुद्धिर्बुद्ध्यन्तरनिमित्तं बुद्धिजातीया चेति । तुल्या-

---

(१) निर्देशात्—पा० ४ पु० । (२) मोहान्तरभावो—पा० ४ पु० ।
(३) लक्षणावरोधात्—पा० ४ पु० ।
(४) मनेकप्रतिषेधः—पा० ४ पु० । (५) नित्य–पा० ४ पु० ।

द्यो द्रव्यस्य निमित्तं द्रव्यजातीयाः । नोदनाभिघातसंयुक्तसंयोगाः संस्कारस्य गुणा इति ।

( इति दोषत्रैराश्यप्रकरणम् । )

परीक्षिता दोषा इति दोषानन्तरं प्रेत्यभावस्तस्याऽभिसिद्धिरात्मनो नित्यत्वात्–नित्य आत्मा न जायते न म्रियते उभयं च प्रेत्यभावः मृत्वा पुनर्जन्म ।

तत्रायं सिद्धार्थानुवादः—

आत्मनित्यत्वे प्रेत्यभावसिद्धिः ॥ १० ॥

आत्मनित्यत्वे प्रेत्यभावसिद्धिः । नित्यः सन् आत्मा प्रैति जायते चेति । किमुक्तं भवति म्रियत इति ? पूर्वोत्पन्नाभिः शरीरेन्द्रियबुद्धिवेदनाभिर्वियुज्यत इति । किं चोक्तं जायत इति ? अपूर्वोत्पन्नाभिर्निकायविशिष्टाभिः शरीरेन्द्रियबुद्धिवेदनाभिः सम्बध्यत इति । न पुनः(१)जन्ममरणे आत्मन्युत्पादनिरोधौ(२) नित्यत्वात्–नित्य आत्मेति(३) पूर्वाभ्यस्तसूत्रे प्रतिपादितम् । यस्य पुनरात्मन उत्पादनिरोधौ जन्ममरणे तस्याकृताभ्यागमकृतनाशदोषप्रसङ्ग(४) इत्युक्तम् शरीरदाहे पातकाभावादिति सूत्रं वर्णयद्भिः ॥

कथमुत्पत्तिरिति चेत् ?–किंधर्मकात् कारणात्(५) शरीरेन्द्रियमहाभूतादि व्यक्तमुत्पद्यत इति ?–

व्यक्तात् व्यक्तानां प्रत्यक्षप्रामाण्यात् ॥ ११ ॥

व्यक्ताद् व्यक्तानां प्रत्यक्षप्रामाण्यात् । किं पुनर्व्यक्तमुपल-

(१) न—पा० ४ पु० । (२) आत्मन उत्पादनिरोधौ–पा० ४ पु० ।
(३) नित्य आत्मेत्येतत्—पा० ४ पु० । (४) दोष–पा० ४ पु० ।
(५) किन्धर्मकारणात्–पा० ४ पु० ।

ङ्गिलक्षणमाप्तं रूपादियुक्तं द्रव्यं तत्सामान्यात् परमाणुलक्षणमपि पृथिव्यादिकारणं व्यक्तमित्युच्यते । किं सामान्यं ? रूपादियोगः—रूपादिसामान्यात्(१) परमाणवो व्यक्ता इत्युच्यन्त इति रूपादियुक्तेभ्यः परमाणुभ्यो घटादि गवादि व्यक्तमुत्पद्यत इति । कः पुनरत्र न्यायः ? प्रत्यक्षप्रामाण्यात्(२)—दृष्टा रूपादिमद्भ्यो रूपादिमतामुत्पत्तिरिति। नानेकान्तात् ?—नायमेकान्तो रूपादिमद्भ्यो रूपादिमदुत्पत्तिरिति अरूपादपि संयोगाद्रूपादिमदुत्पद्यमानं घटादि गवादि दृष्टमिति ? । न सूत्रार्थापरिज्ञानात्—नायं सूत्रार्थो रूपादिमत एव रूपादिमदुत्पद्यत इति, अपि तु रूपादिमत्सामग्रीपूर्वकं गवादि व्यक्तमिति सूत्रार्थः । एवं च(३) नानेकान्तोऽस्ति न ह्यरूपायाः सामग्र्या रूपादिमत्कार्यमिति ॥

न घटाद्घटानिष्पत्तेः ॥ १२ ॥

न घटाद्घटानिष्पत्तेः । सजातीयात् सजातीयमुत्पद्यत इति मत्वा प्रतिषेधः । न सूत्रार्थापरिज्ञानादिति—न ब्रूमः सर्वं सर्वस्य कारणमिति, यश्च सर्वं सर्वस्य कारणत्वेनाभ्युपेयात् स एवंमसवस्थेयो न घटाद्घट उत्पद्यमानो दृष्ट इति ॥

अपि तु—

व्यक्ताद्घटनिष्पत्तेरप्रतिषेधः ॥ १३ ॥

व्यक्ताद्घटनिष्पत्तेरप्रतिषेधः । यदपि तद्घटादि व्यक्तमुत्पद्यते तदपि व्यक्तादेव कपालादेः, व्यक्ताच्चोत्पद्यमानं घटादि न किञ्चिद्बाधत इति । रूपादिमत्सामग्रीपूर्वकं शरीरादि व्यक्तं(४) दर्शनस्पर्शनाभ्यामेकार्थग्रहणाद्घटवदिति । प्र-

(१) रूपादिसामान्ययोगात्—पा० ४ पु० ।
(२) रूपादिमद्भ्यो—इत्यधिकम् ४ पु ।
(३) सति—इत्यधिकम् ४ पु० । (४) गवादि—पा० ४ पु० ।

ब्द्वद्वा वैधर्म्येण तदेतत्तत्त्वम् ॥

( इति प्रेत्यभावपरीक्षाप्रकरणम् । )

अतः परं प्रावादुकानां दर्शनान्युपन्यस्य कानिचित् प्रतिषिध्यन्ते कानि चिदुपगम्यन्त इति ।

तत्र तावत्—

**अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् ॥१४॥**

अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् । अभावाद्भावो जायत इति कस्यचिद्दर्शनं—तत्र न्यायं ब्रुवते—नानुपमृद्य प्रादुर्भावादिति, न किलाविनष्टे कारणे कार्यमुत्पद्यत इति । यथा बीजविनाशोत्तरकालमङ्कुरः प्रादुर्भवति । यदि बीजविनाशोऽङ्कुरकारणं नाभविष्यदविनष्टे ऽपि बीजे ऽङ्कुरोऽभविष्यत् न चैवमस्ति(१) तस्माद्बीजविनाशोऽङ्कुर कारणमिति ॥

**व्याघातादप्रयोगः ॥ १५ ॥**

उपमृद्य प्रादुर्भवतीति व्याघातः—यदुपमृद्नाति तदस्ति—न ह्यसदुपमर्दकारणमिति । यच्च प्रादुर्भवति तन्नास्ति—न हि सदुत्पद्यत इति तदिदमुपमृद्नाति प्रादुर्भवति चेति व्याहतमुच्यते । को व्याघातः ? सहासम्भवः । यद्युपमृद्नाति ? न जायते, अथ जायते ? नोपमृद्नाति ॥

**नातीतानागतयोः कारकशब्दप्रयोगात् ॥ १६ ॥**

नातीतानागतयोः कारकशब्दप्रयोगात् । अतीते ऽनागते च कारकशब्दः प्रवर्तमानो दृष्टः—अतीते तावत् भिन्नं कुम्भमनुशोचति भिन्नस्य कुम्भस्य कपालानि, अभूत् कुम्भ इति । अनागतेऽपि—पुत्रो जनिष्यते जनिष्यमाणं पुत्रमभिनन्दति जनिष्यमाणस्य पुत्रस्य नाम करोति अजाताः पुत्राः स्थविरं

(१) न चैवमस्तीति नास्ति ४ पु० ।

तापयन्तीति बहुलं प्रयोगा भाक्ता इति। एवमयं प्रादुर्भविष्यन्नङ्कुर उपमृद्गातीत्युच्यते। कः पुनरुपमर्दार्थः? आनन्तर्यसामर्थ्यात् अनन्तरोत्पत्त्यर्थः यस्माद्बीजोपमर्दादनन्तरमयं प्रादुर्भवतीति। अत्रोक्तं व्याघातादिति—नाजातेनोपमर्दो नोपमर्दासमर्थो जायत इति। यद्पीदमुच्यते अतीते ऽनागते च कारकशब्दाः प्रयुज्यन्त इति? न प्रयोगो वार्यते, अपि स्वसतः कारणादुत्पत्तिर्न युक्तेति। कारकशब्दानां च त्रैकालिकः प्रयोगः तदुक्तं प्रामाण्यसामान्यचिन्तायां त्वक्षरितप्रतीति यथा। यत्पुनरेतत् आनन्तर्यसामर्थ्यादुपमृद्य प्रादुर्भवतीत्युच्यत इति न बीजनाशोऽङ्कुरकारणमपि तु व्याकृत(१) व्यूहानां बीजावयवानां पूर्वव्यूहनिवृत्तौ व्यूहान्तरमुत्पद्यत इति व्यूहान्तरादङ्कुर आविर्भवतीति। न चाविनष्टे पूर्वव्यूहे व्यूहान्तरेण शक्यते भवितुमित्यानन्तर्यप्रादुर्भावार्थः। एवं च बीजोपादानं युक्तमिति।

अस्य चार्थस्य ज्ञापनार्थं सूत्रम्—

**न विनष्टेभ्योऽनिष्पत्तेः॥ १७॥**

न विनष्टेभ्योऽनिष्पत्तेः इति। न हि बीजविनाशोऽङ्कुरस्य कारणमपि तु बीजावयवाः पूर्वव्यूहपरित्यागेनेत्यर्थः सूत्रस्य(२)॥

**क्रमनिर्देशादप्रतिषेधः॥ १८॥**

क्रमनिर्देशादप्रतिषेधः। पूर्वं बीजविनाशः पश्चादङ्कुरोत्पत्तिरिति सूत्रार्थः। अभावश्चेदङ्कुरोत्पत्तिकारणं स्यात् सर्वं सर्वस्मादुत्पद्येत अभावस्य निर्विशेषत्वात्। न हि शालिबीजे विनष्टे काचिदन्यशक्तिरस्ति, अनन्वितं च कार्यं सर्वाभिः शक्ति-

(१) व्याकृत—व्याहृत—पा० ४ पु०। (२) नेति सूत्रार्थः-पा० ४ पु०।

भिरुत्पद्येत, अन्वितं तु दृष्टं तस्मान्नाभावः कारणमिति सूत्रार्थः।

( इति शून्यतोपादानप्रकरणम्। )

अपर इदानीमाह—

ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्॥ १९॥

ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्। पुरुषोऽयं समीहमानो नावश्यं समीहाफलमाप्नोति तेनावगम्यते पराधीनं पुरुषस्य कर्मफलाराधनमिति(१)—निरपेक्षश्चेत् पुरुषः कर्मफलभोगे समर्थः स्यात् न कस्यचिदफला क्रिया भवेत्। न कश्चिद्दुःखं कुर्यादिति। उभयं च दृष्टं तस्मादीश्वरः कारणमिति॥

न पुरुषकर्माभावे फलानिष्पत्तेः॥ २०॥

न पुरुषकर्माभावे फलानिष्पत्तेरिति। ईश्वरश्चेत् कारणं स्यात् पुरुषकर्मान्तरेणापि सुखदुःखोपभोगौ स्याताम्(२) ततश्च कर्मलोपोऽनिर्मोक्षश्च। ईश्वरस्यैकरूपत्वादेकरूपा क्रियेति। अथेश्वर कारणभेदानुविधानेन कार्यं निर्वर्तयति यदपेक्षते तत्र करोतीति मानुष न हि कुलालो दण्डादि करोति एवं कर्मसापेक्षश्चेदीश्वरो जगदुत्पत्तिकारणं स्यात् कर्मणीश्वरो नीश्वरः स्यात्॥

तत्कारितत्वादहेतुः॥ २१॥

तत्कारितत्वादहेतुः। न ब्रूमः कर्माधर्मनपेक्ष ईश्वरः कारणमिति। अपि तु पुरुषकर्म ईश्वरोऽनुगृह्णाति। कोऽनुग्रहार्थः ?। यद्यथाभूतं यस्य च यदा विपाककालः(३) तत्तथा तदा विनियुङ्क्त इति। यः पुनरीश्वरं कर्मानपेक्षं कारणत्वेन प्रतिपद्यते

(१) फलाराधनमिति—पा० ४ पु०।

(२) सुखदुःखोपभोगो भवेत्—पा० ४ पु०।

(३) परिपाककालः—पा० ४ पु०।

तस्यानिर्मोक्षत्वादिदोषः। सापेक्षे त्वीश्वरे यथोक्तो न दोषः। शेषं भाष्ये।

तत्कारितत्वादित्येवं ब्रुवता निमित्तकारणमीश्वर इत्युपगतं भवति। यच्च निमित्तं तदितरयोः समवायिकारणासमवायिकारणयोरनुग्राहकम्, यथा तुर्यादि तन्तूनां तत्संयोगानां चेति। ईश्वरश्चेज्जगतो निमित्तं जगतः साक्षादुपादानकारणं किम्? उक्तं पृथिव्यादि परमसूक्ष्मं परमाणुसञ्ज्ञितं द्रव्य(व्यक्त)मिति। व्यक्तकारणाभ्युपगमे तु सति निमित्तविशेषविप्रतिपत्तौ ईश्वरप्रक्रिया— यस्मान्निमित्तकारणे विप्रतिपद्यन्ते केचित् कालं केचिदीश्वरं केचित् प्रकृतिमिति तदेवं निमित्तविशेषविप्रतिपत्तौ किं न्याय्यमिति?।

ईश्वर इति न्याय्यं तत्र हि प्रमाणानि अविघातेन प्रवर्तन्त इति। अस्तित्वासिद्धिरिति चेत्?—अथ मन्यसे सिद्धे ईश्वरस्यास्तित्वे कारणान्तरनिराकरणं निमित्तकारणाभावश्च साध्येन, तत्त्वसिद्धं तस्मादयुक्तमिति? न, अत एव तदुपपत्तेः इति—येनैव न्यायेन ईश्वरस्य कारणत्वं सिध्यति तेनैवास्तित्वमिति, न ह्यविद्यमानं कारणमिति। कः पुनरीश्वरस्य कारणत्वे न्यायः? अयं न्यायोऽभिधीयते प्रधानपरमाणुकर्माणि प्राक्प्रवृत्तेर्बुद्धिमत्कारणाधिष्ठितानि प्रवर्तन्ते अचेतनत्वात् वास्यादिवदिति—यथा वास्यादि बुद्धिमता तक्ष्णा अधिष्ठितमचेतनत्वात् प्रवर्तते तथा प्रधानपरमाणुकर्माणि अचेतनानि प्रवर्तन्ते तस्मात् तान्यपि बुद्धिमत्कारणाधिष्ठितानीति(१)।

तत्र प्रधानकारणिकास्तावत् पुरुषार्थमधिष्ठायकं प्रधानस्य वर्णयन्ति—पुरुषार्थेन प्रयुक्तं प्रधानं प्रवर्तते, पुरुषार्थश्च द्वेधा भवति

(१) बुद्धिमता तक्ष्णाधिष्ठितानि-पा० ४ पु०।

शब्दाद्युपलब्धिर्गुणपुरुषान्तरदर्शनं चेति, तदुभयं प्रधानप्रवृत्तेर्विना न भवतीति ? न, प्राक् प्रवृत्तेस्तदभावात्—यावत् प्रधानं महदादिभावेन न परिणमते तावन्न शब्दाद्युपलब्धिरस्ति न गुणपुरुषान्तरोपलब्धिरिति हेत्वभावात् प्रधानप्रवृत्तिरयुक्ता । अथाऽस्ति, नाऽसद्दात्मानं लभते न सन्निरुध्यत इति ? एवं च सति विद्यमानः पुरुषार्थः प्रधानं प्रवर्तयतीति न पुरुषार्थो(य) प्रधानस्य प्रवृत्तिः—न हि लोके यद्यस्य भवति स तदर्थं पुनर्यतत इति । सततं च प्रवृत्तिः प्राप्नोति कारणस्य सन्निहितत्वादिति—पुरुषार्थः प्रवृत्तेः कारणमिति पुरुषार्थस्य नित्यत्वात् सततं प्रवृत्त्या भवितव्यमिति । अथ विद्यमानोऽपि न प्रवर्तयति ? न तर्हि पुरुषार्थः कारणमिति यस्याभावात् प्रधानं न प्रवर्तते यस्य च भावात् प्रवर्तते तत्कारणमिति । अथ विद्यमानः प्रतिबन्धान्न प्रवर्तयति ? प्रतिबन्धापगमस्याशक्यत्वात् सततमप्रवृत्तिः—यत्तत्र प्रतिबन्धकारणं पुरुषार्थस्य तस्यापगमः कर्तुमशक्यः न सदात्मानं जहातीति प्रतिबन्धकस्य नित्यत्वान्नित्यमप्रवृत्त्या भवितव्यम् । यदा भवन्तः सत्त्वरजस्तमसां साम्यावस्थां प्रकृतिं वर्णयन्ति सा कुतो निवर्तत इति वक्तव्यम् ?—न चानिवृत्तायां साम्यावस्थायां वैषम्येण शक्यं भवितुम् । अथाङ्गाङ्गिभावस्यानियमाद्वैषम्यं भवति इति ? अत्रापि भवन्तं पर्यनुयुङ्क्ष्महे—कथं साम्येनावस्थितमधिकं हीनं च भवति ? नापूर्वोपचयो विद्यते न पूर्वहानमस्तीति । यांश्च शब्दादीन् प्रागनुपलब्धस्वरूपान् पुरुष उपलभते बुद्धिरुपलम्भयति ते किमुपजातविशेषा उतानुपजातविशेषा इति ? । यद्युपजातविशेषा उपलभ्यन्त इति ? व्याहतं भवति नासदात्मानं लभत इति । अथानुपजातविशेषा एवोपलभ्यन्ते ? तथाप्यनिवृत्तो व्याघातः प्रधानं पुरुषार्थः प्रवर्तयतीति । सो-

ऽयं प्रधानवादो यावद्यावद्विचार्यते तावत्तावत् प्रमाणवृत्तं बाधत इति ।

ये परमाणून् पुरुषकर्माधिष्ठितान् जगतः कारणत्वेन वर्णयन्ति तान् प्रतीदमुच्यते परमाणवः प्रवर्तन्त इति सततं प्रवृत्त्या भवितव्यम् । अथ कालविशेषापेक्षाः प्रवर्तन्ते ? परमाणुभिः कालो व्याख्यातः—यथा परमाणवो बुद्धिमन्तमधिष्ठातारमपेक्षन्ते तथा कालोऽपीति, न हि तत्राचेतनत्वं निवर्तत इति । क्षीरादिवदचेतनस्यापि प्रवृत्तिरिति चेत् ?—यथा अपत्यभरणार्थं क्षीरादेरचेतनस्यापि प्रवृत्तिरेवं परमाणवोऽप्यचेतनाः पुरुषार्थं प्रवर्तिष्यन्त इति ? । तन्न युक्तम्, साध्यसमत्वात्—यथैव परमाणवः स्वतन्त्राः प्रवर्तन्त इति साध्यं तथा क्षीराद्यचेतनं स्वतन्त्रं प्रवर्तत इति । यदि क्षीरादि स्वतन्त्रं प्रवर्तेत मृतेऽपि प्रवर्तेत, न तु प्रवर्तते, अतोऽवगम्यते बुद्धिमत्कारणाधिष्ठितं तदपि । न चायं हेतुः तस्मान्निवर्तते(१) एवं यावद्यावदचेतनं प्रवर्तते (तत) सर्वं तत् चेतनाधिष्ठितमिति(२) ।

अयमपरो हेतुः बुद्धिमत्कारणाधिष्ठितं महाभूतादि(३) व्यक्तं (मिति)सुखदुःखादिनिमित्तं भवति रूपादिमत्त्वात् तुर्यादिवदिति । धर्माधर्मौ बुद्धिमत्कारणाधिष्ठितौ पुरुषस्योपभोगं कुरुतः करणत्वाद् वास्यादिवदिति । आत्मैवाधिष्ठाता धर्माधर्मयोर्भविष्यतीति चेत् ?—यस्य तौ धर्माधर्मौ स एवाधिष्ठाता भविष्यतीति न युक्तम् ? प्राक् कार्यकरणोत्पत्तेः तदसम्भवात्—यावत् कार्यकरणसङ्घातो नोपजायते पुरुषस्य तावदयमज्ञः

(१) न प्रवर्तते—पा० ४ पु० ।
(२) बुद्धिमत्कारणाधिष्ठितमिति—पा० ४ पु० ।
(३) महाभूतानि—पा० ४ पु० ।

उपसन्धानादपि उपलभ्यानपि तावद्रूपादी(१)न्नोपलभते कुतोऽनुपलभ्यौ धर्माधर्मावुपलप्स्यत इति । यदि पुरुषः स्वतन्त्रः प्रवर्तेते न दुःखं कुर्यात् न हि कश्चिदात्मनो दुःखमिच्छतीति । पश्चात्पनो(ऽङ्गो)पघातं शिरश्छेदादि वा करोति(२) तद्वैकल्पे मायणे(३) वा हितबुद्धिः प्रवर्तते इति । यदि पुनर्धर्माधर्माभ्यामेवाधिष्ठिताः परमाणवः प्रवर्तेरन् ? न युक्तमेतदचेतनत्वात्—न हि किञ्चिदचेतनं स्वतन्त्रमधिष्ठायकं दृष्टमिति । अभ्युपगम्यापि च धर्माधर्मयोः परमाणुप्रवृत्तिसामर्थ्यं ? न करणस्य केवलस्य क्रियानिर्वृत्तावसामर्थ्यात्—न हि करणं केवलं क्रियां निर्वर्तयदुपलभ्यते । अथ परमाण्वपेक्षाभ्यां(४) धर्माधर्माभ्यां क्रियते ? तदपि न युक्तमदृष्टत्वात्–न हि कर्मकरणाभ्यां क्रियां जन्यमाना कचिदपि पश्याम इति । आत्मा कर्ता भविष्यतीति ? उक्तमेतदज्ञत्वादिति । अकारणोत्पत्तिर्भविष्यतीति ? न युक्तमदृष्टत्वादिति । न चान्या गतिरस्ति, तस्माद्बुद्धिमत्कारणाधिष्ठिताः परमाणवः कर्माणि च प्रवर्तन्त इति ।

क्रियानावेशादकारणमिति चेत् ? अथ मन्यसे ये खलु कर्तारो भवन्ति ते क्रियाविष्टाः कुलालादय इति, क्रियारहितश्चेश्वरस्तस्मादकारणमिति ?, न विकल्पानुपपत्तेः–ईश्वरो निष्क्रिय इति कां क्रियामधिकृत्योच्यते ?। द्वयी हि नः क्रिया उत्क्षेपणादिका चाख्यातशब्दवाच्या च । यद्याख्यातशब्दवाच्यामधिकृत्योच्यते ? तदाऽसिद्धो हेतुः स्वातन्त्र्याभ्युपगमात्–स्वातन्त्र्यं हि भ-

(१) विषयान्—इति अधिकम् ४ पु० ।
(२) सोऽपि—अधिकम् ४ पु० ।
(३) प्रधाने—पा० ४ पु० ।
(४) परमात्मापेक्षाभ्यां—पा० ४ पु० ।

गत्वति निरपपास्ति । किं पुनः स्वातन्त्र्यम् ? अन्यकारकाप्रयोज्यत्वमितरकारकप्रयोक्तृत्वं च, तदुक्तं कारकाणि वर्णयद्भिरिति । अथोत्क्षेपणादिकामधिकृत्योच्यते निष्क्रिय इति ? तदानेकान्तः–क्रियावच्च कारणं दृष्टं निष्क्रियं चेति–कदाचिद्द्रव्याणि उपरतक्रियाणि द्रव्यमारभन्ते संयोगात् निवृत्ते कर्मणि संयोगोपकरणानि द्रव्याणि द्रव्यमारभन्त इति निष्क्रियाणामारम्भः । यदा च युगपद्बहूनि द्रव्याणि संहन्यन्ते तदाऽसाधारणकार्यव्यभृत्तेभ्यः संयोगेभ्यः एकमेव द्रव्यमुत्पद्यते । एकावयवविभागे तु द्रव्यनिवृत्तौ शेषाणि द्रव्यान्तराणि द्रव्यमारभन्त(१) इति निष्क्रियाणामारम्भः । कानिचित् पुनः क्रियावन्त्यारभन्ते यदान्यतरकर्मजात् संयोगान्निवृत्ते कर्मणि इतरस्मिन् द्रव्ये कर्मनिवृत्तिसमकालमेव द्रव्यमुत्पद्यते तदा क्रियावता द्रव्येणारम्भात् क्रियावतामारम्भः विरोधश्चोत्क्षेपणादिकायाः क्रियायाः अनभ्युपगमादिति ।

न कारणमीश्वरः विकल्पानुपपत्तेः–कर्ता चेदीश्वरः किं सापेक्षः करोति उत निरपेक्ष इति ? किं चातः ? यदि सापेक्षः ? येन करोति तस्याकर्ता, एवमन्यत्रापि प्रसङ्गः तदपि साधनं येन करोति तस्याकर्तेति ? । अथायं किञ्चिदनपेक्ष्य करोति ? तद्वदन्यत्रापि प्रसङ्गः–अथायं सर्वमनपेक्ष्य करोति(२) एवमपि पुरुषकर्माफलं भवेत् अनिर्मोक्षश्च प्रसज्येत यश्चाकर्मनिमित्ते(३) सर्गे दोषः(४) स इहापि प्रसज्यत इति ? निरपेक्षकर्तृत्वस्यानभ्युपगमात् धर्माधर्मविफलत्वादिदोषो नास्ति न चाकर्मनिमित्ते सर्गे दोष इति । येन करोति तस्या-

(१) मुत्पादयन्त इति–पा० ४पु० । (२) तस्याकर्तेति–पा० ४पु० ।
(३) यस्याकर्मनिमित्ते–पा० ४ पु० । (४) उक्त–इत्याधिकम् ४पु०।

करोति चेत् ? नानेकान्तात्—नायमेकान्तोऽस्ति यो येन करोति स तन्न करोतीति यथाऽनेकशिल्पपर्यवदातः पुरुषः करणान्तरोपादानो वास्यादि करोति, वास्याद्युपादानो दण्डादि(१) करोति, तदुपादानो घटादि, न च पर्यायकर्तृत्वे सति अकर्तृत्वं, तथेश्वरोऽपि धर्माधर्मोपादानः शरीरसुखदुःखादि, आत्ममनःसंयोगशुद्धाशुद्धाभिसन्धिसाधनश्च धर्माधर्मौ, सुखदुःखस्मृत्यपेक्षः तत्साधनाद्यपेक्षश्च शुद्धमशुद्धं चाभिसन्धिमिति । यदा करोति तदा साधनस्याकर्तेति चेत् ?—अथ मन्यसे यदाऽयं साध्यं (यत्) किञ्चिद्दृष्टं निर्वर्तयति तदा येन साधयति तस्याकर्ता प्रसज्यत इति ? । नैतदेवं, न ब्रूमः सर्वानर्थानयमेकस्मिन् काले करोतीति, अपि तु पर्यायेण, पर्यायकर्तृत्वे चायमदोषः । यदादौ करोति तस्यासाधनोत्पत्तिरिति चेत् ?—अथ मन्यसे यदि शरीरादिकर्तृत्वं धर्माधर्माद्यपेक्षस्य, अथ यदादौ करोति(२) कथं तत् ?, आदेरनभ्युपगमाददोषमेतत्—अनादिः संसार इति प्रतिपादितमेतत्, धर्माधर्मसाफल्यं चैवम्—यदि चानादिः संसारः सापेक्षश्च कर्ता, एवं प्राण्यन्तरसमवायिनां धर्माधर्माणां साफल्यम् ।

अथायमीश्वरः कुर्वाणः किमर्थं करोति ?—लोके हि ये कर्तारो भवन्ति ते किञ्चिदुद्दिश्य प्रवर्तन्ते इदमाप्स्यामि इदं हास्यामि चेति, न पुनरीश्वरस्य हेयमस्ति दुःखाभावात् नोपादेयं वशित्वात् ? । क्रीडार्थमित्येके—एकेतावद् ब्रुवते क्रीडार्थमीश्वरः सृजतीति ? नन्वेतदयुक्तम् क्रीडा हि नाम रत्यर्थं भवति विना क्रीडया रतिमविन्दताम्, न च रत्यर्थी भगवान् दुःखाभावादिति । दुःखिनश्च सुखोपगमार्थं क्री-

(१) घटादि—पा० ४ पु० ।

(२) तस्यासाधनात्—इत्याधिकम् ४ पु० ।

इति। विभूतिख्यापनार्थमित्यपरे—जगतो वैश्वरूप्यं ख्यापनीयमित्यपरे मन्यन्ते। एतदपि तादृगेव—न हि विभूतिख्यापनेन कश्चिदतिशयो लभ्यते न चाख्याख्यापनेन किञ्चिद्धीयत इति। किमर्थं तर्हि करोति? तत्स्वाभाव्यात् प्रवर्तत इत्यदुष्टम्—यथा भूम्यादीनि धारणादिक्रियां तत्स्वाभाव्यात् कुर्वन्ति तथेश्वरोऽपि तत्स्वाभाव्यात् प्रवर्तत इति प्रवृत्तिस्वभावकं तत्तत्त्वमिति।

तत्स्वाभाव्यात् सतत प्रवृत्तिः(१) इति चेत्?—अथ मन्यसे यदि प्रवृत्तिस्वभावकं तत्त्वं प्रवृत्तिनिवृत्ती न प्राप्नुतः न हि प्रवृत्तिस्वभावके तत्त्वे निवृत्तिर्युज्यत इति, क्रमेणोत्पत्ति(२)र्न प्राप्नोति तत्त्वस्यैकरूपत्वात् इदमिदानीं भवत्विदमिदानीं न भवत्विति(३) न युक्तम्—न ह्येकरूपात् कारणात् कार्यभेदं पश्याम इति?। नैष दोषः बुद्धिमत्त्वेन विशेषणात् बुद्धिमत्तत्त्वमिति प्रतिपादितम्—बुद्धिमत्तया च विशिष्यमाणं सापेक्षं च न सर्वदा प्रवर्तते—न सर्वमेकस्मिन् काले उत्पादयति यस्य कारणसान्निध्यं तद्भवति यदसन्निहितकारणं तन्न भवति, न च सर्वस्य युगपत्कारणसान्निध्यमस्ति, अतः सर्वस्य युगपदुत्पादो न प्रसक्तः, स खलु प्रवर्तमानो धर्माधर्मयोः परिपाककालमपेक्षते कारणान्तरोत्पादं तद्भागिनां च सत्त्वानां तत्र(४) सन्निधानं तद्भागिसत्त्वधर्माधर्मपरिपाकं च तदप्रतिबन्धं चेति।

यद् तदीश्वरस्यैश्वर्यं किं तन्नित्यमनित्यमिति?। यद्यनित्यं तस्य कारणं वाच्यं(५) यस्य चानित्यमैश्वर्यं तस्य कारणभेदो भवति अणिमादेः एवमन्येषामपीत्यनेक ईश्वरः प्रसज्यत इति?।

---

(१) प्रवर्ततइति—पा० ४ पु०। (२) क्रमेण चोत्पत्ति—पा० ४ पु०।
(३) माभूदिति—पा० ४ पु०। (४) तत्र तत्र—पा० ४ पु०।
(५) वक्तव्यम्—पा० ४ पु०।

अथानेकत्वे किं बाध्यत इति ? एकस्मिन् वस्तुनि व्याहतकामयोरीश्वरयोः प्रवृत्तिर्न प्राप्नोति अथैकमितर अतिशेते ? योऽतिशेते स ईश्वरः नेतरः(१) इति । अथ नित्यमैश्वर्यं ? धर्मवैयर्थ्यं न तद्धर्माद्भवतीति ?। नित्यमिति ब्रूमः । न च धर्मवैयर्थ्यं दोषः तस्य, यो धर्म ईश्वरे नासौ तत्रैश्वर्यं करोति, किन्तु प्रत्यात्मवृत्तीन् धर्माधर्मसञ्चियानुगृह्णाति, न चेश्वरे धर्मोऽस्तीत्यचोद्यमेतत् ।

तत्स्वभावानवधारणात् सन्देहः ईश्वरः किं द्रव्यमाहो गुणादीनामन्यतम इति ? । द्रव्यं बुद्धिगुणत्वाद्द्रव्यान्तरवद् । बुद्धिमत्त्वात् तर्हि आत्मान्तरमिति ? नात्मान्तरं गुणभेदात्—तथथा गुणभेदे सति पृथिव्यादयो नात्मानः तथा गुणभिन्न ईश्वरस्तस्मादसावपि नात्मान्तरमिति । कः पुनरे तस्य भेदः ? । एके तावद् ब्रुवते धर्मज्ञानवैराग्यैश्वर्याण्यतिशयवन्ति तस्मिन्निति नित्यत्वमतिशयः । एतत्तु न बुद्ध्यामहे यथा बुद्धिमत्तायामीश्वरस्य प्रमाणसद्भावो न चैवं धर्मादिनित्यत्वे प्रमाणमस्ति, न चाप्रामाणिकं प्रतिपत्तुं शक्यम्, अतिशयस्तु बुद्धिनित्यत्वं गुणभेदः तत्र हि नित्या बुद्धिः सङ्ख्यादयश्च सामान्यगुणाः षड्गुण(२) आकाशवदीश्वर इति । अथास्य बुद्धिनित्यत्वे किं प्रमाणमिति ? । नन्विदमेव—बुद्धिमत्कारणाधिष्ठिताः परमाणवः प्रवर्तन्त इति ? बुद्धिमत्तायामेतत् साधनं सा पुनर्नित्येति कुतः ? प्रत्यर्थनियमासम्भवात्—ये खलु प्रत्यर्थनियता बुद्धिभेदास्ते शरीरादिकारणसन्निधाने सति भवन्ति, न त्वि-यं(३) प्रत्यर्थनियता युगपदनेककार्योत्पत्तिदर्शनात् यथा स्थावर-

(१) इतरो नेश्वर इति—पा० ४ पु० ।
(२) न चाप्रामाणिकं शक्यम्—इत्यधिकम् ४ पु० ।
(३) न चेयं—पा० ४ पु० ।

भेदस्यानेकस्य युगपदुत्पाद इति । स च प्रत्यर्थनियतबुद्धिभेदे-ष्वीश्वरस्य न युक्तः संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धय एव तस्य गुणाः ।

अथ बुद्धिमत्तयेश्वरस्य(१) शरीरयोगमपि प्रतिपद्य-ते ? तेनापि प्रतिपद्यमानेन शरीरादयो नित्या अनित्या वा अवश्यमेषितव्याः । यद्यनित्या ? धर्माधर्मसद्भावोऽभ्युपेयः तद-भ्युपगमे च तत्तन्त्रत्वादीश्वरो नेश्वरः स्यात् । अथ नित्यान् शरीरादीन् कल्पयसि ? एवमपि दृष्टविपरीतं कल्पितं भवति दृष्ट-विपर्ययं प्रतिपद्यमानेन बुद्धेर्नित्यत्वं(२) प्रतिपत्तव्यम् । अथ स-न्तानवर्तिनीमनेकां बुद्धिमीश्वरे प्रतिपद्यसे ? एवमपि न युगपदु-त्पादः स्थावरादीनां(३) प्राप्नोति । अथ (ताः) सन्तानवर्तिन्यः सर्वार्थाः(४) बुद्धयो भवन्ति ? एवमपि दृष्टविपरीतं कल्पितं भव-ति । एवं च कल्पयता बुद्धिनित्यत्वमेव प्रतिपत्तव्यम् । एवा यद्येतत् स्यात् नित्या वा सन्तानवर्तिनी ( वा सन्तानवर्तिनी ) न युक्ता । यदि गुणभेदाद्भेदः यदभिन्नगुणं तदेकं प्राप्नोति य-था दिक्कालाविति ? नानेकान्तात्–गुणभेदान्नानात्वं ब्रूमः न पुनर्गुणाभेदादेकत्वमिति–तथाहि अभिन्नगुणानां घटादीनां ना-नात्वमिति, दिक्कालयोर्गुणाभेदे ऽपि कार्यभेदान्नानात्वमिति । न च बुद्धिमत्तया विनेश्वरस्य जगदुत्पादो घटत इति । सा च बुद्धिः सर्वार्थाऽतीतानागतवर्तमानविषया प्रत्यक्षा नानुमानि-की–न तत्रानुमानं नागम इति, ज्ञाननित्यत्वाच्च न संस्कारः–नि-त्यं विज्ञानमीश्वरस्येति न तत्र संस्कारो विद्यत इति संस्का-

(१) बुद्धिमत्त्वमीश्वरस्य—पा० ४ पु० ।
(२) बुद्धेरेव—पा० ४ पु० । (३) व्यवस्थादीनां—पा० ४ पु० ।
(४) सन्तानवर्तिन्योऽर्थाः—पा० ४ पु० ।

राभावाद्बुद्ध्यनिसत्त्वाच्च न स्मृतिः, स्मृत्यभावाच्च नानुमानं, न दुःखमधर्मस्याभावात्, अत एव न वैराग्यमिति दुःखाभावाच्च विरज्यत इति, अत एव न द्वेषो दुःखाभावादिति । इच्छा तु विद्यते ऽप्रतिहताऽव्याहता सर्वार्थेषु यथा बुद्धिरिति ।

अथ किमयं बद्धो मुक्त इति ? । न बद्धो दुःखाभावादेव, अबद्धत्वाच्च मुक्त इति–बन्धवान् मुच्यत इति, न च भगवति बन्धनमस्तीति अतो न मुक्त इति । आत्मान्तराणामसम्बन्धाद्धिष्ठातृत्वमनुपपन्नमिति चेत् ?–अथ मन्यसे ऽर्थान्तरसमवायिनो ये धर्माधर्मास्ते न साक्षादीश्वरेण सम्बद्ध्यन्ते न पारम्पर्येण नचाऽसम्बद्धमधिष्ठातुं शक्यते न चानाधिष्ठितयोर्धर्माधर्मयोः प्रवृत्तिर्युक्तेति ? । तच्च न, अजसम्बन्धोपपत्तेः—अजः सम्बन्ध आत्मान्तराणामित्येके इच्छन्ति न चैतदिह प्रतिषिध्यत इति अप्रतिषेधादुपात्तः स इति । ते त्वजं सम्बन्धं प्रमाणतः प्रतिपादयन्ति व्यापकैराकाशादिभिः सम्बद्ध ईश्वरः मूर्त्तिद्रव्यसम्बन्धित्वात् घटवादिति–यथा घटादि मूर्तिमता घटादिना सम्बन्धित्वेन व्यापकैराकाशादिभिः सम्बद्ध्यते तथेश्वरोपि मूर्तिमत्सम्बन्धीति तस्मादयमपि व्यापकैराकाशादिभिः सम्बद्ध्यत इति ।

स पुनरात्मेश्वरसम्बन्धः किं व्यापकोऽव्यापकोवा इति ? अर्थाभावादव्याकरणीयः प्रश्नः । आत्मेश्वरसम्बन्धोऽस्तीत्येतदेव(१) शक्यते वक्तुम् । स पुनरीश्वरात्मानौ व्याप्नोति न व्याप्नोतीति न व्याक्रियते । ये ऽप्यज संयोग नेच्छन्ति तेषामप्यणुमनःसंयोगोपपत्तेरस्ति सम्बन्धः यानि मत्सात्ममनांसि तानि सर्वाणीश्वरसम्बद्धानीत्यतः सम्ब-

(१) इत्येव च—पा० ४ पु० ।

द्धसम्बन्धोपपत्तेरात्मान्तराण्यधितिष्ठति यथाऽऽत्मद्धस्तसंयोगप्रय-त्नाभ्यां हस्ते कर्म भवति उत्पन्नकर्मको हस्तः सन्दंशादिना सम्बध्यते तत्सम्बन्धादयःपिण्डाद्यधितिष्ठति । यदि तर्हि स-र्गादावीश्वरस्य कारणत्वे ऽयं न्यायोऽभिहितः इदानीमीश्वरो न कारणमिति प्राप्तम् ? इदानीमपि ॥ एष न्यायः–मृतशरीरिणां यौ धर्माधर्मौ तौ बुद्धिमत्कारणाधिष्ठिताविति समानो न्यायः। बुद्धिमत्कारणाधिष्ठितानि स्वासु स्वासु धारणादिक्रियासु म-हाभूतानि वाय्वन्तानि प्रवर्तन्ते अचेतनत्वाद्वास्यादिवत् । एवं कार्यत्वात् तृणादीनि पक्षीकृत्य दर्शनस्पर्शनविषयत्वादीति व-क्तव्यम् । एवं यत्र यत्र विप्रतिपत्तिः कार्यत्वं च तत्तदनेनै-व न्यायेनानेन दृष्टान्तेन वास्यादिना पक्षयित्वा साधयित-व्यम् । आगमाच्च–आगमादपि श्रूयते ईश्वरः कारणम्—

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥
यदा ॥ देवो जागर्ति तदेदं चेष्टते जगत् ।
यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति ॥

इति ईश्वरोपादानताप्रकरणम् ।

अपर इदानीमाह—

**अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्श-नात् ॥ २२ ॥**

अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् । यथा कण्टकतैक्ष्ण्यादि निर्निमित्तं च उपादानवच्च तथा शरीरादिसर्गोऽपि । तदिदं दृष्टान्तसूत्रम् । कः पुनरत्र न्यायः ? अनिमित्ता रचनाविशेषाः शरीरादयः संस्थानवत्त्वात्

कण्टकादिवदिति । न, अनुपलभ्यनिमित्तानामनुमानतो निमित्तोपलब्धेः ?—यस्य निमित्तं प्रत्यक्षतो नोपलभ्यते तस्यानुमानतः प्रत्येतव्यम्, कुतः ? निमित्तवद्द्रव्यसामान्यात्—यानि खलु निमित्तवन्ति द्रव्याणि संस्थानविशेषवन्ति तानि घटादीनि, संस्थानविशेषवच्चशरीरं कण्टकादयश्च, तस्मात् निमित्तवन्त इति ? । उक्तं चात्र । किमुक्तम् ?पूर्वकृतफलानुबन्धात् तदुत्पत्तिरिति । न चोभयपक्षसम्प्रतिपन्नं संस्थानविशेषवदनिमित्तं दृष्टमिति ।

अपरे तु—

**अनिमित्तनिमित्तत्वान्नानिमित्ततः ॥ २३ ॥**

अनिमित्तनिमित्तत्वान्ना ऽनिमित्तत इति परिहारं वर्णयन्ति ॥

अनिमित्तमेव निमित्तं यतश्चोत्पत्तिस्तन्निमित्तमिति । अनिमित्तनिमित्तत्वात् नानिमित्तत उत्पत्तिरिति ।

एतच्च न—

**निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः ॥ २४ ॥**

निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः ॥ अन्यन्निमित्तमन्यच्च निमित्तप्रत्याख्यानमिति । न च प्रत्याख्यानमेव प्रत्याख्येयं भवति निमित्तमित्यर्थाभ्यनुज्ञा अनिमित्तमिति तस्य प्रतिषेधः अभ्यनुज्ञाप्रतिषेधयोश्चैकत्वमयुक्तमिति । स खल्वयं वादोऽकर्मनिमित्तः सत्त्वसर्ग इति एतस्मान्न भिद्यत इति । अभेदे तु तत्प्रतिषेधेनैव प्रतिषिद्धो वोद्धव्यः ।

कण्टकादीनां चानिमित्तं जन्मेति ब्रुवाणः प्रष्टव्यः—किं कण्टकमात्रस्यानिमित्तं जन्म उत सर्वस्येति ? । यदि कण्टकमात्रस्यानिमित्तं जन्म ? तच्छेषेण(१) दृष्टान्तेन शक्यं प्रतिपादयितुं निमि-

(१) निमित्तं जन्म तच्छास्त्रेण—पा० ४ पु० ।

वदिति । अथ सर्वमनिमित्तमित्ययं पक्षस्तथापि व्याघातः प्रतिपाद्यप्रतिपादकन्यायस्याभ्युपगमात्—सर्वं चानिमित्तं प्रतिपादयसि चेति व्याघातः । वाक्योपादानाच्च व्याघातः—अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिवदितिवाक्यं प्रतिपादकमुपादीयते न च निमित्तमस्तीति व्याघातः । अनिमित्ततो भावोत्पत्तिरिति सनिमित्ता भावोत्पत्तिरिति च वाक्ये यद्यनयोरर्थभेदं प्रतिपद्यसे ? वाक्यभेदादर्थभेदप्रतिपत्तिरिति व्याहतं भवति अनिमित्ता भावोत्पत्तिरिति । अथ न(१) वाक्यभेदेनार्थभेदं प्रतिपद्यसे ? वाक्यविशेषोपादानं व्याहतम् यत्किञ्चिद्वाक्यमुपादेयमिति । अनिमित्ता भावोत्पत्तिं प्रतिपद्यमानेन सर्वलोकव्यवहार उच्छिन्नो भवति । अनिमित्ता भावोत्पत्तिरिति च भावमात्रपक्षीकरणे न दृष्टान्तो भवति । अथ शरीराद्येकदेशं पक्षयसि ? तथाप्यन्यतरधर्मासिद्धो दृष्टान्तः संस्थान(२) विशेषवत्त्वस्य विद्यमानत्वात् अनिमित्तत्वस्य चाभावादिति ॥

( इति आकस्मिकत्वप्रकरणम् । )

अन्ये तु मन्यन्ते—

**सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् ॥ २५ ॥**

सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् ॥ किमनित्यं नाम ? यस्य कदाचिद्भावस्तदनित्यम्—उत्पत्तिधर्मकमनुत्पन्नं नास्ति विनाशधर्मकं चाऽविनष्टं नास्ति । किं पुनः सर्वं ? भौतिकं शरीरादिकमभौतिकं च बुद्ध्यादि तदुभयमुत्पत्तिविनाशधर्मकमिति विज्ञायत इति । तस्मात् सर्वमनित्यमिति । सू-

---

( १ ) न—इति नास्ति ४ पु० ।
( २ ) सन्तान—पा० ४ पु० ।

त्रस्य दृष्टान्तार्थत्वात् तस्य सर्वान्तर्भावादुदाहरणाभावः—सर्वमनित्यमिति ब्रूषे ? (१)दृष्टान्ताभावः सर्वस्य पक्षीकृतत्वात् न साध्यमुदाहरणं युक्तम् । उत्पत्तिविनाशधर्मकत्वादिति चायं हेतुरव्यापकः—यदि सर्वं पक्षयित्वा उत्पत्तिविनाशधर्मकत्वमुपादत्से परमाण्वाकाशादिषु तद्गुणेषु च केषुचित् सामान्यादिषु नोत्पत्तिविनाशधर्मकत्वमस्तीति हेतुरव्यापकः ॥

नानित्यता नित्यत्वात् ॥ २६ ॥

नानित्यता नित्यत्वात् ॥ सर्वमनित्यमेवेति ब्रुवाणः प्रष्टव्यः किं सर्वस्यानित्यता नित्या आहोस्विदनित्येति । यद्यनित्यता नित्या ? न तर्हि सर्वमनित्यम् । अथानित्या ? अनित्यताया अभावात् (२)सर्वमनित्यमिति व्याहतो हेतुः ॥

तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत् ॥ २७ ॥

तदनित्यत्वमग्नेर्दाह्यं(३) विनाश्यानुविनाशवत् । यथाऽग्निर्दाह्यं विनाश्यानुविनश्यति एवमनित्यतापि सर्वं विनाश्यानुविनश्यति ।

अयं च खलु वादः सर्वमनित्यमिति, नित्यं व्याचष्टे—

नित्यस्याप्रत्याख्यानं यथोपलब्धिव्यवस्थानात् ॥२८॥

नित्यस्य प्रत्याख्यानं न युक्तं यथोपलब्धि व्यवस्थानात् । यत्र यत्राऽयं हेतुरुपलभ्यते तत्र तत्र हेतुसामर्थ्यादनित्यत्वं प्रतिपद्यामहे यत्र पुनरयं हेतुर्नास्ति तेषामनित्यत्वं कथं प्रतिपत्तव्यम् । अथाकारणकमनित्यं प्रतिपद्यसे ? व्याहतस्तर्हि हेतुः उत्पत्तिविनाशधर्मकत्वादिति—अनित्यमिति ब्रुवाणेनावश्यं नित्यमभ्युपेयं नञः प्रसज्यप्रतिषेधपर्युदासविषयत्वात्—अयं खलु नञ्

(१) मुत्पत्तिविनाशधर्मकत्वादिति ब्रूषे—पा० ॥ पु० ।
(२) स्वभावात्—पा० ४ । (३) दाह्यत्वमिति क्वचित् ।

प्रवर्तमानः प्रसज्यप्रतिषेधे वर्तते पर्युदासे वा तथा चोत्तरपदसिद्धिः यदि नित्यं न भवतीत्यनित्यं तर्हि यदन्यत्र भवति तदन्यत्र प्रतिषिध्यत इति सिद्धमुत्तरपदम् । अथ नित्यान्यदद्दोनित्यमिति तथाप्युत्तरपदेन भवितव्यम् नासत्युत्तरपदार्थे तस्मादन्यत्वं सिद्ध्यतीति । अनित्यताभावाच्च सर्वमनित्यमिति न दोषः अनित्यताया धर्मत्वेनाभ्युपगमात्—अनित्यत्वं नाम धर्मः सोऽसति धर्मिणि न भवतीति एवं च सति सर्वस्यानित्यत्वं न दोष इति । अथ पुनरुत्पत्तिविनाशधर्मकेणानित्येन सिद्धेन शेषं सन्दिह्यमानानित्यत्वं विपरीतनित्यत्वं च सत्त्वादनित्यमिति साधयेत् तस्याप्युत्तरपदसिद्धया नित्यत्वसिद्धिरिति प्रतिज्ञादोषाद्वाक्यं निवर्तत इति ॥

( इति सर्वानित्यतानिराकरणप्रकरणम् । )

अयमपर एकान्तः—

**सर्वं नित्यं पञ्चभूतनित्यत्वात् ॥ २९ ॥**

सर्वं नित्यं पञ्चभूतनित्यत्वात् । भूतमात्रमिदं सर्वं तानि च नित्यानि भूतोच्छेदानुपपत्तेः सर्वं नित्यमिति ॥

**नोत्पत्तिविनाशकारणोपलब्धेः ॥ ३० ॥**

नोत्पत्तिविनाशकारणोपलब्धेः । उत्पत्तिकारणं भावानामुपलभ्यते विनाशकारणं च तदुभयं नित्यत्वे न स्यात् न हि नित्यं नाम जायते विनश्यति वा ॥

**तल्लक्षणावरोधादप्रतिषेधः ॥ ३१ ॥**

तल्लक्षणावरोधा(१)दप्रतिषेधः । यदिदमुत्पद्यते विनश्यतीति च मन्यसे न तद्भूतलक्षणहीनं गृह्यते भूतलक्षणावरोधात्(२) सर्वं

( १ ) वोधा-पा० ४ पु० । ( २ ) वोधात्-पा० ४ पु० ।

नित्यमिति । सर्वं नित्यमिति च (१)ब्रुवाणो न किञ्चिज्जायते न विनश्यतीति प्रतिपद्येत, तत्प्रतिपत्तौ च हिताहितप्राप्तिपरिहारार्थोऽस्य परिस्पन्दो व्यर्थ आपद्येत, सर्वस्य च पक्षीकरणाद्दृष्टान्ताभावः वाक्योपादानं च व्याहतम् । यदिदं वाक्यं(२) परप्रतिपादनायोपादीयते सर्वं नित्यं पञ्चभूतनित्यत्वादिति, अनेन वाक्येनायं किङ्करोति—किमसिद्धं साधयति उत सिद्धं निवर्तयति ? । यदि तावदसिद्धं साधयति ? केयं सिद्धिर्वाक्येन(३) प्रतिपाद्यते । यदि विज्ञानं? व्याहतं भवति सर्वं नित्यं विज्ञानं च जायत इति । अथ प्रतिपत्तिर्न क्रियते का तर्हि सिद्धिः? या प्रवर्तमानं साधनं करोति अव श्यं कारकेणापूर्वं किञ्चिन्निष्पाद्यं तन्निष्पत्तेर्व्याघातः कारकत्वं वा निवर्तते न हि नित्यस्य किञ्चित् कर्तव्यमस्ति । अथ सिद्धं निवर्तयतीति पक्ष आश्रीयते ? एतस्मिन्नपि पक्षे नित्यं निवर्तते चेति व्याघातः । अथ तिरोभवतीति ? तिरोभावे ऽप्यवश्यमपूर्वोत्पत्तिः पूर्ववस्तुविनाशो वाभ्युपेय इति सर्वथा न व्याघातान्मुच्यसे—यस्मागनुपलभ्यरूपं पश्चादुपलभ्यते तस्यावश्यमपूर्वोत्पत्तिर्वा पूर्ववस्तुविनाशो वाभ्युपेय इति(४) तदभ्युपगमे चव्याघातः ।

यत्पुनरेतद्भूतलक्षणाविरोधात् सर्वं नित्यमिति, नान्यथा तदुपपत्तेः—भूतलक्षणयोगोन्यथा सम्भवतीति—

नोत्पत्तितत्कारणोपलब्धेः ॥ ३२ ॥

उत्पत्तिकारणोपलब्धेः ॥ कारणसमानगुणोत्पत्तिश्च दृश्यते कारणं च दृश्यते न चैतदुभयं नित्यविषयम्, न हि नित्यस्योत्पत्तिर्नापि नित्यस्य कारणमस्ति, अस्ति चैतदुभयं, तस्मात्

(१) सर्वं नित्यं-पा० ४ पु० । (२) वाच्यं-पा० ४ पु० ।
(३) वाच्येन—पा० ४ पु० ।
(४) सर्वथा न व्याघातान्मुच्यसे इति—अधिकम् ४ पु० ।

कारणसमानगुणं कार्यमुत्पद्यत(१) इति कारणसमानगुणोत्पादे च कार्यभूतलक्षणावरोधः सिध्यतीति । विभक्तव्यापि चैतत् व्यक्ताद्व्यक्तानां(२) प्रत्यक्षप्रामाण्यादित्येतस्मिन् सूत्रे । अव्यापकश्चायं हेतुः पञ्चभूतनित्यत्वादिति, । कथं? कर्मादीनामप्राप्तेः—कर्मबुद्धिशब्दादयः पञ्चभूतनित्यत्वादित्यनेन न व्याप्ता इति । ज्ञातुः प्रयत्नदर्शनाच्च व्याघातः—उत्पत्तिविनाशप्रयुक्तस्य ज्ञातुः प्रयत्नो दृष्टः सर्वनित्यत्वे च न युक्तः, प्रसिद्धश्चायमर्थो तद्धर्मा—उत्पत्तिविनाशधर्मा चावयवी प्रतिपादितोऽतोऽयुक्तमेतत् । कथमव्यापकोऽनेकान्तः—पक्षस्यान्तद्रूपे ऽवस्थानात्-पक्षो हि सर्वं (हि)नित्यमिति, तच्च सर्वं भूतलक्षणयुक्तम्(३)अन्यथा च तत्पक्षान्तद्रूपे ऽवस्थानात् न सर्वं भूतलक्षणयुक्तमित्यनेकान्तः ।

स्वप्नविषयाभिमानवन्मिथ्योपलब्धिरिति चेत् ?—अथ मन्यसे यदिदमुत्पद्यते विनश्यति चेति तन्न तत्त्वतोऽस्ति असत्येतस्मिन्नभिमानो भवति उत्पन्नं विनष्टमिति, यथा न स्वप्न विषयाः सन्ति अथ च विषयाभिमानो भवतीति ? न प्रमाणाभावात्—यदिदं गन्धादि घटाद्युत्पत्तिविनाशयुक्तमुपलभ्यते(४) एतन्नास्तीति नास्त्वप्रतिपादकं प्रमाणमभिधीयते न चाप्रामाणिकं शक्यं प्रतिपत्तुम् । यथा च चित्तव्यतिरेकिणो विषयास्तथोपरिष्टाद्वक्ष्यामः । यदि स्वप्नविषयाभिमानवदुत्पत्तिविनाशाभिमानः ? अथ भूतोपलब्धिरपि स्वप्नविषयाभिमानवत् प्रसज्यते । पृथिव्याद्यभावे सर्वव्यवहारविलोप इति चेत् ?—अथ

(१) कार्यमुत्पादयति इत्यधिकं क्वचित् ।
(२) व्यक्ताव्यक्तानां चाविवक्षा इति—पा० २ पु० ।
(३) उक्तम्—इत्यधिकम् ।
(४) घटादिव्यक्तमुपलभ्यते इति पा० २ पु० ।

मन्यसे यदि पृथिव्यादीनि भूतानि न सन्ति ननु पृथिव्याद्याश्रयो व्यवहार उच्छिद्यत इति ? तदितरत्र समानम्—यदि व्यवहारोच्छेदभयाद्भूतानि प्रतिपद्यन्ते तत एवोत्पत्तिविनाशावपि प्रतिपद्यस्व न ह्युत्पत्तिविनाशावन्तरेण कश्चनव्यवहारः सिद्ध्यतीति नित्यानां द्रव्याणामतीन्द्रियत्वात् अविषयत्वाच्चोत्पत्तिविनाशयोः यच्चेदं तदतीन्द्रियम् अविषयश्चोत्पत्तिविनाशयोः तेन स्वप्नविषयाभिमानवत्तदभिमान इत्ययुक्तम् । उत्पत्तिविनाशाभिमान इति च ब्रुवतोत्पत्तिविनाशयोर्विषयो वक्तव्यः । न च सर्वनित्यवादिनामुत्पत्तिविनाशयोर्विषयोऽस्ति । विषयं च प्रत्याचक्षणेन तदनुकारी विपर्ययप्रसङ्गो हेय इति ।

अपरे तु सर्वं नित्यमित्येतदन्यथा वर्णयन्ति—व्यवस्थितस्योपादानस्य धर्ममात्रं निवर्तते धर्ममात्रमाविर्भवति यच्च निवर्तते तन्निवृत्तमप्यस्तीति यच्चाभिर्भवति तस्यागप्याविर्भावादस्ति—

न व्यवस्थानुपपत्तेः ॥ ३३ ॥

न व्यवस्थानुपपत्तेरिति । शेषं भाष्ये । यच्च निवर्तते तन्निवृत्तमप्यस्तीति ब्रुवाणो भवान्प्रष्टव्यो भवति(१) किमुक्तं भवति । निवृत्तमिति ? यदि ब्रूषे पूर्वमुपलब्धं पश्चान्नोपलभ्यत इति । अथ सतोऽनुपलब्धिः किङ्कृता ? यद्यावरणादिकृता ? तदावरणाद्युपलभ्येत । उक्तं चात्र यत्पूर्वमनुपलब्धं पश्चादुपलभ्यते तस्यापूर्वविशेषोत्पादः पूर्वविशेषप्रत्ययोऽभ्युपेय इति, तदभ्युपगमे च व्याघातः । यच्चोक्तं यच्चाविर्भवति तत् प्रागप्याविर्भावादस्ति ? तन्न व्याघातात्—आविर्भवति

(१) जायते—पा० ४ पु० ।

विद्यते चेति व्याहतम् । अथाविर्भावोऽभिव्यक्तिः तथापि पूर्वदोषानिवृत्तिरभिव्यक्तिरसतीति ॥

( इति सर्वनित्यत्वनिराकरणम् । )

अयमपर एकान्तः—

सर्वं पृथग्भावलक्षणपृथक्त्वात् ॥ ३४ ॥

सर्वं पृथग्भावलक्षणपृथक्त्वात् । भावस्य लक्षणं शब्दः लक्ष्यते ऽनेन भावः इति । सर्वो भावसमाख्याशब्दोऽनेकविषयो यथा कुम्भ इति भावसमाख्याशब्दोऽनेकास्मिन्नवयवसमूहे वर्तत इति । यथा कुम्भशब्दः एवमन्ये ऽपि शब्दा इति । अस्य प्रयोगः कुम्भशब्दोऽनेकविषयः एकपदत्वात् सेनाशब्दवदिति । पदश्रवणादनेकार्थावगतेः—यस्मात् पदश्रुतेरनेकोर्थोऽवगम्यते यथा सेनेति ॥

नानेकलक्षणैरेकभावनिष्पत्तेः ॥ ३५ ॥

नानेकलक्षणैरेकभावनिष्पत्तेः । अनेकलक्षणैरिति मध्यमपदलोपी समासोऽनेकविधलक्षणैरिति । गन्धादिभिश्च गुणैर्बुध्नादिभिश्चावयवैः सम्बद्ध एको भाव उत्पद्यते अतः शब्दादेकावगतौ(१) शेषो ऽनुक्तोऽप्यवगम्यत इति गुणव्यतिरिक्तो गुणीति अवयवव्यतिरेक(२) श्चावयवीति विभक्तन्यायमेतत् । यत् पुनरेकपदत्वादनेकविषयः कुम्भादिशब्द इति ? तन्न, दृष्टान्ताभावात्—न हि कश्चिच्छब्दोऽनेकविषयोऽस्ति, सेनादिशब्दानामनेकविषयत्वेनासिद्धेः । यथा चैकविषयः सेनादिशब्दस्तथोक्तमिति । सर्वस्य पक्षीकरणाद्दृष्टान्ताभावः आधाराधेयभावेनानुपक्तानां

---

(१) एकाधिगतौ—पा० ४ पु० ।

(२) अवयवव्यतिरिक्त—पा० ४ पु० ।

रूपादीनामवयविनश्च ग्रहणादन्यथासिद्धः नञः प्रसज्यप्रतिषेध-पर्युदासविषयत्वेनाव्याख्यानाच्च विरुद्धः(१) अनेकमित्ययं नञः प्रयोगः स चायं प्रसज्यप्रतिषेधपर्युदासविषयत्वेन प्रतिषेधात् प्रकल्प्यते । यदि तावत् प्रसज्यप्रतिषेध एको न भवतीति यः देकत्र प्रतिषिध्यते तदन्यत्र भवति एवं च व्याघातः । अथ पर्युदासपक्षः ? एकस्मादन्यदनेकमिति एवमप्येकमभ्युपगतं भवति न ह्यसत्येकस्मिन् तस्मादन्यदनेकं सिध्यतीति ।

इतश्च—

लक्षण(२)व्यवस्थानादेवाप्रतिषेधः ॥ ३६ ॥

तल्लक्षणव्यवस्थानादेवाप्रतिषेधः । न हि कश्चिदेको भाव इत्ययुक्तः पक्षः(३) कस्मात् ? लक्षणव्यवस्थापनात्(४) न हि कुम्भ इत्युक्ते ऽनेकोऽर्थोऽवगम्यते । कथं नावगम्यते ? एकवचनान्तत्वात्—एकवचनान्त एष शब्दः कुम्भ इति । न च बहुष्वेकवचनं युक्तम् प्रैष(५)सम्प्रतिपत्त्योरेकविषयत्वात् कुम्भमानयेति प्रैष एकविषयो भवति । इतरोऽपि कुम्भशब्दात् प्रतिपद्यैकं कुम्भमानयति त एते प्रैषसम्प्रतिपत्ती एकविषये ज्ञापयतः कुम्भशब्देनैकोऽर्थोऽभिधीयत इति । यास्तु रूपादीनवयवान् प्रतिपद्यते स न शब्दार्थः किन्त्वनुषङ्गः तन्नान्तरीयकत्वादिति । समूहभेदस्य चानवस्थानात्—यत्रावस्थानं तदेकं गवादिघटादिद्रव्याणि समुदितानि प्रतिपद्यमानेन समूहोऽभ्युपेयते स चा-

---

(१) विरूप इति—पा० ४ पु० ।
(२) तल्लक्षण—पा० ४ पु० ।
(३) इत्ययमयुक्तः प्रतिषेधः—पा० ४ पु० ।
(४) व्यवस्थानात्—पा० ४ पु० ।
(५) प्रैष—प्रेष—पा० क्वचित् ।

यं समूह इयन्ति द्रव्याणि एतानि घटादि(१)भावेनावस्थितानीति न व्यवतिष्ठन्ते ऽस्य भेदोऽल्पतर(२)तमत्वेन यत्तत् परमल्पं(३) तदभेद्यं ततो निवर्तत इति । यतश्चायं भेदो निवर्तते तदेकम् । एकं च प्रत्याचक्षाणेनानेकमपि प्रत्याख्येयम् एकसमुच्चयत्वा(४)दनेकस्य । अथ मन्यसे यन्तमभेद्यं परमाणुं प्रतिपद्यसे न रूपादीनां समुदाय इति चत्वारि वा द्रव्याणि पृथिव्यादीनि समुदितानि परमाणुरिति ? । एतस्मिन् वै दर्शने ये रूपादयः समुदितास्ते परमाणुरिति यत्परमाणौ रूपं न कस्य समुदाय इति वक्तव्यम् । एवं शेषेषु गुणेषु चत्वारि द्रव्याणि समुदितानि परमाणुरिति ब्रुवाणेन चतुष्टस्य एकसमुच्चयनिमित्तत्वात् यदेकं पृथिव्यादि स कस्य समुदाय इति वक्तव्यम् । अथानन्तं समुदायं प्रतिपद्यसे अष्टौ द्रव्याणि समुदितानि परमाणुरिति ? शास्त्रं व्याहतं भवति—क्वापेऽष्टद्रव्यकोणुरशब्द(५) इति एकानुपपत्तौ नानेकोपपत्तिरित्येतद्वेयम् । यश्चायं हेतुः समूहे भावशब्दप्रयोगादिति उभयतो व्याघाताच्च किञ्चिदेतत् । कथमुभयतो न कश्चिदेको भावः समूहे भावशब्दप्रयोगादिति प्रतिज्ञाहेत्वोर्व्याघातः । यस्मादेकार्थानुपपत्तौ(६) न समूह उपपद्यत इति समूहं चाश्रित्यैकं प्रत्याचक्षाणेन समूह एव प्रत्याख्यातो भवतीति सोऽयमुभयतो व्याघातात् यत्किञ्चनवाद इति । शेषं भाष्ये ॥

( इति सर्वपृथक्त्वनिराकरणप्रकरणम् । )

---

(१) गवादि—पा० ४ पु० । (२) अल्पतर—पा० ४ पु० ।
(३) मन्यं—पा० ४ पु० । (४) समुदाया—पा० ४ पु० ।
(५) णुशब्द—पा० ४ पु० । (६) नानेकाश्च न इत्यधिकं क्वचित् ।

अथायमपर एकान्तः—

**सर्वमभावो भावेष्वितरेतराभावसिद्धेः ॥ ३७ ॥**

सर्वमभावो भावेष्वितरेतराभावसिद्धेः(१) । यावद्भावजातं तत्सर्वमभावः । कस्मात् ? भावेष्वितरेतराभावसिद्धेः । असत्प्रत्ययप्रतिषेधाभ्यां भावशब्दसामानाधिकरण्यात् सर्वमभावः अनुत्पन्नप्रध्वस्तपटवत्—सर्वो भावशब्दोऽसत्समानाधिकरणः प्रतिषेधसमानाधिकरणश्च प्रध्वस्तपटवत् यथा नास्ति पट इति । कथं नास्ति कदा च नास्तीति ? स्थाल्याद्यात्मना ऽनुत्पद्यमानो ध्वस्तश्चेति । सोऽयं घट(२)शब्दोऽसत्प्रत्ययसमानाधिकरणो घटस्यात्यन्तासत्त्वं प्रतिपादयति । तथा च सर्वे भावा असत्प्रत्ययसमानाधिकरणास्तस्मात् सर्वमभाव इति ।

प्रतिज्ञापदयोः प्रतिज्ञाहेत्वोश्च व्याघातः सामानाधिकरण्यमभिन्नविभक्तिकत्वमेकाभिधेयस्योच्चारणमिति भावाभ्युपगमात् तच्छब्दाभ्युपगमाच्च विरुद्धः । यत्सर्वमिति मन्यसे तदभाव इति नासति तत्प्रत्ययेन भवितुं शक्यम् । न च भावप्रत्ययेनाभाव इति च भावः प्रतिषिध्यते नासत्युत्तरपदार्थे नञः प्रयोग इति प्रसज्यप्रतिषेधपर्युदासाभ्यां पूर्ववत् प्रसङ्गः यथाऽनेकपदे ऽनित्यपदे चैवं सर्वपदे ऽभावपदे च व्याघात ऊह्यः । शेषं भाष्ये । सर्वासत्त्वे विभक्तिस्वभावावधारणं वक्तव्यम् । यदि च सर्वमभावो विभक्तिः किंस्वभाविकेति वक्तव्यमेतत् । असत्यां च विभक्तावभिन्नविभक्तिकत्वं सामानाधिकरण्यमिति व्याहतम् । असत्प्रत्ययप्रतिषेधसामानाधिकरण्यमिति ब्रूषे(३) सर्वमभाव इति

(१) इतरेतरसिद्धेः–पा० ४ पु० । (२) स घट–पा० ३ पु० ।
(३) प्रमाण पद–पा० ४ पु० ।

च व्यावर्तयसि न ह्यसदधिकरणं भवति । अधिकरणं हि नाम यद्यत्र वर्तते, तच्चाभावे नास्तीति । सूत्रेण चाभिसम्बन्धः—

न स्वभावसिद्धेर्भावानाम् ॥ ३८ ॥

न स्वभावसिद्धेर्भावानामिति 'स्वेन भावेन भावा भवन्तीति सूत्रार्थः । किं पुनरनेन सूत्रेण क्रियते ? पूर्वसूत्रविरोधश्चोद्यते । कथमिति ? भावेष्वितरेतराभावसिद्धेरित्यभावोभवताऽभिधीयते तथा चाभिदधानः(१) स्वभावतोभावानभ्युपैषि, विशेषणवैयर्थ्यं च भावेष्वितरेतराभावसिद्धेरिति(२) सर्वासत्त्वे ह्येवमेव वक्तव्यम् न सन्ति भावा, न पुनरेवं वस्तुं युक्तम् इतरदितरन्न(३) भवतीति । इतरदिति(४) चायं विधानशब्दः न च सर्वस्याभावे विधीयमानं वस्तु सम्भवति यदितरशब्दवाच्यं स्यादिति । इतरवाच्यतां चाभ्युपगम्येतरदितरन्न प्रतिषिध्यत इति स्वभावसिद्धिरभ्युपगता भवति । कश्च स्वो भावो भावानां द्रव्यादीनां ? सदादि सामान्यं क्रियावदादिर्विशेषः स्वर्शपर्यन्ताः पृथिव्याः प्रत्येक मनन्तो भेदः—सामान्यविशेषसमवायादीनां च सामान्यो वैशेषिकश्चान्तर्गणिकोऽनन्तो भेद इति । सोऽयमभावस्य निरुपाख्यत्वात् सम्प्रत्यायकः स्वभावभेदो न स्यात् अस्ति त्वसौ(५) तस्मान्न सर्वमभाव इति । अथवा स्वभावसिद्धेरिति गौरिति प्रयुज्यमाने नाभावः प्रतीयते किन्तु जातिविशिष्टं द्रव्यं, यदि च सर्वमभावः स्यात् गौरिति प्रयुक्ते ऽभावो गम्येत, नत्वभावोगम्यते, तस्मान्न सर्वमभाव इति । अथवा स्वभावसिद्धेरिति असन् अश्वो गवात्मना अनश्वो गौरगौर्गौरिति कस्मान्नोच्यते इति अवचनाद्

(१) चातिदधानः—पा० ■ पु० । (२) इतरेतरासिद्धे—पा० ४ पु० ।
(३) इतरदितरचन्न—पा० १ पु० । (४) इतरवदिति—पा० १ पु० ।
(५) अस्ति त्वयं—पा० ४ पु० ।

गौरिति(१) अगौर्गौरित्युक्ते व्याहतं भवति। यदि व्याघातभयादगौर्गौरिति नोच्यते? हन्त तर्हि सिद्धोऽभावः। कथं तर्हि अयं प्रतिषेधोऽगौरश्व इति? । व्यतिरेकप्रतिषेधे भावेनासत्प्रत्ययस्य सामानाधिकरण्यमिति—यथा न सन्ति कुण्डे बदराणीति कुण्डबदरयोः सम्बन्धः प्रतिपिद्ध्यते न कुण्डे बदरसद्भावः॥

**न स्वभावसिद्धिरापेक्षिकत्वात्॥ ३९॥**

न स्वभावसिद्धिरापेक्षिकत्वात्। न स्वभावसिद्धिरापेक्षिकी यतः न स्वेनात्मना किञ्चित् सिद्धमिति। यथा दीर्घत्वह्रस्वत्वे परापरे चेति।

**व्याहतत्वादयुक्तम्॥ ४०॥**

व्याहतत्वादयुक्तम्। यदि ह्रस्वापेक्षाकृतं दीर्घं? ह्रस्वमनापेक्षिकम्। अथ दीर्घापेक्षाकृतं ह्रस्वं? दीर्घमनापेक्षिकं, परस्परापेक्षयोश्च यदपेक्ष्येतरज्जायते तदनापेक्षिकमिति उभयोरभावः एकस्याभावादिति। अपेक्षायामनपेक्षायां च द्रव्ययोर्न भेदः—यावती एव द्रव्ये ऽपेक्षमाणे तावती एव(२) अनपेक्षमाणे अपि न ह्यन्यतरत्र भेदः। अतिशयग्रहणं कथं यदि द्रव्ययोर्द्वयोरभेदः अपेक्षमाणयोरनपेक्षमाणयोर्दीर्घह्रस्वप्रत्ययः तर्हि न प्राप्नोति? न न प्राप्नोति द्वयोर्ग्रहणेऽतिशयस्य ग्रहणात्—द्वयोस्तावद् द्रव्ययोः प्रत्यर्थनियते द्वे ह्येव बुद्धी भवतः अथ एकस्मिन् विद्यमानमतिशयं गृह्णाति एकस्मिन् विद्यमानं च ह्रस्वत्वम् सोऽयमुभयदर्शने प्रतिसन्धत्ते प्रतिसन्धानप्रत्ययजा त्वस्य बुद्धिरुत्पद्यते अस्मादीर्घमदोऽस्माददो ह्रस्वमिति, न पुनर्वस्तुन

(१) गौरस्तीति—पा० ४ पु०। (२) द्रव्ये—इत्यधिम् ४ पु०।

उत्पादानुत्पादाविति । स्वभावसिद्धौ चासत्या(१)मपेक्षा न प्राप्नोति—यदि स्वभावसिद्धिमन्तरेणापेक्षाभेदाद्दीर्घादिभेदा भवन्ति सर्वमपेक्ष्य सर्वस्य सर्वत्र तथाभूतः प्रत्ययः स्यात् न च रूपरसगन्धस्पर्शप्रत्ययेष्वपेक्षासामर्थ्यमस्ति । न च परिमण्डलौ परमाणू उपलभमान ईश्वरः परमाणुमपेक्ष्य परमाण्वन्तरे दीर्घह्रस्वादिप्रत्ययान् करोति अतो नापेक्षाकृताः प्रत्यया इति ।

सर्वमभाव इति सर्वथा चायं वादो व्याहतः । कुतो(क)व्याघातः ? आदौ तावत् प्रमाणोत्पत्त्यनुपपत्तौ(२) सर्वमभाव इति ब्रुवाणः प्रमाणं पर्यनुयोज्यः । यदि ब्रूते ? व्याहतं भवति । अथ नाभिधत्ते? अर्थोऽस्य न सिध्यति प्रमाणाभावात् । सर्वमभाव इति वाक्यं तस्य यद्यभिधेयमर्थं प्रतिपद्यते पूर्ववद्व्याघातः । अथ न प्रतिपद्यते ? वर्णोच्चारण(३)मात्रमनर्थकमिति । सर्वमभाव इति च वाक्यस्य(४) प्रतिपादयितारं प्रतिपत्तारं च यदि प्रतिपद्यते(५) पूर्ववद्व्याघातः । सर्वमभाव इति सर्व भाव इति च वाक्ये, यद्यनयार्थभेदं प्रतिपद्यते ? व्याहतं भवति । अथ न प्रतिपद्यते ? विशेषोपादानं व्यर्थम् । सोऽयं सर्वाभाववादो यावद्यावद्विचार्यते तावत्तावदुपपत्तिं न सहत इति ॥

( सर्वशून्यतानिराकरणम् । )

---

(१) स्वभावसिद्धावसत्यां–पा० ४ पु० ।

(२) प्रमाणोपपत्त्यनुपपत्तौ–पा० ४ पु० ।

(३) सर्वोच्चारण–पा० ४ पु० ।

(४) वाक्यार्थे–पा० ४ पु० ।

(५) पाद्यते–पा० ४ पु० ।

अथेमे संख्यैकान्तवादाः । सर्वमेकं सदविशेषादित्येवमादि भाष्ये । तेषां प्रतिषेधद्वारकं सूत्रम् ॥

**संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् ॥४१॥**

संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् । संख्यैकान्तानामसिद्धिः कारणस्य प्रतिज्ञातार्थव्यतिरेकात्–सर्वमेकमिति प्रतिज्ञां कृत्वा यदि प्रतिज्ञेयव्यतिरिक्तं साधनं ब्रवीति एकान्तो न सिद्ध्यति तच्च साधनं प्रतिज्ञायाश्चार्थ–इति द्वैतम् । एवं द्वैतादिष्वपीति । अथ प्रतिज्ञेयव्यतिरिक्तं साधनं नास्ति ? एवमप्येकान्तोऽ(स्य वा) न सिद्ध्यति साधनाभावात् न साध्यंसाधनमिति ॥

**न कारणावयवभावात् ॥ ४२ ॥**

न कारणावयवभावात् । कारणस्य साध्यावयवत्वादित्ययं(१) सूत्रार्थः । साध्यावयव एव साधनम्, एवं च सति साध्यव्यतिरिक्तं साधनं नोक्तं भवति न चासाधना सिद्धिरिति ॥

**निरवयवत्वादहेतुः ॥ ४३ ॥**

निरवयवत्वादहेतुः । साध्यावयव एव कारणमित्ययमहेतुः निरवयवत्वात् प्रतिज्ञार्थस्य सर्वमेकमित्येतस्मिन् प्रतिज्ञार्थे नकिञ्चिदपवृज्यते अनपवर्गेण सर्वं पक्षीकृतमिति सर्वस्य निरवयवस्य पक्षीकरणान्न हेतुरस्ति, न च साध्यं हेतुर्भवितुमर्हतीति । आत्मनि च क्रिया विरुध्यते यत्तत्प्रतिपाद्यं तदेव प्रतिपादकमिति न युक्तं न कर्म करणं भवितुमर्हतीति । ते खल्विमे संख्यैकान्ता यदि विशेषकारितस्यार्थभेदस्य प्रत्याख्या-

(१) साध्यावयवत्वादि साधनं नास्ति एवं सत्येकान्तो हायं—पा० ४ पु० ।

नेन वर्तन्ते मिथ्यावादा भवन्ति प्रत्यक्षानुमानागमविरोधित्वात्—प्रत्यक्षोयं गवादिघटादिभेदः अनुमानतोऽपि गम्यते अन्यदन्येनानुमीयते, आगमतोऽपि गम्यते प्रतिपन्नः प्रतिपादयिता अप्रतिपन्नः प्रतिपाद्य(१) इति । अथाभ्यनुज्ञानेन वर्तन्ते ? तथाप्येकान्तत्वं जहाति । अथ सामान्यकारितोऽभेदः विशेषकारितश्च भेद इति प्रतिपद्यते ? तथापि न किञ्चिद्बाध्यते । न च भेदमन्तरेण सामान्यं लब्धावकाशमिति । सामान्यं प्रतिपद्यमानेन(२) भेदोऽभ्युपगन्तव्यः भेदं च(३) प्रत्याचक्षाणेन सामान्यमपि प्रत्याख्येयम् । विशेषानाधारस्य सामान्यस्याविषयत्वात् । ते खल्विमे संख्यैकान्तास्तत्त्वज्ञानप्रविवेकाय परीक्षिता इति ॥

( इति संख्यैकान्तवादप्रकरणम् । )

---

प्रेत्यभावानन्तरं फलमुद्दिष्टं, तस्मिन्—

सद्यः कालान्तरे च फलनिष्पत्तेः संशयः ॥ ४४ ॥

सद्यः कालान्तरे च फलनिष्पत्तेः संशयः । काचित् क्रिया सद्यःफला यथा पचति दोग्धीति तस्याः सद्यः फलमोदनपयसी क्रियानन्तरं भवत इति(४) । काचित् कालान्तरफला यथा कृष्यतिवपतीति तस्याः कालान्तरे फलं न क्रियानन्तरं सस्याधिगम इति । अस्ति चेयं क्रिया अग्निहोत्रं जुहुयादिति ।

---

(१) प्रतिपद्यते पु० २ पा० ।
(२) सामान्यं च प्रतिपद्यमानेन—पा० ४ पु० ।
(३) भेदं वा—पा० ४ पु० ।
(४) भवति इति—पा० ४ पु० ।

तस्याः फले सन्देहः किमियं सद्यस्तापादिफला उत कालान्तरफला ॥

**न सद्यः कालान्तरोपभोग्यत्वात् (१) ॥ ४५ ॥**

न सद्यः(२) कालान्तरोपभोग्यत्वात् । स्वर्गः फलं श्रूयते चोदितया(३) च क्रियया नानर्थिकया भवितुम् । न चायं तापादिकामोऽग्निहोत्रं जुहोति तेनावगम्यते तां हवनादिक्रियामपेक्षमाणादात्ममनःसम्बन्धात् विशुद्धेनाभिसन्धिना अनुगृहीतादात्मनि धर्म उत्पद्यत इति । स च कालान्तरे ऽप्रतिबद्ध्यमानशक्तिः देशाद्यनुगृहीतः फलं ददाति । तच्च पतिते तस्मिन् देहे भवति देहान्तरापन्नस्यातो न सद्य इति ॥

**कालान्तरेणानिष्पत्तिर्हेतुविनाशात्(४) ॥ ४६ ॥**

कालान्तरेणानिष्पत्तिर्हेतुविनाशात् । व्यावृत्ते हवने व्यावृत्ते च पूर्वशरीरे देहान्तरे फलं श्रूयते तत्र विनष्टात् कारणादयुक्तमिति ॥

**प्राङ्निष्पत्तेर्वृक्षफलवत् तत् स्यात् (५) ॥ ४७ ॥**

प्राङ्निष्पत्तेर्वृक्षफलवत् तत् स्यात् । न ब्रूमो विनष्टात् कारणात् कार्यमुत्पद्यते, अपि तु अग्निहोत्रहवनादिलक्षणया क्रियया यथोक्तेन विधिना धर्मो जन्यत इत्युक्तम् । तस्मात् फलमिति यथा फलार्थिना वृक्षस्य मूलसेकादिकर्म क्रियते । न च

---

(१) सूत्रमिदं न्यायसूचीनिबन्धे नास्ति ।
(२) न सद्यः फलम्—पा० ४ पु० ।
(३) चेदितया—पा० ४ पु० ।
(४) निष्पत्तेर्हेतुविनाशात्—पा० ।
(५) वृक्षफलवच्च स्यात्—पा० ४ पु० ।

मूलसेकाद् विनष्टाद् फलेन युक्तं भवितुम्, अपि तु मूलसेकादिकर्म कृतं भोक्तुः कर्मापेक्षं पृथिव्यादिधातुमनुगृह्णाति ॥ उपगृहीत आन्तरेण तेजसा पच्यमानो रसद्रव्यमभिनिर्वर्तयति तद्रसद्रव्यं वृक्षमाफलात् सद्य उपसर्पति तस्मात् पर्णादिफलं निर्वर्तते । एवं च सति विनष्टात् मूलसेकाद फलनिर्वृत्तिः न च मूलसेकादिवैयर्थ्यमिति ॥

तदिदं प्राङ्निष्पत्तेः—

**नासन्न सन्न सदसत् सदसतोर्वैधर्म्यात् ॥ ४८ ॥**

नासन्न सन्न सदसत् सदसतोर्वैधर्म्यात् । प्राङ्निष्पत्तेरुत्पत्तिधर्मकं नासत् उपादाननियमात् असत्त्वे समाने(१) उपादाननियमो न प्राप्नोति । सदपि न भवति विद्यमानस्योत्पत्तिर्व्याहतेति(२) अस्ति चोत्पद्यते चेति व्याहतम् । न सदसत्, सदसतोर्वैधर्म्यात् सदित्यर्थाभ्यनुज्ञा असदिति तस्य प्रतिषेधः अभ्यनुज्ञाप्रतिषेधयोः सामानाधिकरण्यमनुपपन्नम् । तस्मान्न सदसदपि । नाप्युभयविपरीतं कार्यं युज्यते तस्य स्वरूपानिर्देशादिति । न हि तस्य स्वरूपं शक्यं निर्देष्टुमिति ।

प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा— सत्यमिति । कस्मात् ?—

**उत्पादव्ययदर्शनात् ॥ ४९ ॥ (३)**

उत्पादव्ययदर्शनात् । वस्तुनः प्रागनुपलब्धिरूपस्य पश्चादुपलब्धिर्या साऽसदुत्पादे सति युज्यते विनाशश्चोपलब्धरूपस्य पुनरनुपलब्धिरिति । न चैतत् सर्वनित्यवादिनः सम्भवति न

(१) असत्वेन समानेन—पा० ४ पु० ।

(२) विद्यमानस्योत्पादो व्याहन्यते—पा० ४ पु० ।

(३) प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा उत्पादव्ययदर्शनादित्येकमेव सूत्रमिति केचित् ।

हि सत्पक्ष उत्पादो न च विनाश इति । उत्पादविनाशौ च प्रसाधनेन लोको हेयः । अथ लोकोऽयं प्रवर्त्तमानः किमर्थं प्रवर्त्तते ? ननु चायं प्रवर्त्तते इदमाप्स्यामि-इदं हास्यामीति ? सत्यमेवं प्रवर्त्तते न पुनः सत्कार्यवादिनः किञ्चिद्धेयमुपादेयं वा विद्यते । प्रतिज्ञादीनां चावयवानामुपादानं व्यर्थम्—उत्पादव्ययप्रत्याख्यानात्—न किञ्चिन्न जायते न किञ्चिद् विनश्यतीति अवयवानामुपादानं व्यर्थं(१) यदि सत्कार्यप्रतिपत्त्यर्थं प्रतिपत्तेर्विद्यमानत्वाद् व्यर्थमुपादानम् न हि यद्यस्य लोके भवति स तदुपादानमुपादत्ते इति । अथाज्ञानतिरोभावमात्रार्थमुपादानमिति ? एतदपि तादृगेव । न हि अनुपजातविशेषस्याज्ञाननिवृत्तिर्युक्तेति । अथाभिव्यक्त्यर्थमुपादानमिति ? केयमभिव्यक्तिर्नाम ? या उपादानेन क्रियते ? यदि कार्यं ? व्याहतम् । अथ कार्यधर्मः ? तथाप्यनिवृत्तो व्याघातः । अथोपलब्धिः कार्यविषयाभिव्यक्तिः सा क्रियत इति ? न मुच्यसे व्याघातात्(२) । अथ कारणात्मनावस्थितस्य कार्यात्मनाऽवस्थानमभिव्यक्तिः ? एवमप्यनिवृत्तो व्याघातः कार्यात्मनावस्थानमभूद्भवतीति । अथ कारणस्य संस्थानविशेषोऽभिव्यक्तिः ? संस्थानविशेषोऽभूत्वा भवतीति व्याघातः । अथास्ति ? व्यर्थमुपादानम् । अथ कारणस्य स्वलक्षणपुष्टिरभिव्यक्तिः ? न अपूर्वाभ्यागमाभावे स्वलक्षणपुष्टिशब्दार्थं पश्याम इति व्यर्थमुपादानम् । स्वलक्षणपुष्टिश्च पूर्वमभूत्वा पश्चाद् भवतीति व्याघातान्न मुच्यसे(३) एवं येन येन कल्पेनाभिव्यक्तिरभिधीयते

(१) उत्पादव्ययवादिनः—पा० ४ पु० ।
(२) न मुच्यसे उपघातात्—पा० ४ पु० ।
(३) व्याघातः—पा० ४ पु० ।

तेन तेन सत्कार्यं बाध्यत इति । यत्पुनरेतत् नासदुपादाननियमादिति—?

## बुद्धिसिद्धं तु तदसत् ॥ ५० ॥

बुद्धिसिद्धं तु तदसत् । नायं सत्त्वादुपादाननियमोऽपि तु सामर्थ्यात्—इदमनेन शक्यं निर्वर्तयितुं(१) नेदमनेनेत्येवं बुद्धिसिद्धं कार्यं कृत्वा यद् यस्योत्पत्तये समर्थं तत् तस्योपादीयते न सर्वं सर्वस्य न सर्वस्मात् सर्वमुत्पद्यमानं दृष्टमिति । अथोत्पत्तिनियमेन कार्यनियमेन कार्यकारणनियमं प्रतिपद्यते तेनापि कार्यकारणशब्दयोरर्थो वाच्यः(२) किमुक्तं भवति कारणमिति किमुक्तं च भवति कार्यमिति ? ननु करोतीति कारणं क्रियत इति कार्यम् । यद्यभिव्यक्तिः ? पूर्ववत् प्रसङ्गः । अथ विद्यमानेष्वपि करोत्यर्थो दृष्ट इति मन्यसे ? यथा केशान् कुरु पृष्ठं कुर्विति न तद्विद्यमानानां हि रचनाविशेषः केशानामविद्यमानः क्रियते पश्चात् पृष्ठस्यापि मलापगमोऽविद्यमान इति न विद्यमाने कारणार्थं जात्वपि पश्याम इति तस्मादसदेतत् ।

यदि ह्यसत् क्रियत इति खरस्य विषाणं किं न क्रियत इति ? । क एवमाह न क्रियत इति, यत् (तत्) खरस्य विषाणं तत् क्रियत इति । अथ कस्मात् खरः विषाणस्य कारणं न भवतीति एतत् न जानीमः कस्मात् न भवतीति न पुनः खरेण विषाणं क्रियमाणं दृष्टमित्यतोऽत्रसीयते । एतेन शशविषाणं व्याख्यातम् । न तदसत्त्वात् न क्रियते किं तु कारणाभावादिति । न चाऽसत्त्वमुत्पत्तौ हेतुः अपि तु सतोऽनुत्पत्तेरसदुत्पद्यत इति । असत्त्वात् खरविषाणं नोत्पद्यत इति ब्रुवाणः स्वसिद्धान्तं बाधते

(१) निर्णयितुं शक्यं—पा० ४ पु० ।
(२) वक्तव्यः—पा० ४ पु० ।

न हि भवत्पक्षे खरविषाणं नास्ति सत्त्वे चासत्त्वे च समाने यस्य कारणमस्ति तदुत्पद्यत इति । सत्कार्यवादिनश्चैवं सर्वलोकव्यवहार उच्छिद्यत इत्युक्तम् नापूर्वं जायते न पूर्वं विनश्यतीति । अथासत्कार्ये(१) किं प्रमाणम् ? न सत्त्वे न चासत्त्वे ऽनुमानमस्ति धर्मिण्यविप्रतिपत्तेः ? न तर्हि विवादः ? यदुभयपक्षसम्प्रतिपन्नं तस्य धर्मेषु तदुभयपक्षसम्प्रतिपन्नाः तन्तवस्तान् प्रति पक्षा विभज्यन्ते । एके तावद् ब्रुवते तन्तुमात्रं पट इति । अपरे तु तन्तवः संस्थानविशेषेणावस्थिता इति । अपरे तु तन्तव एव कार्यात्मना ऽवतिष्ठन्ते इति । अपरेषां धर्मान्तरा विर्भाव(२)तिरोभावाविति । अपरे तु शक्तिविशिष्टास्तन्तवः पट(३) इत्याहुः । तदेवं विभक्तेषु पक्षेषु तन्तुमात्रेषु तावद्व्यतिरेकः साधयितव्यः स चोपपादित(४) इति । ये ऽपिसंस्थानविशेषेणावस्थितान् तन्तून् पट इति वर्णयन्ति तान् प्रति साधनं—प्रागुपलब्धिकालात् संस्थानविशेषयुक्ताः तन्तवः तत्कारणत्वात् तुर्यादिवदिति । एतेन कार्यात्मनाऽवतिष्ठन्त इति व्याख्यातम् तथा धर्मान्तराविर्भावतिरोभावाविति । अत एव शक्तिविशेषावस्थितास्तन्तव इति ब्रुवाणः किञ्चिदपि न बाधत इति तान् प्रति न साधनमुच्यत इति । य एवार्थो बुद्धिसिद्ध तदसदिति स एवार्थः शक्तिविशेषावस्थितास्तन्तव इति सर्वेषु चैव पक्षेषु नापूर्वोत्पा-

---

(१) असत्कार्यवादे—पा० ४ पु० ।

(२) धर्माधर्माविर्भाव—पा० ४ पु० ।

(३) शक्तिविशिष्टान् तन्तून् पट—पा० ४ पु० ।

(४) उपपादित इति द्वितीयाध्याये । प्रागुपलब्धिकालादिति कारणव्यापारात् प्रागित्यर्थ इति तात्पर्यटीकायां वाचस्पतिमिश्राः ।

दमन्तरेण पटबुद्धिः सम्भवतीति व्याघातोऽनिवार्यः । विद्यमानाभिव्यक्त्यर्थास्तन्तवः तदर्थिना नियमेनोपादानात् खनित्रादिवत् ? । विद्यमानस्याभिव्यक्तिरस्तीति अभिव्यक्तिवत् कार्येऽपि प्रसङ्गः एवं चोक्तोत्तरमेतत् । यत् पुनरेतदुपादाननियमादिति ? उपादानं च कारणम्, न च सति कारणार्थे पश्याम इति पूर्ववत् प्रसङ्गः । यदपि खनित्रादिवदिति ? न च खनित्राद्युदकार्थमुपादीयते, अपि तु आवरणविगमार्थम् । आवरणविगमश्च विभागः । स चाभूत्वा भवतीति असिद्धो दृष्टान्तः । अथ विभागं न प्रतिपद्येत ? सोऽयमसम्प्रतिपन्नविभागो विनाशप्रसपोत्पत्तिकारणं पर्यनुयोज्यः । अथाप्राप्तिमात्रात् विभागस्त्वयं प्रतिपद्यते ? साप्यप्राप्तिः किं प्राप्तेरभाव उतप्राप्तेरन्येति ? किञ्चातः ? यदि प्राप्तेरभावोऽप्राप्तिः सा ऽप्राप्तिः कुतो भवतीति वक्तव्यम् ? । यद्धि प्राप्तिविरोधनिमित्तं तद्विभाग इति नामान्तरं विभागस्य । यद्यत्र प्रतिषिध्यते तदन्यत्र भवतीत्युक्तम् । अप्राप्तिश्च द्वयी असंश्लेषः संश्लिष्टानां विगमश्च । तत्र यः संश्लिष्टानां विगमः स विभाग इति । तं च खनित्रादीनि कुर्वन्ति । अथ प्राप्तेरन्याऽप्राप्तिः ? सापि द्वयी तत्रापि पूर्ववत् प्रसङ्गः । अथ भिन्नदेशोत्पत्तिं विभागं प्रतिपद्येत ? भिन्नदेशौ इमे उत्पन्ने इति विशेषणोपादानान्न भिन्नदेशोत्पत्तिर्विभाग इति उत्पन्ने उत्पन्नमिति भिन्नदेशतया भिन्नमिति विभागात् । विभक्तमिति तान्येतानि भिन्नप्रत्ययनिमित्तानि(१) प्रत्ययभेदादनुमेयानि । न हीमे पर्यायशब्दा भिन्नमुत्पन्नं विभक्तं चेति । भिन्नदेशोत्पत्तेश्च प्रतीतिविरुद्धत्वान्न भिन्नदेशोत्पत्तिर्विभाग इति । क्षणिकत्वाद् विभागस्य विभागान्तरयो-

(१) प्रत्ययभेदनिमित्तानि—पा० ४ पु० ।

स्पत्तिर्न(१) युक्तेति चेत् ? न, सामान्याभिव्यक्तिसंयोगविनाशाभ्यामेव प्रत्ययोत्पत्तिकालानुभवात्—पूर्वं तावत् स्वकारणादुत्पन्नो विभागः सामान्यं व्यनक्ति सामान्याभिव्यक्त्युत्तरकालं संयोगाल्लब्धात्मकात्(२) विनश्यतीति । तदेवमनेकक्षणानुभवादुत्पन्नमात्रो विभागो ध्वंसत इत्यसिद्धम् । तदेवं व्यवस्थितमेतदसदुत्पद्यत इति ॥

**आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः ॥५१ ॥**

आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः । यत्र मूलसेकादि कर्म यत्र पर्णादिफलं तदुभयं वृक्षाश्रयम् । कर्मत्विह कर्मफलं चान्यत्रेति आश्रयव्यतिरेकात् वृक्षफलोत्पत्तिवदित्यसिद्धो दृष्टान्तः ॥

**प्रीतेरात्माश्रयत्वादप्रतिषेधः ॥ ५२ ॥**

प्रीतेरात्माश्रयत्वादप्रतिषेध इति । आश्रयव्यतिरेकोऽसिद्ध इति सूत्रार्थः । यत्रैव कर्म तत्रैव कर्मफलमिति ॥

**न पुत्रस्त्रीपशुपरिच्छदहिरण्यान्नादिफलनिर्देशात् ॥ ५३ ॥**

न पुत्रस्त्रीपशुपरिच्छदहिरण्यान्नादि(३) फलनिर्देशात् । पुत्रादि फलत्वेन निर्दिश्यते न पुत्राद्यात्मनि वर्तत इति ॥

**तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः ॥५४॥**

तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः । पुत्रादिसम्बन्धात् फलं प्रीतिर्भवति तत्कारणत्वात् पुत्रादि फलशब्दे-

---

(१) विभागप्रत्ययस्योत्पत्तिर्न—पा० ४ पु० ।
(२) संयोगाद्धात्मकात्—पा० ४ पु० ।
(३) अन्नादिषु—पा० ४ पु० ।

नाभिधीयते पथान्नमाधनाः प्राणाः अन्नं वै प्राणा(१) इति । उपचारश्च प्राणाभावात् लोकप्रयुक्तवाक्यानुविधानेन क्रियत इति ।

( इति फलपरीक्षाप्रकरणम् )

फलानन्तरं दुःखमुद्दिष्टं लक्षितं च(२) बाधनालक्षणं(३) दुःखमिति । तत्र किमिदं सर्वलोकसाक्षिकस्य सुखस्य(४) प्रत्याख्यानम् आहोस्विदन्यः कल्प इति । अन्य इत्याह । कथं ? न वै सर्वलोकसाक्षिकं सुखं शक्यं प्रत्याख्यातुम् । अयन्तु जन्ममरणप्रबन्धानुभवनिमित्तात् दुःखात् निर्विण्णस्य दुःखभावनोपदेशः—कथं नामायं सर्वं दुःखमिति भावयेत् भावयंश्च विरज्येत विरक्तो मुच्यते इति । कथं पुनरयं सर्वं दुःखमिति भावयति ? सर्वे सत्त्वनिकायाः सर्वः पुनर्भवः सर्वमुत्पत्तिस्थानं दुःखमाह्वयति दुःखमित्युक्तमृषिभिः ।

दुःखभावनमुपदिश्यते तत्र च हेतुरुपादीयते—

**विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिः ॥ ५५ ॥**

विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिरिति । तत्र जायत इति जन्म शरीरेन्द्रियबुद्धयो व्यपदिश्यन्ते शरीरादीनां प्रादुर्भाव उत्पत्तिः जन्मन उत्पत्तिः जन्मोत्पत्तिः । विविधा च बाधना हीना मध्यमोत्कृष्टा चेति । शेषं भाष्ये । अनेनाभिप्रायेण दुःखो(दे)शो न सुखं प्रत्याख्यातुम् ॥

(१) प्राणिनः प्राणा-पा० ४ पु० । (२) उक्तं च-पा० ४ पु०
(३) लक्षितं-पा० ४ पु० । (४)सर्वलोककस्य-पा० ४ पु० ।

**न सुखस्याप्यन्तरालनिष्पत्तेः(१) ॥ ५६ ॥**

न सुखस्याप्यन्तरालनिष्पत्तेः । यस्माद्बाधनान्तराले सुखमुत्पद्यमानं प्रत्यक्षदृष्टमिति ।

इतश्च—

**बाधनानिर्वृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः॥५७॥**

बाधनानिर्वृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः—सुखस्य दुःखोद्देशेनेति, प्रकरणात्—यस्मादयं वेदयन् इदं मे सुखसाधनमिदं मे दुःखसाधनमिति सुखसाधनमाप्तुं दुःखसाधनं हातुं प्रयतते सुखसाधनानां प्राप्तये चास्य यतमानस्यानेकविधस्तापोऽनुपश्लाते । ततस्तापानुषक्तत्वात् सर्वं दुःखमित्युच्यते न सुखस्याभावादिति(२) । अयमेव चार्थो मुनिना श्लोकेन वर्णितः—

काम कामयमानस्य यदा कामः समृध्यति ।
अथैनमपरः कामः क्षिप्रमेव प्रबाधते(३) इत्येवमादि ।

**दुःखविकल्पे सुखाभिमानाच्च ॥ ५८ ॥**

दुःखविकल्पे सुखाभिमानाच्च । यश्च सुखार्थं यतमानस्य दुःखविकल्पो भवति तं सुखाङ्गभावात् सुखमित्यभिमन्यमानः पुनस्तदुपादत्ते पुनः पुनर्जायत इति न

(१) निर्वृत्तेः—पा० ४ पु० ।

(२) सुखस्याविर्भावादिति—पा० ४ पु० ।

(३) काम काम्यं कामयमानस्य यदा कामः समृध्यति सम्पन्नो भवति अथानन्तरमेनं पुरुषमपरः कामः इच्छा क्षिप्रं बाधते । स्वर्गादिप्राप्तावपि स्वाराज्यादि कामयते । एवं तत्प्राप्तौ प्राजापत्यादीत्यस्य इच्छा तदुपायप्रार्थनादिना दुःखेन बाधते इत्यर्थः । इति तात्पर्यटीकायां वाचस्पतिमिश्राः ॥

संसारमतिवर्तते(१) तस्याः सुखसञ्ज्ञायाः प्रतिपक्ष उपदेशोऽयं क्रियते (इति) सर्वं दुःखमिति । यद्येवं कस्माद् दुःखं जन्मेति नोच्यते ? सोऽयमेवं वक्तव्ये यदाह दुःखमेवेति तेन सुखाभावं ज्ञापयति । यदपि तदन्तराले सुखमुपजायते तदपि दुःखमेव दुःखानुषङ्गात् नाभावादिति । जन्मविनिग्रहार्थीयो वै खल्वयमेव शब्दः—जन्मनोऽनेन विनिग्रहं शास्ति सर्वं दुःखमिति भावयन् दुःखसाधनानि नोपादत्ते अनुपाददानो विमुच्यते इति ।

( इतिदुःखपरीक्षाप्रकरणम् )

---

दुःखोद्देशानन्तरमपवर्गः स प्रत्याख्यायते—

ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः ॥ ५९ ॥

ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभाव इत्यनेन सूत्रेण । ऋणानुबन्धान्नास्त्यपवर्गः । शेषं भाष्ये । अनुबन्धः सदा(२) करणीयता—नायमृणानुबन्धात् कदाचित् मुच्यते जन्मप्रभृति यावत् मरणमिति । क्लेशानुबन्धादपवर्गो नास्ति—क्लेशानुबद्ध एवायं जायते क्लेशानुबद्ध एवायं म्रियते इति । प्रवृत्त्यनुबन्धादपवर्गो नास्ति—न कदाचिदयं न कर्म करोति ॥

यत्तावदृणानुबन्धादिति—

प्रधानशब्देनानुपपत्तेर्गुणशब्देनानुवादो(३) निन्दाप्रशंसोपपत्तेः ॥ ६० ॥

प्रधानशब्देनानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्ते-

---

(१) पुनः पुनर्जायते न संसारमभिवर्तते–पा० ४ पु० ।
(२) सर्वदा—पा० ४ पु० । (३) नायमर्थवादो—पा० ४ पु० ।

रिति(१)। नायं प्रधानशब्दः प्रत्यादेयदानप्रतिदेयग्रहणासम्भवात्। यत्र खलु एकः प्रत्यादेयं(२) ददाति इतरः प्रतिदेयं गृह्णाति तत्रायमृणशब्दः प्रधानं भवति अन्यत्र भाक्त इति तस्माद् गुणशब्देनायमनुवाद इति। यथाग्निर्माणवक इति। तत्राग्निशब्दो दहनादिसमर्थे तेजोविशेषे वर्तते स तत्र वर्तमानः तत्सामान्यादतथाभूते माणवके प्रयुज्यते अग्निर्माणवक इति। न पुनरग्निशब्दो माणवकसमानाधिकरणो दहनादिसमर्थं माणवकं प्रतिपादयति अपि तु येऽग्नेः पिङ्गलपाटलत्वादयो धर्माः तत्सम्बन्धिनं माणवकं प्रतिपादयति तद्द्वारकश्च प्रयुज्यमानोऽयं शब्दो गुणोपकरणत्वात्(३) गौणो भवति। तथा च ऋणशब्दः(४) अप्रयुक्तोपमश्चेदं वाक्यम् ऋणवान् जायत इति। उपमाऽत्र लुप्ता द्रष्टव्या ऋणवानिव जायत इति क उपमानार्थः? अस्वातन्त्र्यं—ऋणवान् यथा अस्वतन्त्रः एवमयं जायमानः कर्मसु अस्वतन्त्रो वर्तत इति। जायमान इति चायं गुणशब्द एव न मुख्यः सम्भवति न हि मातुः कुमारे जायमाने लोहितपाणिपादास्ये ऽध्ययनादिकर्मोपपत्तिरिति अतो गृहस्थे जायमाने इति। किं पुनर्गृहस्थस्य जायमानेन कुमारेण सामान्यं? क्रियासम्बन्धः अग्निहोत्रादिहवनक्रियासम्बन्धसामान्यात् गृहस्थो जायत इति। यथा मातुः कुमारको जायमानः शरीरादिभिः सम्बद्ध्यते एवमग्निहोत्रहवनादिक्रियासम्बन्धसामान्येन जा-

(१) ऋणेति—इत्यधिकम्।
(२) खल्वेभ्यः प्रत्यादेयं–पा० ४ पु०।
(३) गुणोपकरणात्—पा० ६ पु०।
(४) स शब्दः—पा० ६ पु०।

यत इति । कस्मात् ? शक्तस्यार्थिनश्च कर्मभिरधिकारात् शक्तश्चार्थी च कर्मभिरधिक्रियते मातृतः कुमारके जायमाने न शक्तिः न चार्थितेति, उभयं तु गृहस्थे जायमाने, तस्मात् गृहस्थो जायमानोऽभिधीयत इति ।

अर्थित्वस्याविपरिणामे जरामर्यवादोपपत्तिः—यच्चेदं ब्राह्मणमाजरसं कर्मभिः सम्बन्धं शास्ति तदन्यथा सम्भवतीति अर्थित्वस्याविपरिणामे जरामर्यवादोपपत्तिः—यदार्थित्वाविपरिणामः यदार्थित्वं विपरिणतं भवति(१) तदानेन अग्निहोत्रं सन्न्यसनीयम् । आयुषस्तुरीयभागं प्रव्रज्यायुक्तमाह जरेति । यावज्जीवसंयोगे हि जरया हवा इत्यनर्थकं यस्मात् स्वयमशक्तस्य वाह्याशक्तिर्विहिता सत्यर्थित्वे अन्येन हवन शास्ति । यदा पुनरर्थित्वं विपरिणतं तदा सन्यासोविधीयत इति । कस्मात् पुनरेतदेवमुच्यते सत्यर्थित्वे अग्निहोत्रहवनमिति ? कर्मविधौ कामसयोगश्रुतेः—यस्मात् सर्वस्मिन् कर्मणि कामविधिः श्रूयते स्वर्गकाम इति यथोपदिष्टार्थः विद्वाश्चोपदेशविषयः यश्चापदिष्टमर्थं विजानाति तं प्रत्युपदेशः क्रियते न गायनो वधिरेषु प्रवर्तते न नर्त्तकोऽन्धेषु, न चोपदेशविज्ञानं बालके त्वस्ति(२) तस्मान्न तं प्रत्युपदिश्यत इति न भिद्यते च लौकिकात् लौकिकोऽपि तावदपरीक्षको न जातमात्रं कुमारकमेवं ब्रूयादधीष्व यजस्व ब्रह्मचर्यं चरेति(३) । कुत एवमृषिरुपपन्नानवद्यवादी

(१) यदार्थित्वविपरिणामः यदा ह्यर्हित्वं विपरिणतं भवति–पा० ■ पु० ।

(२) बालकेऽस्ति—पा० ४ पु० ।

(३) अधीष्व ब्रह्मचर्यं चरेति–पा० ४ पु० ।

यूपादिति । अथापि विहितं वा अनूद्येत कामाद्वार्थः(१) कल्प्येतेति । विहितानुवचनं न्याय्यम् तत्रानुपपन्नप्रमाणकस्यार्थस्याभिधाने कामतः प्रकल्प्येत यो ह्यर्थः प्रमाणतो न सम्भवति तस्य यदभिधानं तत्र कामतः प्रकल्पनं सम्भवति यथा जायमानः कुमारकः ऋणवान् भवतीति । उपपन्नप्रमाणकस्याभिधानमनुवचनम् यथा जायमानशब्दो गृहस्थवचन इति । कथमवगम्यते गृहस्थ इति ? यज्ञसाधनत्वात् यस्मात् यजमानो यज्ञाङ्गं भवति साधने तु प्रयत्नव्यापारो दृष्टः न फले यथा पाकसाधनेषु काष्ठादिषु न पाके न लोष्टादिषु असाधनेषु । शेषं भाष्ये ।

कथं पुनरिदं गम्यते फलार्थिन एतद्ब्राह्मणं भवतीति ?—

**अधिकाराच्च विधानं विद्यान्तरवत् ॥ ६१ ॥** (२)

**समारोपणादात्मन्यप्रतिषेधः ॥ ६२ ॥**

समारोपणादात्मन्यप्रतिषेधः । यस्मान्निवृत्ते फलार्थित्वे समारोपणं विधीयते ।

**पात्रचयान्तानुपपत्तेश्च फलाभावः ॥ ६३ ॥**

पात्रचयान्तानुपपत्तेश्च फलाभावः । यस्मान्निवृत्ते ऽर्थित्वे प्रव्रजितानां पात्रचयान्तानि कर्माणि न क्रियन्ते यदि चेदं ब्राह्मणमविशेषेण प्रवर्तेत तेन सर्वत्र पात्रचयान्तानि कर्माणि प्रसज्यन्त इति । शेषं भाष्ये ।

यत्पुनरेतत् क्लेशसन्ततेरविच्छेदादिति ?

**सुषुप्तस्य स्वप्नादर्शने क्लेशाभाववदपवर्गः ॥ ६४ ॥**

सुषुप्तस्य स्वप्नादर्शने क्लेशाभाववदपवर्गः । यथा सुषुप्तस्य

---

(१) कामार्थत्वादर्थ.—पा० ४ पु० ।

(२) इदं सूत्रं न्यायसूचीनिबन्धे न दृश्यते ॥

स्वप्नादर्शने क्लेशानुबन्धो विच्छिद्यते सुखदुःखसाधनानुबन्धश्च तथा मुक्तस्यापीति तच्च योगिनो मुक्तस्य रूपमुदाहरन्तीति ।

यदपि, प्रवृत्त्यनुबन्धादिति ?—

न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य ॥ ६५ ॥

न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य । विद्यमाना प्रवृत्तिः क्लेशमन्तरेण प्रतिसन्धानाय न भवतीति धर्माधर्म-कारणं न भवतीति यावदुक्तं स्यात् । प्रतिसन्धिस्तु पूर्व-जन्मनिवृत्तौ पुनर्जन्म, तच्च तृष्णाकारितम् । एतच्चोक्तं वीतरागजन्मादर्शनादिति सूत्रे । कर्मवैफल्यप्रसङ्ग इति चेत् ? न, कर्मविपाकप्रतिसंवेदनस्याप्रत्याख्यानात् न—ब्रूमो विद्यमाने कर्मणि मुच्यत इति, अपि तु कर्माणि भुक्त्वा जन्मानि विपच्यन्ते ॥

न क्लेशसन्ततेः स्वाभाविकत्वात् ॥ ६६ ॥

न क्लेशसन्ततेः स्वाभाविकत्वात् । नोपपद्यते क्लेशसन्तते-र्विच्छेदः । कुतः ? क्लेशसन्ततेः स्वाभाविकत्वात् । अनादिरियं क्लेशसन्ततिः स्वभावतः प्रवृत्ता न चासावुच्छेत्तुं शक्येति ।

तत्रैके परिहारं वर्णयन्ति—

प्रागुत्पत्तेरभावानित्यत्ववत्स्वाभाविकेऽप्यनि-त्यत्वम् ॥ ६७ ॥ (१)

प्रागुत्पत्तेरभावानित्यत्ववत्स्वाभाविकेऽप्यनित्यत्वम् । य-था प्रागुत्पत्तेरभावोऽनादिरथ च भावेन निवर्त्यते(२) एवमना-दिः क्लेशसन्ततिरतत्त्वज्ञस्य तत्त्वज्ञानेन निरोत्स्यत इति ।

---

(१) विद्यनाथपञ्चाननास्तु प्रागुत्पत्तेः इत्यारभ्य अणुश्यामता-नित्यत्ववदेत्यन्तमेकमेव सूत्रं पठन्ति ।

(२) निरुध्यते—पा० ४ पु० ।

अणुश्यामतानित्यत्ववद्वा ॥ ६८ ॥

अणुश्यामतानित्यत्ववद्वा—यथाणोः श्यामता अनादिश्च अनित्या च एवं क्लेशसन्ततिरपीति । सतः खलु धर्मो नित्यत्वमनित्यत्वं चेति नित्यानित्यत्वे अवधारयद्भि(१)रुक्तं तत्त्वभावे भाक्तमिति । का पुनरिह भक्तिः ? नित्यमकारणम् अकारणश्च प्रागभावः अनित्यं भूत्वा न भवति । न च प्रागभावोभावे सति(२) भवत्येतत् सामान्यम् । यत्पुनरेतदनादिरणुश्यामतेति ? हेत्वभावादयुक्तम् । अनुत्पत्तिधर्मकमनित्यं नात्र हेतुरस्ति इति ।

अयं तु समाधिः—

न सङ्कल्पनिमित्तत्वाच्च रागादीनाम् ॥ ६९ ॥

न सङ्कल्पनिमित्तत्वाच्च रागादीनाम् । कर्मनिमित्तत्वादितरेतरनिमित्तत्त्वाच्चेति चार्थः । अनुभूतविषयप्रार्थना सङ्कल्प इत्युक्तम् । मिथ्यासङ्कल्पेभ्यो रञ्जनीय(३) कोपनीयमोहनीयेभ्यो रागादयः प्रादुर्भवन्ति । । कर्म च निकायनिर्वर्तकं सङ्कल्पापेक्षं रागादीन् जनयति । दृष्टो हि कश्चित् सत्त्वनिकायो रागबहुलो यथा पारावतादिः । कश्चित् क्रोधबहुलो यथा सर्पादि । कश्चित् मोहबहुलो यथाजगरादिः । यदि कर्म रागादीन् निर्वर्तयेत् सर्वदा रागादिभिर्वेदितव्यमिति मोक्षप्रसङ्गः ? न, कारणवैकल्यात्(४) सङ्कल्पाद्यपेक्षं कर्म रागादिकारणम् न निरपेक्षमिति । सुखादीनामपि तर्हि कर्मकारणं(कत्वं) न प्राप्तम् ! न निरपेक्षत्वात् कर्म सुखादिषु कर्तव्ये-

(१) नित्यानित्यत्वावधारयद्भिः—पा० ४ पु० ।
(२) प्रागभावे सति—पा० ४ पु० । (३) व्यञ्जनीय—पा० ४ पु० ।
(४) वैफल्यात्—पा० ४ पु० ।

पु सङ्कल्पं नापेक्षते ऽपि तु स्वकारणसन्निधानापेक्षं सुखादि करोति । यथोत्क्षेपणादिकर्म नोदनाद्यपेक्षं संस्कारं करोति अनपेक्षं तु संयोगविभागाविति । परस्परनिमित्तत्वं च रागादीनां दृष्टम्—रक्तो मुह्यति रक्तः कुप्यति कुपितो मुह्यति कुप्यति रज्यते चेति । यदपीदमुच्यते अनादिः क्लेशसन्ततिरिति ? तन्न, अविशेषात्—यथानादिः क्लेशसन्ततिरेवमाध्यात्मिका भावाः सर्वेऽनादिना प्रबन्धेन प्रवर्तन्ते न जातु अनुत्पन्नपूर्वं किञ्चिदुत्पद्यते । न चैवं किञ्चिदनुत्पत्तिधर्मकं व्ययधर्मकं(१) प्रतिज्ञायते अनुत्पन्नपूर्वं तु तत्त्वज्ञानं केवलमुत्पद्यते नान्यः कश्चिदाध्यात्मिको भाव इति ॥

( इत्यपवर्गपरीक्षाप्रकरणम् । )

इति—औद्द्योतकरे न्यायवार्त्तिके चतुर्थस्याध्यायस्याद्यमाह्निकम् ॥

(१) व्यक्तधर्मकं—पा० ४ पु० ।



# चतुर्थेऽध्यायेः

## द्वितीयमाह्निकम् ।

ॐ नमः परमात्मने ।

तदिदं तत्त्वज्ञानमुत्पद्यमानं किं विषयमात्रे भवति आहोस्वि- द्विषयविशेष इति । विषयमात्रे तावदशक्यं तत्त्वज्ञानेन भवितुम् । कुतः ? विषयाणामानन्त्यात् । विषयविशेषे ऽपि तत्त्वज्ञानविष- यत्वेन योऽभिप्रेते स विभज्य वचनीयः । तत्र विषयान्तरा- णामात्मादिप्रमेयव्यतिरेकिणा निराकरणं प्रमेयविशेषविषयत्वा- त् सूत्रस्य—यत्तदात्मादिसूत्रं न तेन प्रमेयमात्रमभिधीयते । प्रमेयमात्राभिधाने हि आत्मादिग्रहणं व्यर्थम्, अपि तु प्र- मेयविशेषः यस्तत्त्वज्ञानविषयत्वेन व्यवतिष्ठमानः संसारव्यव- च्छेदहेतुर्भवति यश्च मोहविषयत्वात् संसारं प्रतनोति स तत्त्व- तो ज्ञेय इति । तस्मिन् अयं प्रश्नः किं नु खलु भो यावन्तो वि- षयाः तावत्सु तत्त्वज्ञानं प्रत्येकमुत्पद्यते अथ क्वचिदुत्पद्यते इति ? । न तावद् प्रत्येकम्—आत्मादेरानन्त्यात् । किमिदमानन्त्यम् ? इय- त्ताप्रत्ययाविषयत्वम् । अथ क्वचिदुत्पद्यते ? यत्र नोत्पद्यते(१) तत्त्वज्ञानं तत्रानिवृत्तो मोहः यत्र मोहस्तत्र रागद्वे- षाविति रागद्वेषमोहाश्च बन्धनमिति निर्मोक्षप्रसङ्गः । अथ मन्य- से ऽन्यविषयं तत्त्वज्ञानमन्यविषयं मोहं निवर्तयति ? एवं च स- सपवर्गः प्राणिभावे प्राप्नोति(२) न हि कश्चित् प्राणी

(१) नोत्पन्न—पा० ४ पु०  (२) भवति—पा० ४ पु० ।

कस्य चिदर्थस्य तत्त्वं न वेत्ति ? न, मोहार्थापरिज्ञानात्—न तत्त्वज्ञानस्यानुत्पत्तिमात्रं मोहोऽपि तु मिथ्याज्ञानं मोहः, तच्च मिथ्याज्ञानं यस्मिन् विषये प्रवर्तमानं संसारबीजं भवति स विषयस्तत्त्वतो ज्ञेय इति । किं पुनस्तन्मिथ्याज्ञानम् ? अनात्मन्यात्मप्रत्यय(१) इति । शेषं भाष्ये ॥

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः ॥ १ ॥

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः । शरीरादिदुःखान्तं प्रमेयं दोषनिमित्तम्, तद्विषयत्वान्मिथ्याज्ञानस्य, तद्विषये तत्त्वज्ञानमुत्पन्नं तद्विषयमहङ्कारं निवर्तयति समाने विषये तयोर्विरोधात् । सर्वं चैतदुक्तं द्वितीयसूत्रे इति ।

दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः ॥२॥

दोषनिमित्तं रूपादयो विषयाः संङ्कल्पकृताः । कामा विषया इन्द्रियार्था रूपादय उच्यन्ते । तत्र ते विषया मिथ्यासङ्कल्प्यमाना रागादीन् जनयन्ति । कः पुनरेषां मिथ्यासङ्कल्पः ? असाधारणप्रसवोत्पत्तिनिमित्तत्वेन व्यवसायो ममैवैत इति । तान् साधारणतया प्रतिसञ्चक्षीत(२) नैते मम दैवचौराग्निदायादसाधारणा इति । एवमेतस्य प्रतिसञ्चक्षाणस्य(३) यो व्यवसायस्तद्विषयो मोहः स निवर्तत इति । तन्निवृत्तावध्यात्मं शरीरादीन् प्रतिसञ्चक्षीत । किं पुनः प्रसंख्यानं ? शरीरादिषु नैते आत्मान इति व्यतिरेकदर्शनं प्रसंख्यानम् । सोऽयमध्यात्मं बहिश्च विविक्तचित्तो विहरन् मुक्त इत्युच्यते । एतच्च त आहुः—

(१) आत्मग्रह—पा० ४ पु० ।   (२) प्रसञ्चक्षीत—पा० ४ पु० ।
(३) प्रसञ्चक्षाणस्य—पा० ४ पु० ।

"जीवन्नेव विद्वान् संहर्षायासाभ्यां मुच्यते" इति ।

अतः परं का चित्तसञ्ज्ञा भावयितव्या का चिद्धेया इत्युपदिश्यते । नार्थनिराकरणं नार्थोपादानं, किं तु यथाव्यवस्थित(१) एव विषये किञ्चिद्भावनीयं किञ्चिन्न निराकरणीयमिति ।

तन्निमित्तं त्ववयव्यभिमानः ॥ ३ ॥

तन्निमित्तं तु अवयव्यभिमानः । तेषां दोषाणां निमित्तमवयव्यभिमानः । तत्रावयवीति सञ्ज्ञा भावनीया स्त्रीसञ्ज्ञा हेया सपरिष्कारा(२) पुरुषस्य, परिष्कारो बन्धनं स्त्रियाः पुरुषसञ्ज्ञा सपरिष्कारेति । तत्रापि च द्वे सञ्ज्ञे निमित्तसञ्ज्ञा अनु (अर्थ)व्यञ्जनसञ्ज्ञा च । निमित्तसञ्ज्ञा दन्तौष्ठमिति । दन्तादिषु दन्तत्वादिनिबन्धना सञ्ज्ञा (अर्थ)व्यञ्जनसञ्ज्ञा (च) इयं दन्ता इत्यनोष्ठाविति इत्यमिसध्यारोपेण निमित्तस्य सेयमध्यारोपेण भाव्यमाना(३) सञ्ज्ञा मोहः । स च रागादिकारणमिति हेयः । न पुनरवयवी निराकार्यः(४) प्रमाणतस्तथाभावादिति ॥

अथेदानीमर्थं निराकरिष्यता अवयविन्युपपाद्यते ।

विद्याविद्याद्वैविध्यात् संशयः ॥ ४ ॥

विद्याविद्याद्वैविध्यात् संशयः । सदसतोरुपलम्भात् द्विविधा विद्या । सदसतोरनुपलम्भात् अविद्याऽपि द्विविधैव । एवं चावयवी यद्युपलभ्यते अथ नोपलभ्यते न कथञ्चन संशयात् मुच्यते इति । तत्र तावदुक्तं न विद्याविद्याद्वैविध्यं संशयस्य कारणम् उपलब्ध्यनुपलब्ध्योः पूर्वपदविशेषणत्वात् ।

---

(१) व्यवहित–पा० ४ पु० । (२) अनुपरिष्कारा–पा० ■ पु० ।
(३) उच्यमाना–पा० ४ पु० । (४) निराकर्तव्यः–पा० ४ पु० ।

तदसंशयः पूर्वहेतुप्रसिद्धत्वात् ॥ ५ ॥

तदसंशयः पूर्वहेतुप्रसिद्धत्वात् । तस्मिन्नवयविनि संशयो न युक्तः पूर्वोक्तानां हेतूनामप्रतिषेधात् तत्र ये ऽवयविनोऽर्थान्तरभावे हेतव उद्दिष्टास्ते न शक्या प्रतिषेद्धुमिति ।

वृत्त्यनुपपत्तेरपि तर्हि न संशयः(१) ॥ ६ ॥

वृत्त्यनुपपत्तेरपि तर्हि संशयानुपपत्तिः । नास्त्येव ह्यवयवीति । तद्विभजते—

कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः(२) ॥७॥

कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः । अवयवा अवयविनि वर्तेरन् अवयवी वा अवयवेषु । अवयवा अवयविनि वर्तमानाः कृत्स्नेन वर्तन्ते एकदेशेन वा । तत्र तावदवयवा अवयविनि कृत्स्ने न वर्तन्ते अवयवावयविनोः परिमाणभेदात् । अल्प(३)परिमाणोऽवयवो महापरिमाणश्चावयवीति अल्प(४)परिमाणेन महापरिमाणस्याव्याप्तिः । एकद्रव्यश्चावयवः प्राप्नोति । एकावयववृत्तित्वात् । न चैकद्रव्यं द्रव्यमविनश्यदाधारमस्ति नाप्यवयव्येकदेशेन वर्तते । न ह्यस्यान्ये ऽवयवा एकदेशभूताः सन्ति । तस्मिन्नपि चैकदेशेन वर्तमानोऽवयवः किमेकदेशेन वर्तते कृत्स्नेन वेति पूर्ववत् प्रसङ्गः ।

अथावयवेषु अवयवी वर्तते ?—

---

(१) संशयानुपपत्तिरिति–पा० ४ पु० । विश्वनाथसंम्मतोऽपि ।
(२) न्यायसूचीनिबन्धे अपि सूत्रमिदं दृश्यते । किं तु विश्वनाथेनानवधृतम् ।
(३) अणु–पा० ४ पु० । (४) अणु–पा० ४ पु० ।

तेषु चावृत्तेरवयव्यभावः(१) ॥ ८ ॥

तेषु चावृत्तेरवयव्यभावः । न तावत् प्रत्यवयवं कृत्स्नो वर्तते तयोः परिमाणभेदात् अवयविनश्च एकद्रव्यताप्रसङ्गात् । एकावयववृत्तित्वादेकद्रव्योऽवयवी प्राप्नोति एकद्रव्यश्चावयवी एकेन द्रव्येणारभ्यत इति सततोत्पत्तिप्रसङ्गः । किञ्च एकद्रव्यत्वात(२) द्व्यणुक(३)मेकस्मिन् परमाणौ वर्तत इति कारणविभागविनाशाभावात् नित्यं प्राप्नोति उत्पत्तिमच्च नित्यं चेति न दृष्टान्तोऽस्ति । अथाप्यवयवी एकदेशेन वर्तते ? तथापि अवयविन आरम्भकावयव्यतिरिक्तावयवाः प्राप्नुवन्ति ये ऽवयवेषु वर्तन्त इति ।

पृथक् चावयवेभ्योऽवयव्यवृत्तेः ॥ ९ ॥

पृथक् चावयवेभ्योऽवयव्यवृत्तेः । नाप्यवयवव्यतिरेकेणान्यत्र वर्तते अग्रहणान्नित्यत्वप्रसङ्गात् च । अवयवव्यतिरेकेणान्यत्र वर्तमान उपलभ्येत नित्यश्च स्यादनाधारं द्रव्यं नित्यमिति ।

न चावयव्यवयवाः ॥ १० ॥

न चावयव्यवयवाः । न चावयवानां धर्ममात्रमवयवी । कस्मात् ? धर्मस्यावयविनो धर्मिभिरवयवैः पूर्ववत् सम्बन्धोऽनुपपन्नः । न चात्र धर्मिभ्योऽवयवेभ्योऽवयवी धर्मः पृथगुपलभ्यते नित्यत्वप्रसङ्गादिति च समानम् । अवयवी चैकदेशेन अवयवे वर्तत इति अवयवसमूहमात्रमवयवी प्राप्नोति । एकस्मिंश्चावयवे एकदेशेन वर्तमानोऽवयवी एकावयवोपलम्भात् एकदेशेनोपलब्धौ तदवस्थानोऽवयवी गृह्येत न त्वेकतन्तुदर्शने

(१) विदवर्गाधेनावधृतम् ।
(२) एकद्रव्यवृत्तित्वात्-पा० ४ पु० ।
(३) एकद्रव्ये यद्द्व्यणुक-पा० ४ पु० ।

पटोपलब्धिर्भवति । तदेवं मुक्तसंशयोऽभिधीयते नास्त्यवयवीति ।

यत्तावदवयवा आश्रयिणि वर्तेरन् इति ? तत्र, अनभ्युपगमात्--न कारणं कार्ये वर्तते ऽपि तु कारणे कार्यमिति(१) । यत् पुनरेतदवयव्यवयवेषु वर्तमान एकदेशेन वर्तेत कृत्स्नो वा वर्तेत इति ? तत्र--

एकस्मिन् भेदाभावाद्भेदशब्दप्रयोगानुपपत्तेरप्रश्नः ॥ ११ ॥

एकस्मिन् भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेरप्रश्नः । कृत्स्नमिति च एकदेश इति च भेदविषयावेतौ शब्दौ, न चैतावेकस्मिन्नुपपन्नौ—अनेकस्याशेषता कृत्स्नशब्दस्यार्थः अशेषस्य कस्य चिदभिधानमेकदेशशब्दस्य । न चैतदिहोपपद्यते इति । तस्मान्नावयविनि कृत्स्नशब्दो नाप्येकदेशशब्द इति।

अवयवान्तराभावे(२) ऽप्यवृत्तेरहेतुः ॥ १२ ॥

अवयवान्तराभावे ऽप्यवृत्तेरहेतुः । अवयवान्तराभावादिति । यद्यवयवव्यतिरिक्तमवयवान्तरं प्रतिपद्येथाः ? तथाप्यवयवोऽवयवे वर्तते नावयवीत्यहेतुः अवयवान्तराभावात् नैकदेशेन वर्तते इति । एकं(३) चानेकत्र वर्तते इति प्रतिजानानो नानुयोक्तव्यः उभयेन व्याघातादित्युक्तम् । यद्यवयवी नैकदेशेन वर्तते न कृत्स्नो वर्तते अथ कथं वर्तत इति ? वृत्तिरवयवेषु आश्रयाश्रयिभावः(४) समवायाख्यः सम्बन्धः । स कथं भवतीति ? यस्य यतोऽन्यत्रात्मलाभानुपपत्तिः स (तत्)

(१) किं तु कार्यं कारण इति—पा० ४ पु० ।

(२) अवयवान्तरभावेऽपि इति—पा० २ पु० ।

(३) कथं—पा० ४ पु० ।

(४) आश्रयाश्रितभावः—पा० ४ पु० ।

तत्रैव वर्तत इति—न खलु कारणद्रव्येभ्योऽन्यत्र कार्यद्रव्यमात्मानं लभत इति । विपर्ययस्तु कारणद्रव्येषु—न कारणानि कार्यद्रव्येषु आत्मानं लभन्त इति । कथं नित्येषु आश्रयाश्रयिभावः(१) अनित्येषु दर्शनात् सिद्धं नित्येषु—यथाऽनित्यानि यत्रोपलभ्यन्ते तत्र वर्तन्ते तथा नित्यान्यपि यत्रोपलभ्यन्ते तत्र वर्तन्त इति एतत् समानमनित्यानां नित्यैः ।

रूपान्तरानिर्देशादिति चेत्?— अथ मन्यसे यदि व्यतिरिक्तोऽवयवी भवति तस्यावयव(रूपादे) व्यतिरेकेणावयविनो रूपान्तरं निर्देष्टव्यम् यथाऽचित्रास्तन्तवः पटं चित्र(२)मारभन्त इति ? न, उपलभ्यमान(३)· रूपाद्याधारत्वात्—यदवयविनो रूपमुपलभ्यते तदस्य रूपं यथाऽवयवस्य,कार्यकारणभावाभ्युपगमाच्चाऽ(४)विरुद्धः—अवयविनो रूपं निर्दिश्यतामिति ब्रुवाणेन अवयवावयविनौ तावदभ्युपगतौ तदभ्युपगमाच्च विरुद्धः एतावानेवायं विवाद इत्यभ्युपेतहानिः । उपेत्य चित्र (वि)वादं ब्रूमः पटस्य चित्रं रूपमिति ।

अनेकत्वमसङ्ग इति चेत् ?—अथ मन्यसे चित्रं रूपमवयविनोऽभ्युपगच्छता ऽनेकरूपोऽवयव्यभ्युपगतो भवति न चैकं द्रव्यमनेकरूपम्, नाप्यनेकस्मिन् एकमिति(५) ? न, चित्रशब्दस्यैकानेकविषयत्वात्(६)—चित्रशब्देनैकं चाभिधीयते अनेकं च, चित्रं रूपं, चित्राणि रूपाणीति । न, एकस्मिन्न-

(१) नित्येषु कथमाश्रयाश्रितभावः-पा० ४ पु० ।
(२) पटमात्र—पा० ४ पु० ।
(३) नोपपद्यमान-पा० ४ पु० ।
(४) कार्यकारणभावानभ्युपगमाच्च-पा० ४ पु० ।
(५) नाप्येकस्मिन्ननेकम्-पा० ४ पु० ।
(६) शब्दस्य नैकैकविषय-पा० ४ पु० ।

दृष्टत्वात्—न हि एकस्मिन् चित्रं दृष्टमिति ? नाभ्युपेतहानेःएकं चित्रमित्यनभ्युपगच्छताऽनेकं चित्रमिति हेयम्—एकचित्रसमुच्चयो ह्यनेकं चित्रमिति । अथानेकमचित्रं चित्रमित्युच्यते ? एवमप्यनिवृत्तो व्याघातः अचित्रं चित्रमिति यथाऽशुक्लं शुक्लमिति । अथाचित्राणि तन्तुरूपाणि संहत्य पटे चित्रं रूपमुत्पादयन्तीति(१) पक्ष आश्रीयते ? एवं चैतस्मिन्न किञ्चिद् बाध्यते । पुटान्तरे प्रसङ्गाच्चित्रप्रत्ययस्य—यस्य पटस्य एकं चित्रं पार्श्वं द्वितीयमचित्रं तेन यथैकस्मिन् पार्श्वे तं पटं पश्यतश्चित्रमिति बुद्धिर्भवति(२) एवं पुटान्तरे ऽपि चित्रपटबुद्ध्या भवितव्यम् ? भवतैवेदमुक्तम्—यस्य पटस्यैकं पार्श्वं चित्रं स तु पटो न चित्रः पार्श्वस्यापटत्वात् । चित्रप्रत्ययस्तत्र कस्मान्नेति चेद् ? चित्राचित्राभ्यां पार्श्वाभ्यां पट आरभ्यमाणश्चित्रः पट इति यथा पुटान्तरे(३) चित्रप्रत्यय एवं चित्रप्रत्ययः पुटान्तरेऽपि(४) प्रसक्तः(५) ? न प्रसक्तः—एकस्य चित्ररूपस्यानारम्भकत्वात्—एकस्मिन् पार्श्वे चित्रं रूपं तत्कथमवयविनि रूपान्तरमारभ्यत इति । एतावच्च वक्तव्यम्—अवयवरूपाभ्यामवयविनि रूपान्तरमारभ्यत इति तथोपलब्धेः । यद्ययमरूपोऽवयवी स्यात् नोपलभ्येत । न तावदवयवरूपादवयविनो ग्रहणं युक्तम्(६) वायोरप्युपलब्धिप्रसङ्गात्—यद्यन्यरूपादन्यस्योपलब्धिर्भवति वायोरप्युपलब्धिः प्राप्नोति, न चैतदस्ति । तस्मात् स्वरूपादवयव्युपलभ्यते । उभयावस्थ-

(१) चित्ररूपमारभन्ते–पा० ४ पु० ।
(२) चित्रपटबुद्धिर्भवति–पा० ४ पु० ।
(३) घटान्तरे—पा० ६ पु० ।
(४) पटान्तरे–पा० ४ पु० । (५) प्रसङ्गः–पा० ४ पु० ।
(६) न चावयवरूपाभ्यामन्यदवयविनो ग्रहणं युक्तम्–पा० ४ पु०।

बदर्शनमतिसन्धानाचावयवीति रूपोपलब्धिर्भवति । न चैवं सत्यरूपोऽवयवीति–तस्मादवयव्यभिमानः प्रतिषिध्यते सपरिष्कारकरूपो नावयवीति, यथा रूपादिषु मिथ्यासंकल्पो न रूपादय इति । अयं चार्थो मुनिना श्लोकेन दर्शितः–

"इन्द्रियार्था ह्यनर्थाय यदि स्युरविकल्पिताः ।
सर्वोऽनर्थेन युज्येत चरन्निन्द्रियगोचरः" इति ।

सर्वाग्रहणमवयव्यसिद्धेः इति मत्यवस्थितोऽपिदमाह–

केशसमूहे तैमिरिकोपलब्धिवत्तदुपलब्धिः ॥१३ ॥

केशसमूहे तैमिरिकोपलब्धिवत् तदुपलब्धिः । यथा एकैकः तैमिरिकेण नोपलभ्यते केशसमूहस्तूपलभ्यते तथा एकैकशोऽणुर्नोपलभ्यते अणुसमूहस्तूपलभ्यत इति, तदिदमणुसमूहविषयं ग्रहणमिति ।

स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद् विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः ॥ १४ ॥

स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद्विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः । न हीन्द्रियं प्रकृष्यमाणं स्वविषयमतिक्रामति । न हि चक्षुः प्रकृष्यमाणं रसं गृह्णाति नाप्यपकृष्यमाणं स्वविषयात् प्रच्यवते, अपि तु स्वविषय एवेन्द्रियस्य प्रकर्षापकर्षापेक्षाणि पटुमन्दभावेन ग्रहणानि भवन्तीति । तत्र पटुग्रहण–सामान्यविशेषतद्वतां ग्रहणमिति । मन्दे तु ग्रहणं(१) सामान्यमात्रालोचनमिति । सोऽयं तैमिरिकः कश्चित् चक्षुर्विषयं केशं न गृह्णाति केशसमूहं च गृह्णाति उभयं हि अतैमिरिकस्य चक्षुषो विषय इति । परमाणवस्त्व-

(१) मन्दग्रहणं तु–पा० ४ पु० ।

तीन्द्रिया दर्शनविषयत्वं न प्रतिपद्यन्ते । संहता ऐन्द्रियका असंहता अतीन्द्रिया इति महान् व्याघातः अनुपजातविशेषाणां दर्शनविषयत्वानुपपत्तेः । तस्मादुत्पद्यते ऽवयवी यो दर्शनस्य विषय इति । समुच्चयमात्रं(१) दर्शनस्य विषय इति चेत् ? अथ मन्यसे दर्शनस्य परमाणुसमुच्चयमात्रं विषयः समुच्चिताः परमाणवो दर्शनस्य विषयतामुपयान्तीति ? न, समुच्चयस्य संयोगभावात्—समुच्चयोऽपि निरूप्यमाणः परमाणुसंयोगः, संयोगश्चोपलभ्यमानाश्रय उपलभ्यते । भवति हीदमनेन संयुक्तमिति, यश्च विषय उपलभ्यते तस्यानुपलब्धौ चावरणं कारणमुपलभ्यते, न तु परमाणव उपलब्धिलक्षणमाप्ताः । तस्मान्न तेषामावरणादेरग्रहणकारणा(२)दग्रहणमिति ॥

**अवयवावयविप्रसङ्गश्चैवमा प्रलयात्(३) ॥ १५ ॥**

अवयवावयविप्रसङ्गश्चैवमाप्रलयात् । यश्चावयविनोऽवयवे वृत्तिविकल्पादभाव उक्तः सोऽवयवस्यावयवेषु प्रसज्यमानः प्रलयाद्वा निवर्तेत निरवयवाद् वा परमाणुतो निवर्तेत । कथमिति ? यथाऽवयव्यवयवेषु वर्तमानः प्रत्येकं सर्वात्मना वा एकदेशेन वा वर्ततेत्युक्तम्, तथावयवोऽवयवेषु वर्तमानस्तदवयवोऽप्यवयवेषु इत्येवं यावत् परमाणुरिति यावद्वा प्रलयोऽनिवृत्तिर्वेति सर्वथोपलब्धि(४)विषयो नास्ति, उपलब्धिविषयं चाश्रित्यायं वादः किमवयव्येकदेशेन वर्तते उत सर्वात्मना वर्तत इति । सोऽयमाश्रयं व्याघ्नन्नात्म(व्या)घाताय कल्पत इति ।

(१) सर्वत्र समुच्चयशब्दस्थाने सञ्चय इत्येव पाठः २ पु० ।
(२) तेषामनावरणादेरग्रहणकारणा—पा० ४ पु० ।
(३) प्रसङ्गश्चाप्रलयात्—पा० ४ पु० ।
(४) सर्वोपलब्धि—पा० ४ पु० ।

न प्रलयोऽणुसद्भावात् ॥ १६ ॥

न प्रलयोऽणुसद्भावात् । न चास्ति प्रलयोऽणुसद्भावात् । अयं च खलु विभज्यमानभेदस्तावद् वर्त्तते यावत् परमाणुरिति । परमाणुर्नाम विभागे ऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात्—लोष्टस्य विभज्यमानावयवस्याल्पतरमल्पतममुत्तरमुत्तरं भवति, स चायमल्पतरप्रसङ्गो यतो निवर्त्तते यतो नाल्पीयोऽस्ति तं परमाणुं प्रचक्ष्महे(१) इति ।

अथ न परमाण्वन्तो विभागः ? तेन—

परं वा त्रुटेः ॥ १७ ॥

परं वा त्रुटेः । अवयवविभागस्याऽऽनन्त्यात् त्रुटिरमेयः प्राप्नोति संख्यापरिमाणगुरुत्वैस्तावत्परिमाणस्त्रुटिः इयदत्र गुरुत्वं वर्त्तते (इति) इयन्तश्च परमाणवः संहतास्त्रुटिभावमापद्यन्त इति नावधारणं युक्तम् । किं कारणम् ? यथैवानेकपरमाणुसंघातो हिमवान् संख्यापरिमाणगुरुत्वैरमेयः तथा त्रुटिरपि भेदस्यानन्त्यात् प्रसज्यते । अथ प्रलयान्तो विभागः ? सोऽपि न युज्यते विभागस्य विभज्यमानहान्यनुपपत्तेः न प्रलयान्तो विभागः ॥ चायं विभागो विभज्यमानाधारो विभज्यमानश्च(२) नास्ति विभागोऽस्तीति व्याघातः । विभज्यमानावयवं परमाणुं प्रतिपद्यमानेन सावयवः परमाणुः प्रतिपत्तव्यः । सावयवत्वे च परमाणुशब्दस्यार्थो वाच्यः किमुक्तं भवति परमाणुरिति ? । ये च परमाणोरवयवास्ते किं समानपरिमाणा उत भिन्नपरिमाणा इति ? । यदि समानपरिमाणा ? अवयवावयविभावो दुरुपपादः

---

(१) आचक्ष्महे–पा० ४ पु० ।

(२) विभज्यमानाधारश्च–पा० ४ पु० ।

न हि वयं समानपरिमाणानां कचिदवयवावयविभावं पश्यामः । अथ भिन्नपरिमाणाः ? न परमाणुः प्रतिषिध्यते कार्यमिदं परमाणुरिति कृत्वा प्रतिषिध्यते ।

( इति अवयवावयविप्रकरणम् । )

अथेदानीमानुपलम्भिकः सर्वं नास्तीति मन्यमान आह—

**आकाशव्यतिभेदात्तदनुपपत्तिः ॥ १८ ॥**

आकाशव्यतिभेदात्तदनुपपत्तिः । आकाशेन परमाणुर्व्यतिभिन्नः व्यतिभेदादनित्यो घटवदिति ।

**आकाशासर्वगतत्वं वा ॥ १९ ॥**

**अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः ॥ २० ॥**

आकाशासर्वगतत्वं वा । अथ परमाणोरन्तराकाशं नास्ति असर्वगतं तर्ह्याकाशं प्रसज्यते ऽन्तःपरमाणूनामसम्बन्धात् ।

आकाशव्यतिभेदादनित्यः परमाणुरित्यभिदधानो व्यतिभेदार्थं प्रष्टव्यः किमुक्तं भवति आकाशव्यतिभेदादिति ? । यदि परमाण्वाकाशसम्बन्धो व्यतिभेदः ? तदाऽत्र न किञ्चिद् बाध्यते न हि आकाशसम्बन्धात् परमाणोर्नित्यत्वमनित्यत्वं वा प्रसज्यत इति । अथ सम्बन्धमात्रमेवानित्यताकारणं ब्रूयात् ? तथाप्याकाशग्रहणं व्यर्थम्—सम्बन्धमात्रस्यानित्यतासाधकत्वात्—न हि कृतकत्वस्य साधनभावे देवदत्तकृतकत्वादिति युक्तं वक्तुम् । संयोगमात्रं चोत्तरसूत्रेणानूद्यते चरितार्थं संयोगोपपत्तेरिति तदेतदेव पुनरुच्यते इति । तस्मान्नायं (१)व्यतिभेदार्थः ।

(१) पर-इत्यधिकं ४ पु० ।

न प्रलयोऽणुसद्भावात् ॥ १६ ॥

न प्रलयोऽणुसद्भावात् । न चास्ति प्रलयोऽणुसद्भावात् । अयं च खलु विभज्यमानभेदस्तावद् वर्तते यावत् परमाणुरिति । परमाणुर्नाम विभागे ऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात्—लोष्टस्य विभज्यमानावयवस्याल्पतरमल्पतममुत्तरमुत्तरं भवति, स चायमल्पतरप्रसङ्गो यतो निवर्तते यतो नाल्पीयोऽस्ति तं परमाणुं प्रचक्ष्महे(१) इति ।

अथ न परमाण्वन्तो विभागः ? तेन—

परं वा त्रुटेः ॥ १७ ॥

परं वा त्रुटेः । अवयवविभागस्याऽऽनन्त्यात् त्रुटिरमेयः प्राप्नोति संख्यापरिमाणगुरुत्वैस्तावत्परिमाणस्त्रुटिः इयदस्य गुरुत्वं वर्तते (इति) इयन्तश्च परमाणवः संहतास्त्रुटिभावमापद्यन्त इति नावधारणं युक्तम् । किं कारणम् ? यथैवानेकपरमाणुसंघातो हिमवान् संख्यापरिमाणगुरुत्वैरमेयः तथा त्रुटिरपि भेदस्यानन्त्यात् प्रसज्यते । अथ प्रलयान्तो विभागः ? सोऽपि न युज्यते विभागस्य विभज्यमानहान्यानुपपत्तेः न प्रलयान्तो विभागः स चायं विभागो विभज्यमानाधारो विभज्यमानश्च(२) नास्ति विभागोऽस्तीति व्याघातः । विभज्यमानावयवं परमाणुं प्रतिपद्यमानेन सावयवः परमाणुः प्रतिपत्तव्यः । सावयवत्वे च परमाणुशब्दस्यार्थो वाच्यः किमुक्तं भवति परमाणुरिति ? । ये च परमाणोरवयवास्ते किं समानपरिमाणा उत भिन्नपरिमाणा इति ? । यदि समानपरिमाणा ? अवयवावयविभावो दुरुपपादः

(१) आचक्ष्महे—पा० ४ पु० ।

(२) विभज्यमानाधारश्च—पा० ४ पु० ।

न प्रलयोऽणुसद्भावात् ॥ १६ ॥

न प्रलयोऽणुसद्भावात् । न चास्ति प्रलयोऽणुसद्भावात् । अयं च खलु विभज्यमानभेदस्तावद् वर्तते यावत् परमाणुरिति । परमाणुर्नाम विभागे ऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात्—लोष्टस्य विभज्यमानावयवस्याल्पतरमल्पतममुत्तरमुत्तरं भवति, स चायमल्पतरप्रसङ्गो यतो निवर्तते यतो नाल्पीयोऽस्ति तं परमाणुं प्रचक्ष्महे(१) इति ।

अथ न परमाण्वन्तो विभागः ? तेन—

परं वा त्रुटेः ॥ १७ ॥

परं वा त्रुटेः । अवयवविभागस्याऽऽनन्त्यात् त्रुटिरमेयः प्राप्नोति संख्यापरिमाणगुरुत्वैस्तावत्परिमाणस्त्रुटिः इयदस्य गुरुत्वं वर्तते (इति) इयन्तश्च परमाणवः संहतास्त्रुटिभावमापद्यन्त इति नावधारणं युक्तम् । किं कारणम् ? यथैवानेकपरमाणुसंघातो हिमवान् संख्यापरिमाणगुरुत्वैरमेयः तथा त्रुटिरपि भेदस्यानन्त्यात् प्रसज्यते । अथ प्रलयान्तो विभागः ? सोऽपि न युज्यते विभागस्य विभज्यमानहान्यनुपपत्तेः न प्रलयान्तो विभागः स चायं विभागो विभज्यमानाधारो विभज्यमानश्च(२) नास्ति विभागोऽस्तीति व्याघातः । विभज्यमानावयवं परमाणुं प्रतिपद्यमानेन सावयवः परमाणुः प्रतिपत्तव्यः । सावयवत्वे च परमाणुशब्दस्यार्थो वाच्यः किमुक्तं भवति परमाणुरिति ? । ये च परमाणोरवयवास्ते किं समानपरिमाणा उत भिन्नपरिमाणा इति ? । यदि समानपरिमाणा ? अवयवावयविभावो दुरुपपादः

(१) आचक्ष्महे-पा० ४ पु० ।

(२) विभज्यमानाधारश्च-पा० ४ पु० ।

**सर्वसंयोगशब्दाविभवाच्च सर्वगतम्(१) ॥ २१ ॥**

सर्वसंयोगशब्दविभवाच्च सर्वगतम् । यस्मात् सर्वमूर्तिमद्भिः संयोगाः विभवन्ति आकाशे तदाश्रया भवन्ति, शब्दाश्च स्वकारणसन्निधानादुपजायमाना सर्व एवाकाशमाश्रयन्त इति सर्वगतमाकाशम् ।

**अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः ॥ २२ ॥**

अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः । सर्पता क्रियावता द्रव्येणाकाशं न व्यूह्यते— सर्पतश्च क्रियावतो द्रव्यस्य क्रियाहेतुं गुणं न प्रतिबध्नाति । कस्मात् ? अस्पर्शत्वात् यत् स्पर्शवत् भवति तद्व्यूह्यते प्रतिबध्नाति च, न त्वेवंधर्मकमाकाशं तस्मादप्रतिघातीति । स भवान् सावयवे स्पर्शवति द्रव्ये दृष्टं धर्मं विपरीते नाशङ्कितुमर्हतीति । उक्तं चात्र—यदि परमाणुर्विभज्यते परमाणुर्न स्यात् । किं कारणम् ? विभागे ऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानमिति । विनाशश्च परमाणोर्भवन् कारणविनाशाद्वा कल्प्येत कारणविभागाद्वा । उभयं च नास्ति परमाणोरकार्यत्वादित्युक्तम् । तस्मान्नाकाशव्यतिभेदादनित्यत्वमिति ।

**मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः ॥ २३ ॥**

मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः । सावयवाः परमाणवो मूर्तिमत्त्वादिति संस्थानवत्त्वाच्च सावयवा इति । संस्थानवत् सावयवं दृष्टं यथादि, संस्थानवन्तश्च परमाणवः तस्मात् सावयवा इति ।

---

(१) शब्दसंयोगविभवाच्च सर्वगतमिति न्यायसूचीनिबन्धे । विश्वनाथसम्मतोऽपि ।

अथ परमाण्वन्तःसम्बन्धो व्यतिभेदः ? सोऽपि न युक्तः अकार्यत्वात् परमाणोः ।

अन्तर्बहिरिति कार्यस्य कारणान्तरवचनम्, अकार्यश्च परमाणुस्तस्मान्नान्तर्बहिरिति । अथ परमाण्ववयवसम्बन्ध आकाशेन व्यतिभेदः ? एतदपि तादृगेव, परमाणोरकार्यत्वान्न तस्यावयवा इति । अथ परमाण्ववयवानां विभागो व्यतिभेदः ? सोऽप्यकार्यत्वेनैव प्रत्युक्तः । कार्यस्यावयवा विभज्यन्ते अकार्यश्च परमाणुरिति । तस्मान्नावयवविभागः । उपेत्य परमाणोरवयवान् न तद्विभागस्याकाशं कारणं, कर्मजो हि विभागः तस्याकाशमपि कारणमिति न न्यायोऽस्ति । आकाशं च विभागहेतुत्वेन प्रतिपद्यमानः सर्वभावानामनवस्थानं प्रतिपद्येत । न हि सन्निहिते विभागहेतावाकाशे भावानामवस्थानं युक्तम् । अथ सदप्याकाशं निमित्तान्तरमपेक्षते ? तद्व्यतिरेकेणाकाशस्यापि तदुत्पत्तावस्ति सामर्थ्यमिति प्रमाणाभावः । अथान्तः सुषिरं व्यतिभेदः ? एतदपि नास्ति–सर्वतो ऽवयवरहितस्य यस्य मध्ये ऽवयवा न सन्ति तत्सुषिरं, न च परमाणोरवयवाः सन्ति, कुतः सुषिरं व्यतिभेदः । न चान्या गतिरस्ति । तस्मादाकाशव्यतिभेदादिति शून्यमभिधानम् । यत् पुनरेतदाकाशमसर्वगतं प्रसज्यते अन्तःपरमाणुनाऽसम्बन्धादिति ? न, सर्वगतार्थापरिज्ञानात्—नायं सर्वगतार्थो यत्रास्ति तेन सम्बन्ध इति, अपि तु यन्मूर्तिमत् तेन सर्वेण सम्बन्ध इति(१) सर्वगतत्वार्थः । न च परमाणोर्मध्यमस्ति तस्माच्च तेनासम्बन्धादाकाशमसर्वगतं प्रसज्यत इति ।

(१) तेन सर्वेण सम्बद्धमत–पा० २ पु० ।

**सर्वसंयोगशब्दविभवाच्च सर्वगतम्(१) ॥ २१ ॥**

सर्वसंयोगशब्दविभवाच्च सर्वगतम् । यस्मात् सर्वमूर्तिमद्भिः संयोगाः विभवन्ति आकाशे तदाश्रया भवन्ति, शब्दाश्च स्वकारणसन्निधानादुपजायमाना सर्वे एवाकाशमाश्रयन्त इति सर्वगतमाकाशम् ।

**अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः ॥ २२ ॥**

अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः । सर्पता क्रियावता द्रव्येणाकाशं न व्यूह्यते— सर्पतश्च क्रियावतो द्रव्यस्य क्रियाहेतुं गुणं न प्रतिबध्नाति । कस्मात् ? अस्पर्शत्वात् यद् स्पर्शवद् भवति तद्व्यूह्यते प्रतिबध्नाति च, न त्वेवंधर्मकमाकाशं तस्मादप्रतिघातीति । स भवान् सावयवे स्पर्शवति द्रव्ये दृष्टं धर्मं विपरीते नाशङ्कितुमर्हतीति । उक्तं चात्र—यदि परमाणुर्विभज्यते परमाणुर्न स्यात् । किं कारणम् ? विभागे ऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानमिति । विनाशश्च परमाणोर्भवन् कारणविनाशाद्वा कल्प्येत कारणविभागाद्वा । उभयं च नास्ति परमाणोरकार्यत्वादित्युक्तम् । तस्मान्नाकाशाव्यतिभेदादनित्यत्वमिति ।

**मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः ॥ २३ ॥**

मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः । सावयवाः परमाणवो मूर्तिमत्त्वादिति संस्थानवत्त्वाच्च सावयवा इति । संस्थानवद् सावयवं दृष्टं घटादि, संस्थानवन्तश्च परमाणवः तस्माद् सावयवा इति ।

(१) शब्दसंयोगविभवाच्च सर्वगतमिति न्यायसूचीनिबन्धे । विश्वनाथसम्मतोऽपि ।

संयोगोपपत्तेश्च ॥ २४ ॥

अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः ॥ २५ ॥

संयोगोपपत्तेश्च । सावयवत्वं संयोगित्वादिति सूत्रार्थः ।

नन्विदं सूत्रं संस्थानवत्त्वादित्यनेनैव चरितार्थं संयोगविशेषस्य संस्थानशब्देनाभिधानात् ?, न (च) चरितार्थं, अवयवसंयोगविशेषस्य संस्थान(त्व)त्वेनाभिधानात् संयोगमात्रं च संयोगशब्देनाभिधीयत इति न दोषः । तत्र मूर्तिर्नामाव्यापिद्रव्यस्य षड्विधं(१) परिमाणम्—अणु महद्दीर्घं ह्रस्वं परमह्रस्वं परमाण्विति । संस्थानं नाम प्रचयाख्यः संयोगः । संयोगोऽप्राप्तिपूर्विका प्राप्तिरिति । यत् तावत् मूर्तिमत्त्वात् सावयवा इति ? तन्न, अनेकान्तात्—यः परमाणोरवयवः स मूर्तिमांश्च निरवयवश्चेत्यनेकान्तः । अथ मूर्तिमत्त्वात् तस्याप्यवयवाः सन्ति ? एवं सति त्रुटिरमेयः प्राप्नोति गुरुत्वसंख्यापरिमाणैरित्युक्तम् । अथ तावन्मूर्तिमद्विभज्यते यावदन्त इति ? अन्तो निरवयव इति वाच्यम्(२) । अथान्तो विभागः ? स न युक्तः विभागस्य विभज्यमानैर्विनाऽनुपपत्तेरिति । एतावच्चैतत् स्यात् परमाण्वन्तो विभागः प्रलयान्तो वा अनन्तो वा, यदि परमाण्वन्तोऽनेकान्तः व्याहतं भवति परमाणुर्मूर्तिमांश्च न च सावयव इति । कः पुनरत्र व्याघातः ? निरवयवं मूर्तिमन्तं च परमाणुं प्रतिपद्यसे सावयव इति च ब्रवीषि । प्रतिपत्त्या व्याहन्यते । अनन्ते प्रलयान्ते च व्याघातः । त्रुटेरमेयत्वप्रसङ्गः विभागस्य चानाधारत्वप्रसङ्गः । सावयवः परमाणुरिति च प्रतिज्ञापदे व्याहते । कथमिति ? सावयवशब्दस्यार्थः

(१) अव्यापिनो द्रव्यस्य षड्विधं—पा० ४ पु० ।

(२) इत्युक्तम्—पा० ४ पु० ।

समानजातीयारब्धं समानजातीयाश्रितम् अवयवः तदाधार इति । सावयवः परमाणुरिति ब्रुवता कार्यविशेषः परमाणुरित्युक्तं भवति। कार्यविशेषः परमाणुश्चेति व्याहतम् । अथैकपरमाणुपूर्वकत्वं परमाणोः प्रतिपद्यसे तथा च न परमाणुः सावयव इति नास्यावयवाः सन्ति किं तु कृतकः परमाणुपूर्वकत्वात् । एतच्च न दृष्टान्ताभावात्-एकं कारणमिति न दृष्टान्तोऽस्ति एकेन चारभ्यमाणस्य परमाणोर्न कारणसामग्र्यपेक्षणमस्तीति न प्रागभावो युक्तः यस्य प्रागभावो नास्ति तस्य चोत्पादोऽपि न युक्तः। अथैकशब्दपूर्वकत्वे सति शब्दादीनां प्रागभावादि प्रतिपद्यते ? तदप्यसिद्धम्-नैकं कारणमस्ति आश्रयापेक्षः शब्दः शब्दान्तरं करोतीति ।

प्रतिपद्यापि चैकपरमाणुपूर्वकत्वं परमाणोः कः सावयवार्थः कतमस्तत्रावयवः कतमस्तत्रावयवीति ? । अथ कारणमेवावयव इति ? न कार्यपरमाणुकाले कारणपरमाणुरस्तीति सावयवार्थो वक्तव्यः । मूर्तिमत्त्वात् सावयवः परमाणुरिति ब्रुवाणो विकल्पतः पुनः पर्यनुयोज्यः केयं मूर्तिः ? यया मूर्त्या मूर्तिमान् परमाणुरिति, सत्यां च मूर्तौ किमर्थान्तरमनर्थान्तरं वा परमाणोर्मूर्तिरिति ? यदि रूपादिविशेषो मूर्तिश्च भवत्पक्षे तया मूर्त्या मूर्तिमान् कश्चन । न च रूपादिव्यतिरिक्त प्रमाणेन परमाणुं प्रतिपद्यते सर्वापकर्षप्राप्ता रूपादय एव परमाणुः न च रूपादिभीरूपादयो रूपादिमन्तः न चानर्थान्तरभावे मतुब्व्युत्पादनं पश्यामः । ननु दृष्टोऽनर्थान्तरभावेऽपि मतुप्प्रत्ययो यथा हस्तिमती सेनेति ? न दृष्ट इति ब्रूमः । यथा च सेना(न)र्थान्तरं तथोक्तमिति । असति चार्थान्तरभूते परमाणावसत्यां च मूर्तौ सावयवाः परमाणवो मूर्तिमत्त्वादिति वाक्यस्यार्थो रूपादयो रूपादिमन्तो रूपादिमत्वा-

संयोगोपपत्तेश्च ॥ २४ ॥

अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः ॥२५॥

संयोगोपपत्तेश्च । सावयवत्वं संयोगित्वादिति सूत्रार्थः ।

नन्विदं सूत्रं संस्थानवत्त्वादित्यनेनैव चरितार्थं संयोगविशेषस्य संस्थानशब्देनाभिधानात् ?, न (च) चरितार्थं, अवयवसंयोगविशेषस्य संस्थान(व)त्वेनाभिधानात् संयोगमात्रं च संयोगशब्देनाभिधीयत इति न दोषः। तत्र मूर्तिर्नामाव्यापिद्रव्यस्य षड्विधं(१) परिमाणम्—अणु महद्दीर्घं ह्रस्वं परममहत्त्वं परमाण्विति । संस्थानं नाम प्रचयाख्यः संयोगः । संयोगोऽप्राप्तिपूर्विका प्राप्तिरिति । यत् तावत् मूर्तिमत्त्वात् सावयवा इति ? तन्न, अनेकान्तात्—यः परमाणोरवयवः स मूर्तिमांश्च निरवयवश्चेत्यनेकान्तः । अथ मूर्तिमत्त्वात् तस्याप्यवयवाः सन्ति ? एवं सति त्रुटिमेयः प्राप्नोति गुरुत्वसंख्यापरिमाणैरित्युक्तम् । अथ तावन्मूर्तिमद्विभज्यते यावदन्त इति ? अन्तो निरवयव इति वाच्यम्(२)। अथान्तो विभागः ? स न युक्तः विभागस्य विभज्यमानैर्विनाऽनुपपत्तेरिति । एतावत्त्वैतत् स्यात् परमाण्वन्तो विभागः प्रलयान्तो वा अनन्तो वा, यदि परमाण्वन्तोऽनेकान्तः व्याहतं भवति परमाणुर्मूर्तिमांश्च न च सावयव इति । कः पुनरत्र व्याघातः ? निरवयवं मूर्तिमन्तं च परमाणुं प्रतिपद्यसे सावयव इति च ब्रवीषि । प्रतिपत्त्या व्याहन्यते । अनन्ते प्रलयान्ते च व्याघातः । त्रुटिमेयत्वप्रसङ्गः विभागस्य चानाधारत्वप्रसङ्गः । सावयवः परमाणुरिति च प्रतिज्ञापदे व्याहते । कथमिति ? सावयवशब्दस्यार्थः

(१) अव्यापिनो द्रव्यस्य षड्विध—पा० ४ पु० ।

(२) इत्युक्तम्—पा० ४ पु० ।

रमाणूनां(१) सम्बन्धिनं परमाणुमधिकृत्याभिधीयते ? ततोनेकैः संयोगः समानदेशा इति न किञ्चित् बाध्यते ।

यत् पुनरेतत् समानदेशाः परमाणव इति ? तन्नानभ्युपगमात्–देशा एव तावत् परमाणौ न सन्तीति कुतः समानदेशा भविष्यन्ति । न च किञ्चिद् द्रव्यं समानदेशमस्तीत्यसिद्धो दृष्टान्तः । ननु च कार्यकारणे(२) संयोगिसमानदेशे यथा घटः पटेन सम्बद्ध्यते तन्तुना तदंशुना च तन्त्वाश्रयेणेत्यादि ? । एतदनभ्युपगमेन प्रत्युक्तम् । समानदेशास्तत्र संयोगा इति न कार्यकारणे न च संयोगा अपि द्वे द्वे अधिकरोति । षष्ठ्यां समानदेशत्वादिति वाक्यं न द्रव्यसमानदेशतायां व्यवतिष्ठते न संयोगसमानदेशतायामिति ।

यत् पुनरेतद्दिग्देशभेदो यस्यास्ति तस्यैकत्वं न युज्यते ? क एवमाह दिग्देशभेदोऽस्तीति, दिग्देशभेदाश्च दिशः संयोगाः । परिकल्पितांश्च दिग्देशभेदान् कल्पयित्वा परमाणोर्दिग्देशभेदोऽभ्युपगम्यते, मुख्यतस्तु न दिग्देशभेदो नापि परमाणोर्भेदः परमाणुर्दिशा सम्बद्ध्यत इति—एतावन्मात्रं विद्यते एतच्च न किञ्चिद् बाधते । छायावृती तर्हि न प्राप्नुतः परमाणोरदेशत्वादिति ? न देशवत्त्वाच्छायावृती, किं तर्हि ? मूर्तिमत्स्पर्शवत्त्वात् मूर्तिमत् स्पर्शविशिष्टं द्रव्यं द्रव्यान्तरमावृणोति । किमिदमावृणोति ? स्वसम्बन्धित्वेनेतरस्य सम्बन्धं(३) प्रतिषेधतीति । छाया तु तेजःपरमाणोरावरणात् मूर्तिमता परमाणुना तेजःपरमाणुराव्रियते यत्र(४) चास्यावरणं तत्र छायेति विरलतेजःसम्ब-

(१) ततो भिन्नदेशा अथ परमाणूनां—पा० ४ पु० ।
(२) कार्यकारणे—पा० ४ पु० ।
(३) सम्बन्धित्वं—पा० ४ पु० । (४) यस्य—पा० पु० ।

दिति। एतेन पटो मूर्त्तिमत्त्वात् सावयव इति प्रत्युक्तम्। न च रूपादिव्यतिरिक्तं पटं प्रतिपद्यसे न मूर्त्तिमत्त्वम् अथ च मूर्त्तिमत्त्वात् सावयवः पट इति च ब्रवीषि। व्यतिरेकाभ्युपगमे व्याघातः अनभ्युपगमे नार्थः सिद्ध्यतीति? दृष्टान्तस्योभयधर्मसिद्धत्वात् न पटे सावयवत्वं मूर्त्तिमत्त्वार्थं इति। एतेन सावयवाः परमाणवः संयोगोपपत्तेरिति व्याख्यातम्। संयोगस्याभ्युपगमे व्याघातः अनभ्युपगमे परमाणुत्वादिति हेत्वर्थः। संस्थानविशेषवत्त्वं तु असिद्धम्—स एवार्थः सावयवत्वादिति स एवार्थः संस्थानविशेषवत्त्वादिति। अथ संस्थानमपर्वगतद्रव्यपरिमाणं प्रतिपद्येथाः(१) एवं सति मूर्त्तिमत्त्वेन संस्थानवत्त्वं चरितार्थमिति पृथग् न वक्तव्यम् मूर्त्तिमत्त्वात् संस्थानविशेषवत्त्वाच्चेति। उक्तं चात्र विभागे ऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात् अणवयवस्य चाणुतरत्वप्रसङ्गादणुकार्यप्रतिषेध इति। यत् पुनरेतत् संयोगोपपत्तेर्मध्ये सन्नणुः पूर्वापराभ्यां सम्बध्यमानः(२) सावयवः।

अयमेव चार्थः कारिकया गीयते(३)—

"षट्केन युगपद्योगात् परमाणोः षडंशता(४)।

षण्णां समानदेशत्वे पिण्डः स्यादणुमात्रकः॥" इति।

परमाणुर्युगपत् षड्भिः सम्बध्यमानः षडंशः प्राप्नोति भिन्नदेशत्वात् सम्बन्धानाम्। अथ समानदेशाः सर्वे संयोगाः षण्णां परमाणूनां? पिण्डः परमाणुमात्रकः प्राप्नोति। यदि द्वे द्वे द्रव्ये अधिकृत्याभिधीयते ततोऽभिन्नदेशाः। अथ प-

(१) मन्येथाः—पा० ४ पु०। (२) सरुध्यमानः—पा० ४ पु०।

(३) अभिधीयते—पा० ४ पु०।

(४) योगात् परमाणोः षडङ्गता—पा० ४ पु०।

रमाणूनां(१) सम्बन्धिनं परमाणुमधिकृत्याभिधीयते ? ततोनेकैः संयोगः समानदेशा इति न किञ्चित् बाध्यते ।

यत् पुनरेतत् समानदेशाः परमाणव इति ? तत्रानभ्युपगमात्–देशा एव तावत् परमाणौ न सन्तीति कुतः समानदेशा भविष्यन्ति । न च किञ्चिद् द्रव्यं समानदेशमस्तीत्यसिद्धो दृष्टान्तः । ननु च कार्यकारणे(२) संयोगिसमानदेशो यथा घटः पटेन सम्बद्ध्यते तन्तुना तदंशुना च तन्त्वाश्रयेणेत्यादि ? । एतदनभ्युपगमेन प्रत्युक्तम् । समानदेशास्तत्र संयोगा इति न कार्यकारणे न च संयोगा अपि द्वे द्वे अधिकृत्येति । षण्णां समानदेशत्वादिति वाक्यं न द्रव्यसमानदेशतायां व्यवतिष्ठते न संयोगसमानदेशतायामिति ।

यत् पुनरेतद्दिग्देशभेदो यस्यास्ति तस्यैकत्वं न युज्यते ? क एवमाह दिग्देशभेदोऽस्तीति, दिग्देशभेदाश्च दिशः संयोगाः । परिकल्पितांश्च दिग्देशभेदान् कल्पयित्वा परमाणोर्दिग्देशभेदोऽभ्युपगम्यते, मुख्यतस्तु न दिग्देशभेदो नापि परमाणोर्भेदः परमाणुर्दिशा सम्बद्ध्यत इति—एतावन्मात्रं विद्यते एतच्च न किञ्चिद् बाधते । छायावृती तर्हि न प्राप्नुतः परमाणोरदेशत्वादिति ? न देशवत्त्वाच्छायावृती, किं तर्हि ? मूर्तिमत्स्पर्शवत्त्वात् मूर्तिमत् स्पर्शविशिष्टं द्रव्यं द्रव्यान्तरमावृणोति । किमिदमावृणोति ? स्वसम्बन्धित्वेनेतरस्य सम्बन्धं(३) प्रतिषेधतीति । छाया तु तेजःपरमाणोरावरणात् मूर्तिमता परमाणुना तेजःपरमाणुराव्रियते यत्र(४) चास्यावरणं तत्र छायेति विरलतेजःसम्ब-

(१) ततो भिन्नदेशा अथ परमाणूनां–पा० ४ पु० ।
(२) कार्यकारणे–पा० ४ पु० ।
(३) सम्बन्धित्वं–पा० ४ पु० ।    (४) यस्य—पा० पु० ।

न्धीनि द्रव्यगुणकर्माणि छायेत्यभिधीयते सर्वतो व्या-
वृत्ततेजःसम्बन्धीनि तु तानि तमःशब्दकानीति। तदेवं छाया-
वृत्त्यो(१)रन्यथासिद्धत्वादहेतुः । एतेन क्रियावत्त्वात् स्पर्श-
वत्त्वाद् द्रव्यान्तरारम्भकत्वात् क्रियाकारणसंस्काराश्रयत्वा-
त(२) परत्वापरत्ववत्त्वादित्येवमादि प्रत्युक्तम्। कथमिति ? यथा
मूर्तिमत्त्वात् सावयवा इत्येतस्मिन् वाक्ये प्रतिज्ञादोषा हेतु-
दोषाः तथा सर्वेष्वेतेषु पक्षेषु परपक्षाभ्युपगतेषु हेतुषु यथासम्भवं
विरुद्धासिद्धानैकान्तिकादिदोषभेदा वक्तव्या इति। शेषं भाष्ये।

ये तु क्रियावत्त्वादिभिः परमाणूनामनित्यत्वं साधय-
न्ति तैः क्रियावत्त्वं व्यञ्जकं वा कारकं वाऽवश्यमभ्युपगन्त-
व्यम्। यदि क्रियावत्त्वमनित्यत्वस्य कारकं ? यदक्रियं तन्नित्यं
प्राप्नोति। अथ जन्म क्रियेत्यभिधीयते ? तदाऽनित्याः परमाणवो
जन्मवत्त्वादिति हेत्वर्थः जन्मवत्त्वमसिद्धं परमाणूनामिति। अथ
क्रियावत्त्वं व्यञ्जकमुच्यते ? व्यञ्जकत्वे ऽप्यन्यतोऽनित्यत्वं पर-
माणूनां वक्तव्यम्। न ह्ययं व्यञ्जकस्य धर्मो यद्व्यङ्ग्यं वस्तु
कुर्यात् अपि तु अन्यतो भूतं हेतुर्व्यनक्ति। न हि प्रदीपोऽस-
न्तमर्थं (जनयित्वा) प्रकाशयति। परसिद्धोत्क्षेपणादिक्रियाभ्यु-
पगमे विरुद्धः। एतेन घटादिदृष्टान्तो व्याख्यातः। क्रियावत्त्वं
च क्रियासमवायः तदभ्युपगमे विरुद्धः अनभ्युपगमे ऽनि-
त्यः परमाणुः परमाणुत्वादिति हेत्वर्थः। मतुपश्चार्थान्तरे दृष्ट-
त्वाद् विरुद्धः अनर्थान्तरे दृष्टान्ताभावः। एवं शेषाणि वाक्या-
नि विकल्प्य यथासम्भवं दोषा वक्तव्या इति। अथ परपक्षसिद्धा-

(१) छायावरणयोः—पा० ४ पु०।
(२) संस्कारप्रत्ययत्वात्—पा० ४ पु०।

नैतानभ्युपैति(१) यदि प्रमाणतोऽभ्युपैति ? कथं परपक्षसिद्धाः । अथ न प्रमाणतः ? कथं स्वयमनुपलब्धो धर्मः परप्रतिपादनायोपादीयत इति ॥

( इति निरवयवप्रकरणम् । )

---

यदिदं भवान् बुद्धीराश्रित्य विषयाः सन्तीति मन्यते मिथ्याबुद्धय एताः—यदि हि तत्त्वबुद्धयः स्युः बुद्ध्या विवेचने क्रियमाणे बुद्धिविषयाणां याथात्म्य(२)मुपलभ्येत—

**बुद्ध्या विवेचनात् तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे(३) पटसद्भावानुपलब्धिवत् तदनुपलब्धिः ॥ २६ ॥**

बुद्ध्या विवेचनात् तु भावानां याथात्म्यानुपलब्धिः तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः । य एते बुद्धिविषया गवादयोघटादयश्च नैते तत्त्वतः सन्ति ? कस्मात् ? बुद्ध्या विविच्यमानानां भेदशोऽग्रहणात् । यथाऽयं तन्तुरयं तन्तुरयं तन्तुरिति बुद्ध्या तन्तुषु विविच्यमानेषु न पटः कश्चिदस्ति यः पटबुद्धेः विषयः स्यादेव(४)मंशुषु बुद्ध्या विविच्यमानेषु, एवं तदवयवेषु तावद् यावत् परमाणुः, परमाणवोऽपि भागशो विविच्यमाना(५)स्तावत् यावत् प्रलय इति । तदेवं सर्वस्यासत्त्वे गवादिबुद्धयो घटादिबुद्धयश्च मिथ्याबुद्धय इति ॥

---

( १ ) एतान् धर्मानभ्युपैति—पा० ४ पु० ।
( २ ) यथार्थता—पा० ४ पु० ।
( ३ ) न याथात्म्योपलब्धिस्तन्त्वपकर्षे—इति क्वचित् । न याथार्थ्यस्योपलब्धिस्तन्त्वपकर्षे—पा० ■ पु० ।
( ४ ) भवेदेव—पा० ४ पु० । (५) विमन्यमाना इति २ पु०पा० ।

न्धीनि द्रव्यगुणकर्माणि छायेत्यभिधीयते सर्वतो व्यावृत्ततेजःसम्बन्धीनि तु तानि तमःसञ्ज्ञकानीति । तदेवं छायावृत्योः(१)न्यथासिद्धत्वादहेतुः । एतेन क्रियावत्त्वात् स्पर्शवत्त्वाद् द्रव्यान्तरारम्भकत्वात् क्रियाकारणसंस्काराश्रयत्वात्(२) परत्वापरत्ववत्त्वादित्येवमादि प्रत्युक्तम् । कथमिति ? यथा मूर्तिमत्त्वात् सावयवा इत्येतस्मिन् वाक्ये प्रतिज्ञादोषा हेतुदोषाः तथा सर्वेष्वेतेषु पक्षेषु परपक्षाभ्युपगतेषु हेतुषु यथासम्भवं विरुद्धासिद्धानैकान्तिकादिदोषभेदा वक्तव्या इति । शेषं भाष्ये ।

ये तु क्रियावत्त्वादिभिः परमाणूनामनित्यत्वं साधयन्ति तैः क्रियावत्त्वं व्यञ्जकं वा कारकं वाऽवश्यमभ्युपगन्तव्यम् । यदि क्रियावत्त्वमनित्यत्वस्य कारकं ? यदाक्रियं तन्नित्यं प्राप्नोति । अथ जन्म क्रियेत्यभिधीयते ? तदाऽनित्याः परमाणवो जन्मवत्त्वादिति हेत्वर्थः जन्मवत्त्वमसिद्धं परमाणूनामिति । अथ क्रियावत्त्वं व्यञ्जकमुच्यते ? व्यञ्जकत्वे ऽप्यन्यतोऽनित्यत्वं परमाणूनां वक्तव्यम् । न ह्ययं व्यञ्जकस्य धर्मो यद्व्यङ्ग्यं वस्तु कुर्यात् अपि तु अन्यतो भूतं हेतुर्व्यनक्ति । न हि प्रदीपोऽसन्तमर्थं (जनयित्वा) प्रकाशयति । परासिद्धोत्क्षेपणादिक्रियाभ्युपगमे विरुद्धः । एतेन घटादिदृष्टान्तो व्याख्यातः । क्रियावत्त्वं च क्रियासमवायः तदभ्युपगमे विरुद्धः अनभ्युपगमे ऽनित्यः परमाणुः परमाणुत्वादिति हेत्वर्थः । मतुपश्चार्थान्तरे दृष्टत्वाद् विरुद्धः अनर्थान्तरे दृष्टान्ताभावः । एवं शेषाणि वाक्यानि विकल्प्य यथासम्भवं दोषा वक्तव्या इति। अथ परपक्षसिद्धा-

(१) छायावरणयोः—पा० ४ पु० ।
(२) संस्कारप्रत्ययत्वात्—पा० ४ पु० ।

स्वप्ने विषया न सन्ति अथ च विषयाभिमानः एवं न प्रमाणानि न प्रमेयाणि सन्ति अथ च प्रमाणप्रमेयाभिमानः ।

**हेत्वभावादसिद्धिः ॥ ३३ ॥**

**स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः ॥३४॥**

मायागन्धर्वनगरमृगतृष्णिकावद्वेति न, प्रमाणाभावात् स्वप्नान्तवदविद्यमानेषु विषयेषु अभिमान इत्यत्र न हेतुरुच्यते इति स्वप्नान्ते चासन्तो विषया इति को हेतुरिति । ख्यातिरिति चेत् ? अयं जाग्रदवस्थोपलब्धानां विषयाणां चित्तव्यतिरेकिणामसत्त्वे हेतुः ख्यातिः स्वप्नवदिति ?, न दृष्टान्तस्य साध्यसमत्वात्—य एते स्वप्नावस्थायां विषयाः ख्यान्ति न ते चित्तव्यतिरिक्ता इति अत्र को हेतुः प्रतिबुद्धेनानुपलम्भान्न सन्तीति । अथ मन्यसे यस्मात् प्रतिबुद्धेन नोपलभ्यन्ते तस्मान्न सन्तीति ?, न, विशेषणोपादानात्—ये प्रतिबुद्धेनोपलभ्यन्ते सन्तीति प्राप्तं व्यर्थं वा विशेषणं प्रतिबुद्धेनानुपलम्भादिति । यदि चोपलभ्यमानं जाग्रदवस्थायां स्वप्नावस्थायां विषयमसन्तं मन्यसे (१) अथ चित्तमस्तीत्यत्र को हेतुरिति । विपर्यये च सामर्थ्याभावादहेतुः जाग्रतोऽनुपलब्धेरिति । यद्युपलब्धिः सत्त्वसाधनं ततोऽनुपलब्धिरसत्त्वं साधयति विपर्यये हि हेतोः सामर्थ्यं दृष्टमिति । न चित्तव्यतिरेकिणो विषया ग्राह्यत्वात् वेदनादिवदिति—यथा वेदनादिग्राह्यं न चित्तव्यतिरिक्तं तथा विषया अपि वेदना—सुखदुःखे,चित्तं ज्ञानमिति, सुखदुःखाभ्यां चान्यं ज्ञानमित्यसिद्धो(२) दृष्टान्तः सुखदुःखे ग्राह्ये ग्रहणं ज्ञा-

(१) प्रतिपद्यसे—पा० ४ पु० ।

(२) सुखदुःखाभ्यां चान्यं वेदनादिग्राह्यं न चित्तव्यतिरिक्तज्ञानमित्यसिद्धो—पा० ४ पु० ।

नमिति(१) ग्राह्यग्रहणभावादन्यत्वम् । अथाभिन्नं विज्ञानं वेदनायास्तथापि ग्राह्यं च गृहीतिश्च एकमिति न दृष्टान्तोऽस्ति । न हि कर्म च क्रिया च एकं भवतीति । अथैकत्वं प्रमाणवृत्तमनपेक्ष्य प्रतिपद्येथाः ? तथापि चत्वारः स्कन्धा इति शास्त्रव्याघातः । अथ चतुष्टं न प्रतिपद्यते दृष्टं विज्ञानमात्रमेवाभ्युपगम्यते ? सोऽपि दृष्टं विज्ञानभेदमनुयोक्तव्यः बाह्यस्याऽऽध्यात्मिकस्य च विज्ञानभेदहेतोरभावात्(२) कथं विज्ञानभेद इति । स्वप्नवद्विज्ञानभेदं यदि प्रतिपद्यते ? सोऽपि दृष्टानुभूतानां भावानां भावनावशेन विज्ञानभेदं प्रतिपादयितव्यः । अथ स्वप्नपक्षे ऽपि भावनाभेदाद् विज्ञानभेदं प्रतिपद्येत सोऽपि भाव्यभावकयोर्भेदेन(३) प्रत्यवस्थेयः नाभिन्नं भाव्यं भावकं चेति । ये चैते स्वप्नादिप्रत्ययाः सुरविमानोद्यानपानभेदानुविधायिनः ते मिथ्याप्रत्यया इति, मिथ्याप्रत्ययानां च जाग्रदवस्थाप्रत्ययसामान्याद्भावः । ममापि सर्व एव मिथ्याप्रत्यया भविष्यन्तीति ब्रुवाणः प्रधानमनुयोक्तव्यः न च निःप्रधानं विपर्ययप्रत्ययं पश्याम इति । चित्तव्यतिरेकेण च विषयमप्रतिपद्यमानः साधनदूषणस्वभावं पर्यनुयोक्तव्यः । यदि बाह्यस्वभावकं ? व्याघातः । अथ चित्तस्वभावकं ? न चित्तेन परः प्रतिपाद्यते इत्यर्थोऽस्य न(४) सिद्ध्यति । न हीतरस्त्वप्रमनाख्यातमितरो विजानातीति । अथ शब्दाकारं चित्तं प्रतिपद्यते ? तेनापि शब्दाकारं चित्तमित्याकारार्थो वक्तव्यः । आ-

(१) विज्ञानमिति—पा० ४ पु० ।
(२) सोऽपि दृष्टविज्ञानहेतोरभावात्—पा० ४ पु० ।
(३) भाव्यभावकवर्गयोर्भेदेन—पा० ४ पु० ।
(४) इत्यर्थो न—पा० ४ पु० ।

कारो हि नाम प्रधानवस्तुसामान्याद्धतस्मिंस्तदिति प्रत्ययः। न च भवत्पक्षे शब्दो विद्यत इति शब्दाकारं चित्तमिति निरभिधेयं वाक्यम् । चित्तव्यतिरिक्तं विषयमप्रतिपद्यमानो जाग्रत्स्वप्नावस्थयोर्भेदं पर्यनुयोज्यः जाग्रदवस्थायां विषया न सन्ति स्वप्नावस्थायामपीति इयं स्वप्नावस्था इयं जाग्रदवस्थेति कुत एतत् । धर्माधर्मव्यवस्था च न प्राप्नोति(१) यथा स्वप्नावस्थायामगम्यागमनादधर्मोत्पत्तिर्न भवत्येवं जाग्रदवस्थायामपि न स्यात् । अथ निद्रोपघातानुपघातौ भेदं जनयत इति प्रतिपद्येत ? तदपि तादृगेव निद्रोपघातश्चेतसो वैकृत्यहेतुरिति कथमवगम्यते । अथ विज्ञानस्य स्पष्टतामस्पष्टतां च भेदं प्रतिपद्येत ? विषयमन्तरेण ज्ञानस्य स्पष्टताऽस्पष्टता च वक्तव्या । असत्यर्थे विज्ञानभेदो दृष्ट इति चेत् ?— अथ मन्यसे यथा तुल्यकर्मविपाकोत्पन्नाः प्रेताः पूयपूर्णां नदीं पश्यन्ति, न तत्र नद्यस्ति, न पूयं, न ह्येकं वस्त्वनेकाकारं भवितुमर्हति, दृष्टश्च विज्ञानभेदः केचित् तामेव जलपूर्णां पश्यन्ति केचित् रुधिरपूर्णामितोऽवसीयते (यथा)ऽध्यात्मनिमित्तापेक्षमसति बाह्ये निमित्ते विज्ञानमेव तथोत्पद्यते इति ? न व्याघातात्—असति बाह्ये विज्ञानमेव तथेति ब्रुवाणः प्रष्टव्यो जायते कथं तथेति । यदि रुधिराकारं विज्ञानं ? रुधिरं तर्हि वक्तव्यं किं रुधिरमिति, एवं जलाकारं नद्याकारं च वक्तव्यं, पूयपूर्णां पश्यन्तीति च वाक्यस्य पदानि प्रत्येकं विचार्यमाणानि रूपादिस्कन्धाभावे निर्विषयाणि भवन्ति, देशादिनियमश्च न प्राप्नोति, एकस्मिन् देशे नदीं पूयपूर्णां पश्य-

(१) व्यवस्थानं न प्राप्नोति—पा० ४ पु०।

न्ति न देशान्तरेषु, असत्यर्थे नियमहेतुर्वक्तव्यः । यस्य पुनर्विद्यमानं केनचिदाकारेण व्यवस्थितं तस्य शेषो मिथ्याप्रत्यय इति युक्तम् । मिथ्याप्रत्ययाश्च भवन्तो न प्रधानं बाधन्त(१) इति पुत्रादिप्रत्ययानां प्रधानं वक्तव्यमिति—यथा पुत्रादिप्रत्ययानामेवं मायागन्धर्वनगरमृगतृष्णासलिलानामिति । कर्मणो वासनान्यत्र फलमन्यत्र कल्प्यत इति । अस्यार्थोयमेव किल कर्म तत्रैव किल फलेन भवितव्यम् यस्य तु चित्तव्यतिरेकिणो विषयास्तस्यान्यत्र कर्मान्यत्र फलमिति व्यधिकरणे कर्मफले भवत इति ? । तस्यानभ्युपगमात्—न मया कर्मफले व्यधिकरणे अभ्युपगम्येते आत्मनि कर्म तत्रैव फलमित्यदोषः । मदीयाच्चित्तात् अर्थान्तरं विषयाः सामान्यविशेषवत्त्वात् सन्तानान्तरचित्तवत् । प्रमाणगम्यत्वात् कार्यत्वादनित्यत्वात् धर्मपूर्वकत्वाच्चेति ।

एवं च सति—

मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिबोधे ॥ ३५ ॥

मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिबोधे । स्थाणौ पुरुषाध्यवसायो मिथ्योपलब्धिः तत्त्वज्ञानेन च मिथ्याध्यवसायः । निवर्तते नार्थः स्थाणुपुरुषलक्षणः । न ह्यसौ स्थाणुर्न भवतीति यथा स्वप्नोपलब्धानां येऽध्यवसायाः ते जाग्रदवस्थोपलब्ध्या निवर्त्यन्ते नार्थो विषयसामान्यलक्षण इति । शेषं भाष्ये ॥

बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ॥ ३६ ॥

बुद्धेश्चैवं निमित्तसद्भावोपलम्भादप्रतिषेधः । मिथ्याबुद्धेर्निमि·

(१) प्रधानप्रत्ययं बाधन्त—पा० ४ पु० ।

समस्ति । किं पुनस्तत् ? सामान्यदर्शनं विशेषादर्शनमविद्यमानविशेषाध्यारोप इति । मिथ्याबुद्धिं प्रतिपद्यमानेन तस्या निमित्तं वक्तव्यं निमित्तं च प्रतिपद्यमानेनार्थोऽभ्युपेय इति ॥

**तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः॥३७॥**

तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः । तत्त्वं स्थाणुरिति प्रधानं पुरुष इति तत्त्वप्रधानयोरलोपे मिथ्याबुद्धिर्भवतीति । शेषं भाष्ये ।

( इति बाह्यार्थभङ्गनिराकरणप्रकरणम् । )

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिरित्युक्तम् । अथ तत्त्वज्ञानं कथमुत्पद्यत इति ?

**समाधिविशेषाभ्यासात् ॥ ३८ ॥**

समाधिविशेषाभ्यासात् । शेषं भाष्ये ।

व्यापकत्वादन्तः—करणस्य प्रत्याहारो न युक्त इति चेत् ?—अथ मन्यसे व्यापकमन्तः-करणं तत्कथं प्रत्याह्रियत इति चेत् ? नोक्तोत्तरत्वात्—यथा न व्यापकमन्तःकरणं तथोक्तमयस्तात् । अणुत्वात्(१) स्वाङ्गगतीक्षणानुपपत्तिरिति चेत् ?—अथ मन्यसे यस्मात्त्वन्तःकरणमणु तस्यापि स्वाङ्गगतिवीक्षण(२) न, प्राप्नोति युगपद्धस्ते चक्षुषि चाऽसन्निधानात् ?, न शरीरात्ममनःसंयोगयौगपद्यात् प्रयत्नदर्शनयोर्युगपदुत्पत्तेः। स्वात्मशरीरसम्बन्धश्चात्ममनःसम्बन्धश्च(३) युगपद् भवति । तत्रात्ममनःशरीरसम्बन्धात् स्वाङ्गगतिरात्ममनःसम्बन्धाच्चक्षुषः प्रेरणम् तथा स्वाङ्गगतिः प्रयत्नाद्भवतीति दर्शनं

(१) अल्पत्वात्—पा० ४ पु० ।

(२) स्वाङ्गगतेरीक्षण-पा० ४ पु० ।

(३) समर्थश्चात्मनः समर्थश्च-पा० ४ पु० । एवमग्रेऽपि ।

न्ति न देशान्तरेषु, असत्यर्थे नियमहेतुर्वक्तव्यः । यस्य पुनर्विज्ञानं केनचिदाकारेण व्यवस्थितं तस्य शेषो मिथ्याप्रत्ययः इति युक्तम् । मिथ्याप्रत्ययाश्च भवन्तो न प्रधानं बाधन्त(१) इति पृथगादिप्रत्ययानां प्रधानं वक्तव्यमिति—यथा पृथगादिप्रत्ययानामेवं मायागन्धर्वनगरमृगतृष्णासलिलानामिति । कर्मणो वासनाऽन्यत्र फलमन्यत्र कल्प्यत इति । अस्यार्थोऽयत्रैव किल कर्म तत्रैव किल फलेन भवितव्यम् यस्य तु चित्तव्यतिरेकिणो विषयास्तस्यान्यत्र कर्मान्यत्र फलमिति व्यधिकरणे कर्मफले भवत इति ? । तस्यानभ्युपगमात्—न मया कर्मफले व्यधिकरणे अभ्युपगम्येते आत्मनि कर्म तत्रैव फलमित्यदोषः । मदीयाच्चित्तादर्थान्तरं विषयाः सामान्यविशेषवत्त्वात् सन्तानान्तरचित्तवत् । प्रमाणगम्यत्वात् कार्यत्वादनित्यत्वात् सर्वपूर्वकत्वाच्चेति ।

एवं च सति—

**मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिबोधे ॥ ३५ ॥**

मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिबोधे । स्थाणौ पुरुषाध्यवसायो मिथ्योपलब्धिः तत्त्वज्ञानेन च मिथ्याध्यवसायः स निवर्तते नार्थः स्थाणुपुरुषलक्षणः न ह्यसौ स्थाणुर्न भवतीति यथा स्वप्नोपलब्धानां येऽध्यवसायाः ते जाग्रदवस्थोपलब्ध्या निवर्त्यन्ते नार्थो विषयसामान्यलक्षण इति । शेषं भाष्ये ॥

**बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ॥ ३६ ॥**

बुद्धेश्चैवं निमित्तसद्भावोपलम्भादप्रतिषेधः । मिथ्याबुद्धेर्निमि-

(१) प्रधानप्रत्ययं बाधन्त—पा० ४ पु० ।

**अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः ॥ ४२ ॥**

**अपवर्गे ऽप्येवंप्रसङ्गः ॥ ४३ ॥**

**न निष्पन्नावश्यम्भावित्वात् ॥ ४४ ॥**

न निष्पन्नावश्यम्भावित्वात् । सति शरीरे बाह्यविषयो ज्ञानोत्पत्तिकारणम्, नान्यथेति सूत्रार्थः ॥

**तदभावश्चापवर्गे ॥ ४५ ॥**

तदभावश्चापवर्गे । तस्य शरीरादेरुपलब्धिकारणस्याभावोऽपवर्ग इति । तस्मात् सर्वदुःखमोक्षो(१)ऽपवर्ग इति । यस्मात् सर्वं दुःखबीजं दुःखं चापवर्गे विच्छिद्यते तस्मात् सर्वदुःखेन विमुक्तिरपवर्गः ॥

**तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः ॥ ४६ ॥**

तदर्थं यमनियमाभ्यामात्मसंस्कारः योगाच्चाध्यात्मविध्युपायैः। तस्यापवर्गस्याधिगमाय यमनियमाभ्यामात्मसंस्कारः(२)

**ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः ॥ ४७ ॥**

(ज्ञ)ज्ञानग्रहणाद्याभ्यासः तद्विद्यैश्च सह संवादः । ज्ञानग्रहणं शास्त्रग्रहणं, तद्विद्या–यत्रमुपायं बुद्ध्यन्त इति तद्विद्या इत्यविभक्तार्थं वचनम् ॥

**तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेयात् ॥ ४८ ॥**

तं शिष्यगुरुसब्रह्मचारिविशिष्ट इत्येवमादि सूत्रम् । एतत् तु निगदेनैव नीतार्थम् ॥

**प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ॥ ४९ ॥**

---

(१) सुखदुःखमोक्षो–पा० ४ पु० ।

(२) नियमाभ्याससंस्कार–पा० ४ पु० ।

प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे तमभ्युपेयादिति वर्तते ॥

**तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् ॥ ५० ॥**

तत्त्वाध्यवसायसंरक्षणार्थं(१) जल्पवितण्डे बीजप्ररोहसंरणार्थं कण्टकशाखावरणवदिति। अनुत्पन्नतत्त्वज्ञानेनैतत्कर्तव्यमिति सूत्रार्थः।

विद्यानिर्वेदादिभिश्च परेणावज्ञायमानस्य—

**ताभ्यां विगृह्य कथनम्(२) ॥ ५१ ॥**

ताभ्यां जल्पवितण्डाभ्यां विगृह्येति विजिगीषया न तत्त्वबुभुत्सयेति। विद्यापालनार्थं चैतद् न लाभपूजाख्यात्यर्थमिति(३) ॥

महत्त्विदोपसम्बद्धः प्रेत्यभावः प्रपञ्चितः ।
फलं दुःख विमुक्तिश्च तदुपायश्च कीर्तिताः ॥

इति–औद्द्योतकरे न्यायसूत्रवार्त्तिके चतुर्थाध्यायस्य द्वितीयमाह्निकम्(४) ॥ चतुर्थोऽध्यायः समाप्तः ॥

---

(१) प्रतिपक्षहीन–इत्यधिकम् ४ पु० ॥

(२) न्यायसूचीनिबन्धानुसारेणेदं सूत्रमेव । भाष्यमित्यन्ये ।

(३) ताभ्यां विगृह्य कथनमिति सूत्रम् । यस्तु कुदर्शनपलाहितमिथ्याज्ञानमवलम्ब्य दुर्विदग्धतया सद्विद्यावैराग्याद्वा लाभपूजाख्यात्यर्थितया कुहेतुभिरीश्वराणां जनाधाराणां पुरतो वेदब्राह्मणपरलोकादिदूषणे प्रवृत्तस्तं प्रति वादी समीचीन दूषणमप्रतिभयाऽपश्यन् जल्पवितण्डे अवतार्य विगृह्य जल्पवितण्डाभ्यां तत्त्वकथन करोति विद्यापरिपालनाय । माभूदीश्वराणां मतिविभ्रमेण तच्चरितानुवर्तिनीनां प्रजानां धर्मविप्लव इत्यमपि प्रयोजनं जल्पवितण्डयोः न तु लाभख्यात्यादि इष्टम् । न हि परहितप्रवृत्तपरमकारुणिको मुनिर्दृष्टार्थं परपांसुलोपायमुपदिशतीति तात्पर्यटीकायां वाचस्पतिमिश्राः ।

(४) इति श्रीमदुद्द्योतकराचार्यविरचिते न्यायसूत्रचतुर्थाऽध्यायद्वितीयाह्निक समाप्तम्—पा० ४ पु० ।

# पञ्चमोऽध्यायः ।

जातेः संक्षेपेणोक्ताया विस्तरो वक्तव्य इतीदमारभ्यते(१) साधर्म्यादि सूत्रम्—

साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः ॥ १ ॥

तत्र जातिर्नाम स्थापनाहेतौ प्रयुक्ते यः प्रतिरोधासमर्थो हेतुः।

जातेः प्रयोगप्रतिषेधादसदुत्तरत्वाच्चारम्भो न युक्तः ?—छलजातिनिग्रहस्थानानां स्ववाक्ये परिवर्जनमिति प्रतिषिद्धा जातिः, न च जातिः सदुत्तरमतश्च जातेः प्रयोगो न युक्तः ? न, आरम्भप्रयोजनस्योक्तत्वात्—उक्तं जातेरारम्भप्रयोजनं स्वयं च सुकरः प्रयोग इति । साधुसाधननिराकरणार्थं वा प्रयोगः—यदा तु वादी परस्य साधनं साध्विति मन्यते लाभपूजाख्यातिकामश्च भवति तदा जातिं प्रयुङ्क्ते कदाचिदयं जात्युत्तरेणाकुलीकृतो नोत्तरं प्रतिपद्येत उत्तराप्रतिपत्त्या च निगृह्यते । अनभिधाने (च) जातेरेकान्तजयः परस्यैत्यैकान्तिकात्व

(१) अथ प्रमाणादय. पदार्था उद्दिष्टा लक्षिताः परीक्षिताश्च तत्किमपरमवशिष्यते यदर्थं पञ्चमाध्याय आरभ्यत इत्यत आह । साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वमिति भाष्यम् । तस्यार्थमाह वार्त्तिककारः जाते. संक्षेपेणोक्ताया इत्यादि । इति तात्पर्यटीकायां वाचस्पतिमिश्राः ।

पराजयाद्वरमस्तु सन्देह(१) इति युक्तो जातेः प्रयोगः ।

असाधुसाधननिराकरणार्थमित्यन्ये-एकेतु जातेः प्रयोगं मन्यन्ते असाधुसाधननिराकरणार्थमेवं चाहुः असाधौ तु साधने प्रयुक्ते य आसां प्रयोगः सोऽनभिज्ञतया साधनदोषस्य, तद्दोषप्रदर्शनार्थं वा प्रसङ्गव्याजेनेति । एतत्तु न युक्तम्—प्रयोजनाभावात्(२) यदि तावदसाध्वेतत्साधनमिति प्रतिपद्यते य एवास्य दोषो बुद्धः स एव वक्तव्यो न जात्यभिधानेन(३) प्रयोजनमस्ति । अथ न बुध्यते ? किमिति जातिं प्रयुङ्क्ते(४) न ह्यनवबुध्यमानः शक्नोति प्रयोक्तुम् । अथानवबुध्यमानोऽपि (प्रयुङ्क्ते) यत्किञ्चिद् ब्रूयात् नियमो न स्यात् । एतेनानैकान्तिके पञ्चानां प्रयोगः प्रत्युक्तः—य आहुरनैकान्तिके साधने परेण प्रयुक्ते पञ्च जातयः प्रयोक्तव्या इति, तदप्यनेनैव प्रत्युक्तम् । कथमिति ? बुद्ध्वा तदेव वक्तव्यमबुद्ध्वा अज्ञानमिति । एतेन युक्तायुक्तयोः पूर्वापरभावः प्रत्युक्तः । अयुक्ते साधने अयुक्तमुत्तरं युक्ते युक्तमिति । युक्तं च नाम (यत्) प्रतिज्ञादिदोषोद्भावनं नासौ जातिः, उत्तरमेव तदिति जातिलक्षणापरिज्ञानादयुक्तमेतदपीति ।

समीकरणार्थं प्रयोगः समः साधर्म्यमेव समं वैधर्म्यमेव(५) सममिति समार्थः समीकरणार्थः प्रयोगो द्रष्टव्यः । समीक्रियतां परपक्षो मावाकारि अयं तु समीकरणार्थं प्रवर्तते यथा लोके कुटुम्बार्थं घटत इति । विशेषहेत्वभावो वा समार्थः न भवता

(१) वरं तत्सन्देह–पा० ६ पु० ।
(२) प्रयोजनासङ्गाभावादिति २ पु० पा० ।
(३) जात्यभिधाने–पा० ६ पु० ।
(४) प्रत्युङ्क्ते इति टीकासम्मतः पाठः ।
(५) समं वैधर्म्यमेव—इति नास्ति ६ पु० ।

विशेषहेतुः कश्चिदपदिश्यत इति । एनमर्थमुररीकृत्य प्रवर्तते यथाभूतं भवतः साधनं तथाभूतं ममापीति । न च सर्वापदेशव्याप्तिरव्यापकत्वात् । न हि सर्वापदेशे सर्वा जातयः प्रवर्तन्ते, न हि वैधर्म्येण स्थापनायामुत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसमाः प्रयोक्तुं शक्यन्त इति । न च वादिप्रतिवादिनोस्तुल्यता समार्थः जातेरसदुत्तरत्वात्—नियमेनैव जातिवाद्यसद्वादी भवति वादिनां तु सदसद्वादित्वे अनियम(१) इति ॥

साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ ॥ २ ॥

प्रतिषेधाविति । साधर्म्येणोपसंहारे तद्विपरीतसाधर्म्येण प्रत्यवस्थानं, वैधर्म्येणोपसंहारे तद्विपरीतेन साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः यथा—अनित्यः शब्द उत्पत्तिधर्मकत्वात् । उत्पत्तिधर्मकं कुम्भाद्यनित्यं दृष्टम् । यद्यनित्यघटसाधर्म्यादनित्यः नित्येनाप्याकाशेन साधर्म्यममूर्तत्वमस्तीति नित्यः(२) प्राप्तः इति । एतस्मिन्नेव हेतावाकाशवैधर्म्यादित्युक्ते यदि नित्याकाशवैधर्म्यादनित्यः नित्यसाधर्म्यमप्याकाशेनामूर्तत्वमस्त्यतो नित्यः प्राप्तः । अथ मन्यसे सत्यस्मिन् साधर्म्ये न नित्यः ? न तर्हि वक्तव्यमनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याद्वानित्य इति । सेयं जातिर्विशेषहेत्वभावं दर्शयति । विशेषहेत्वभावाच्चानैकान्तिकदेशनाभासा इति । एवं वैधर्म्येणोक्ते हेतौ तद्विपरीतवैधर्म्येण प्रत्यवस्थानं साधर्म्येणोक्ते हेतौ तद्विपरीतवैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमः यथा तस्मिन्नेव हेतावाकाशवैधर्म्यादनित्य इत्युक्ते यदि नि-

(१) अनियमप्रसङ्गः—पा० ६ पु० ।
(२) अमूर्तत्वमस्त्यतो नित्यः—पा० ६ पु० ।

त्याकाशवैधर्म्यादनित्यः अनित्येनापि घटेनास्य वैधर्म्यममूर्तत्वमतो नित्यः प्राप्तः। तस्मिन्नेव हेतौ घटसाधर्म्यादित्युक्ते यथानित्यघटसाधर्म्यादनित्यः वैधर्म्यमप्यस्यास्त्यमूर्तत्वमतो नित्यः प्राप्तः। अथ मन्यसे सत्येतस्मिन्(१) वैधर्म्ये न नित्यः(२) न तर्ह्ययमेकान्तोऽनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याद्वानित्य इति। सोऽयं विशेषहेत्वभावः ॥

अनयोरुत्तरम्—

**गोत्वाद्गोसिद्धिवत्तत्सिद्धिः ॥ ३ ॥**

गवाश्वसाधर्म्ये सत्त्वादौ समाने, वैधर्म्ये चैकशफत्वादौ साधर्म्याद सत्त्वाद्गौरश्वो न भवति। न च वैधर्म्यादेकशफत्वादेरगौर्गौर्भवति। किं कारणम्? एकस्यानन्वयादेकस्य चाव्यावृत्तेः। यदन्वयव्यतिरेकि साधर्म्यं तस्माद्धर्मव्यवस्था, गोत्वं च तथा, तस्माद्गोत्वादेव गौः सिद्ध्यति, तथेहाप्यमूर्तत्वमुभयव्यतिरेकि उभयान्वयि च, तस्मान्नित्यत्वमनित्यत्वं च(३) न शक्यं प्रतिपत्तुम्, अपि त्वन्वयव्यतिरेकसम्पन्नादुत्पत्तिधर्मकत्वा(४)दनित्य इति। अतो यदुक्तमपि विशेषहेत्वभावादिति अयं विशेषहेतुः इति॥

( इति सत्प्रतिपक्षदेशनाभासप्रकरणम् )

---

**साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः ॥ ४ ॥**

अविद्यमानधर्माध्यारोप उत्कर्षः, विद्यमानधर्मापचयोऽपकर्षः, वर्ण्यः साध्यः, अवर्ण्यः असाध्यः, विकल्पो विशेषः, एतेषां

(१) सत्यप्यस्मिन्–पा० ६ पु०। (२) प्राप्तः–इत्यधिकम् ६ पु०।
(३) नित्यमनित्य च–पा० ६ पु०। (४) उत्पत्तिमत्त्वा–पा० ६ पु०।

धर्माणामुद्भावनार्थाः प्रयोगा उत्कर्षसमाद्या जातयः(१) साध्यसाधनधर्मयोस्तुल्यतया प्रत्यवस्थानं साध्यसमेत्युच्यते—यथा तस्मिन्नेव हेतौ घटसाधर्म्यादित्युक्ते यदि यथा घटस्तथा शब्दस्तदा घटो रूपादिमान् शब्दोऽप्येवं प्रसक्त इत्युत्कर्षसमः । शब्दो वाऽरूप इति घटोऽप्येवं प्रसक्त इत्यपकर्षसमः । घटोऽनित्य इत्यवर्ण्यः शब्दोऽप्येवं, शब्दो वावर्ण्य इति घटोऽप्येवमिति वर्ण्यावर्ण्यसमौ । सत्येतस्मिन् उत्पत्तिधर्मकत्वे विभागजः शब्दो न विभागजो घटः विभागजाविभागजाविकल्पवत् च(२)*नित्यानित्यविकल्प इति विकल्पसमः । घटो वा अनित्य इत्यत्र को हेतुरयमपि साध्यवज्ज्ञापयितव्य इति साध्यवत् प्रत्यवस्थानात् साध्यसमः ॥

किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ॥५॥

न, हेत्वर्थापरिज्ञानादिति सूत्रार्थः । न ब्रूमो यावन्तो घटधर्मास्ते सर्वे एव शब्दे सम्भवन्तीति, अपि तु यो यस्य साधको धर्म उपपद्यते स तत्साधनं तत्रोपसंह्रियते । तथाचशब्देन शब्दे चोत्पत्तिधर्मकत्वं धर्म उपसंह्रियते । एवं यथोक्तमसम्बद्धम् । यथा गौस्तथा गवय इत्युक्ते न गोधर्माः सर्व एव गवये, न गवयधर्माः सर्व एव गवि प्राप्नुवन्ति । अपि तु यदितरस्येतरेण सम्बद्ध्यते तावन्मात्रमत्रोपसंह्रियते । अशेषधर्मोपसंहारे तु यथा तथेत्येव न स्यात् स एवासाविति स्यात् तथेहापीत्ययमदोषः । यत्पुनरेतद्विभागजाविभागजाविकल्पवन्नित्यानित्यविकल्प इति ? यथोत्पत्तिधर्मकत्वमन्वयव्यतिरेकि

(१) उभयोः—पा० ६ पु० । (२) विकल्पे च—पा० ६ पु० ।

* यदितिकृते २ पु० पा० ।

नैवं विभागजल्पः । न हि किञ्चिद्विभागाज्जायमानं यथोक्तविशेषणं नित्यमनित्यं वा दृष्टमित्येतदप्यनुत्तरम् ॥

## साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ॥ ६ ॥

दृष्टान्तः साध्य इति ब्रुवता भवता न दृष्टान्तलक्षणं व्यज्ञायि । दृष्टान्तो हि नामाविहतयोर्दर्शनयोर्विषयः । तथा च साध्यत्वमनुपपन्नम् । अथ दर्शनं विहन्यते ? नासौ दृष्टान्तो लक्षणाभावादिति ।

यत्त्वत्रोक्तं जातीनां(१) पौनरुक्त्यं प्रसज्यत इति ?–न पौनरुक्त्यमर्थभेदात्–यथा चोत्कर्षसमादीनां भिन्नोऽर्थस्तथोक्तम्। प्रयोगभेददर्शनाच्च–प्रयोगश्च भिन्न उत्कर्षसमादीनामिति । आनन्त्यमिति चेत् ?–अथ मन्यसे यदि प्रयोगभेदाद्भेदो न चतुर्विंशतिर्जातय इति प्राप्तम् ? न, अनवधारणात्–नेदमवधार्यते चतुर्विंशतिर्जातय इति, किन्तु(२)दाहरणानां भेदः। कथमवगम्यते ? तथाहि प्रकरणसमैका चतुर्द्धा भिन्नेति । अथ सामान्यतोऽभिन्ना जातय इत्यभेदं ब्रूयात् ? तस्याप्यभ्युपगतं चतुर्दशत्वं निवर्तते । अथ कुतश्चिद्भेदाद्भेदः ? अदेश्यं(३) तर्हि उत्कर्षसमाद्या न विकल्पसमातो भिद्यन्त इति, यथा केनचिद्भेदेन चतुर्दशत्वं तथा केनचिद्भेदेन चतुर्विंशतित्वम् । अविशेषसमा त्वियं जातिः उत्कर्षसमादीनामेकत्वं किञ्चित्साधर्म्यादिति । अस्या जातेरुक्तमुत्तरम् ॥

(इति साध्यदृष्टान्तधर्मविकल्पप्रभवोत्कर्षसमादिजातिषट्कप्रकरणम्।)

---

(१) ज्ञातीनां–पा० ६ पु० ।
(२) अपि तु–पा० ५ पु० ।
(३) अचोद्यं इति २ पु० पा ।

**प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याविशिष्टत्वादप्राप्त्यासाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥ ७ ॥**

तस्मिन्नेव हेतौ घटसाधर्म्यादिति कृते यदि तावदयं हेतुः साध्यं सम्प्राप्नोति प्राप्त्या अविशिष्टः । कोऽविशेषार्थः ? उभयोर्विद्यमानता—नाविद्यमानः सम्प्राप्यत इति हेतोः साधनार्थो हीयते । अथ न प्राप्यते ? अप्राप्तेनाहेतुना अविशिष्टत्वादहेतुर्भवति । न ह्यग्निरप्राप्तो दहति । प्राप्त्या प्रत्यवस्थानं प्राप्तिसमः अप्राप्त्या प्रत्यवस्थानमप्राप्तिसमः । अनयोर्भेदेनोपन्यासो विवक्षातः—भेदविवक्षायां प्राप्त्यप्राप्तिसमाविति । अभेदविवक्षायामेकमेवोच्यते—यथा वृक्षा वनमिति ।

जातिलक्षणाभावान्नेयं जातिरिति चेत् ?—अथ मन्यसे यज्जातेर्लक्षणं तदस्या नास्ति साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमिति हि तत्, न च लक्षणेनासम्बद्धा जातिरिति शक्यं वक्तुम्, न हि गोलक्षणहीनोऽश्वो गौरिति, न, सूत्रार्थापरिज्ञानात्—साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिरित्यस्य सूत्रस्यार्थो न व्यज्ञायीत्यनुत्तरमेतत् । एतेन त्रैकाल्यसमाद्याः प्रत्युक्ताः सूत्रार्थापरिज्ञानात् ॥

**घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारा(१)द्प्रतिषेधः ॥ ८ ॥**

मृत्पिण्डप्राप्तानां दण्डादीनां नाविशेषो न च साध्यसाधनभावनिवृत्तिः—न हि मृत्पिण्डप्राप्तो दण्डः साधनत्वं जहाति नापीतरत् साध्यत्वं जहाति । अथ मन्यसे घटस्तत्र साध्यस्तस्य चाविद्यमानस्य किं साधनेन ? ना-

(१) चाव्यभिचारादित्यपि क्वचित् ।

विद्यमानस्य साधनमपि तु मृत्पिण्डो घटीक्रियत इति। किमिदं घटीक्रियत इति? यदवयवाः पूर्वव्यूहपरित्यागेन व्यूहान्तरमापद्यन्ते व्यूहान्तराच्च घटोत्पत्तिः। पीडने चाभिचारादप्राप्यापि साधकत्वं दृष्टम्। कोऽस्यार्थः? परस्परोपश्लेषमन्तरेण साधकत्वम्। अन्यथा तूद्देशेनायं प्राप्त एव नियमात्। इयं च जातिः सर्वहेत्वपवादद्वारिका यदि ज्ञापको हेतुरपदिश्यते तथापि, यदि कारकस्तथापीति। सा चेयं कार्यकारण(त्वा)पवादद्वारेण प्रवर्तमाना व्याहता भवति। को व्याघातः? उत्तरस्यानुत्थानम्। कथमिति? यदिदमुत्तरं प्राप्यार्थं (कारणत्वापवादद्वारेण) साधयेदप्राप्य वेति तस्यापि प्रतिषेध्यं प्राप्य वाऽप्राप्य वेति समो दोषः॥

(इति प्राप्त्यप्राप्तियुगनद्धत्वाद्विविकल्पोपक्रमजातिद्वयप्रकरणम्।)

**दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ॥ ९॥**

यथा तस्मिन्नेव हेतौ घटादिसाधर्म्येण कृते इत्थं—घट एव तावदनित्य इत्यत्र को हेतुरिति प्रसङ्गसमः। प्रतिदृष्टान्तसमस्य यदेव भाष्य उदाहरणं तदेव द्रष्टव्यमिति। वाय्वाकाशसंयोगस्याकारणत्वादयुक्तमिति चेत् ?—अथ मन्यसे न वाय्वाकाशसंयोगः क्रियाकारणं त्रिष्वपि कालेष्वसम्भवात् ?—न वाय्वाकाशसंयोगेनाकाशे क्रिया कृता न करोति न करिष्यतीति, यच्च त्रिष्वपि कालेष्वकारणं तदकारणम्—यथा घटो घटान्तरस्य ?। न, तत्समानधर्मोपपत्तेः—न ब्रूमो वाय्वाकाशसंयोग एव कारणमपि तु तथाभूतोऽ-

मोऽन्यत्र दृष्टो यथा वायुवनस्पतिसंयोग इति । यस्त्वसौ तथाभूतः क्रियां न करोति तन्नाकारणत्वादपि तु प्रतिब-न्धकात् । केनास्य प्रतिबन्धः ? । महत्परिमाणेन, यथा-मन्दवा-तवेगेन तृणानां लोष्टादीनामिति । यदि च क्रियां दृष्ट्वा क्रियाकरणमिति मन्यसे सर्वं कारणं क्रियानुमेयं भवतः प्राप्तं ततश्चोपादानं कारणस्य न प्राप्नोति किमिदं करि-ष्यत्याहो न करिष्यतीति । यस्य पुनः साधर्म्यादु(१)पादानं त-स्य युक्तम् । यदि च तत्सदृशं न कारणमिति मन्यसे ? अ-नैकान्तिको हेतुर्न प्राप्नोति, न हि यच्छब्दे ऽमूर्तत्व त-दाकाशादीनामिति, अनुमानं चान्यत्र दृष्टस्यान्यत्र सादृश्यादेव प्रवर्तते न हि ये धूमधर्मा एकस्मिन् धूमे त एव धूमा-न्तरेष्वपीति ॥

प्रदीपोपादानप्रसङ्गविनिवृत्तिवत् तद्विनिवृत्तिः ॥१०॥

इदं तावदयं प्रष्टव्यः के प्रदीपमुपाददते किमर्थं वे-ति ? । दिदृक्षमाणा दृश्यदर्शनार्थमिति ? । अथ प्रदीपोपल-ब्ध्यर्थं कस्मान्न प्रदीपोपादानं कुर्वते ? । अन्तरेण प्रदीपो दृश्यते प्रदीपान्तरमिति । अथ दृष्टान्तः किमर्थमुपादीयते ? अज्ञातस्य प्रज्ञापनार्थम् । अथ दृष्टान्तेऽपि दृष्टान्तः किमर्थं देश्यते? यदि प्रज्ञापनार्थं नाप्रज्ञातो दृष्टान्त इति । (यत्पुनराकाशदृष्टा-न्तवदिति)(२) ॥

प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ॥ ११ ॥

अभ्युपगमात्-प्रतिदृष्टान्तस्य च हेतुभावं प्रतिपद्यमानेन दृ-

(१) सामर्थ्यादिति २ पु० पा० ।
(२) () एतदन्तर्गतो ग्रन्थः २ पु० नास्ति ।

दृष्टान्तस्यापि हेतुभावोऽभ्युपगन्तव्यः हेतुभावश्च साधकत्वं स च कथं हेतुर्न स्यात् यद्यप्रतिषिद्धः साधकः स्यात्, अप्रतिषिद्धश्चायं, साधकप्रयोगानुपपत्तेश्च यदि तावदेवं प्रयुङ्क्ते यथा भवदीयो दृष्टान्तस्तथा मदीय इति अभ्युपगमान्न प्रतिदृष्टान्तः। अथैवं प्रयुङ्क्ते यथा मदीयो न दृष्टान्तस्तथा त्वदीय इति तथापि व्याघाताच्च प्रतिदृष्टान्त इति ॥

( इति युगनद्धवाहिप्रसङ्गप्रतिदृष्टान्तसमजातिद्वयप्रकरणम् । )

**प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥ १२ ॥**

अथ अनित्यः शब्द उत्पत्तिधर्मकत्वात् घटवदिति कृते यदि ब्रूयात् प्रागुत्पत्तेरुत्पत्तिधर्मकत्वं नास्ति तदभावादनुत्पत्तिधर्मकः अनुत्पत्तिधर्मकत्वाच्च नित्य इति अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः ॥

**तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ॥ १३ ॥**

यथैव प्रागुत्पत्तेरुत्पत्तिधर्मकत्वं नास्ति तथा शब्दोपीति उत्पन्नः सन् शब्द इति भवति उत्पन्नः सन्नुत्पत्तिधर्मक इति भवति तथानित्य इति। उत्पन्ने उत्पत्तिधर्मकत्वमस्तीति न कारणप्रतिषेधः अनुत्पन्नस्य चातथाभावात् न चायमनुत्पन्नः शब्द इति वा उत्पत्तिधर्मक इति वा नित्य इति वा अनित्य इति वा व्यपदेष्टुं शक्यत इति। ज्ञापकश्चायं हेतुर्न कारकः ज्ञापके च कारकवत् प्रत्यवस्थानमसम्बद्धम्। न कारकज्ञापकयोर्भेदोऽस्ति कारकत्वादिति चेत्? न, कारकज्ञापकयोः क्रियाज्ञप्तिहेतुत्वात्। योऽप्ययं ज्ञापकः सोऽपि किञ्चित् कुर्वन् ज्ञापक इत्युच्यते कारकोपीति(१)। नैष दोषः कारकस्य क्रियाहेतु-

(१) कारकत्वादिति—पा० ६ पु०।

त्वात् ज्ञप्तिहेतुत्वाद् ज्ञापकस्येति । तत्रैको वस्तु निष्पादयति एकस्तु विद्यमाने वस्तुनि ज्ञप्तिं करोति प्राक्चोत्पत्तिधर्मकत्वस्याभावादनुत्पत्तिधर्मकः शब्द इति ब्रुवाणः शब्दमभ्युपैति नासतोऽनुत्पत्तिधर्मकत्वं धर्म इति । ततश्च विशेषणमनर्थकं प्रागुत्पत्तेरिति ।

अपरे तु प्रागुत्पत्तेः कारणाभावादित्युक्ते अर्थापत्तिसमैवेयमिति, प्रागुत्पत्तेः प्रयत्नानन्तरीयकत्वस्याभावादर्थादप्रयत्नानान्तरीयकोऽप्रयत्नानन्तरीयकत्वाच्च नित्य इति कृते उत्तरं ब्रूयात(१) नायं नियमो ऽप्रयत्नानन्तरीयकं(२) नित्यमिति । त्रयी हि तस्य गतिः किञ्चिन्नित्यमाकाशादि किञ्चिदनित्यं विद्युदादि किञ्चिदसदेव आकाशकुसुमादि ।

एतत्तु न युक्तमुत्पश्यामः । कथमिति ? यत्तावदसदप्रयत्नानन्तरीयकमिति न युक्तं प्रयत्नानन्तरीयकत्वस्य जन्मविशेषणत्वात्-यस्य न प्रयत्नानन्तरीयकं जन्म तदप्रयत्नानन्तरीयकं, न चाभावो विद्यते अतो न तस्य जन्म । यच्चासत् किं तस्य विशेष्यमस्ति । एतेन नित्यं प्रत्युक्तम् । न हि नित्यमप्रयत्नानन्तरीयकमिति शक्यं वक्तुम् । जातिलक्षणाभावान्नेयं जातिरिति चेत् ? नानुत्पन्नैरहेतुभिः साम्यात्-योऽनुत्पन्नः स न हेतुः तद्यथा अनुत्पन्नास्तन्तवो न पटस्य कारणमिति ॥

( इत्यनुत्पत्तिसमप्रकरणम् । )

**सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः ॥ १४ ॥**

उदाहरणं भाष्ये । संशयसमा साध्यसमातो न भिद्यते इति चेत् ?-अथ मन्यसे यथा साधर्म्यसमोदाहरणं साध-

(१)उत्तर ब्रुवते इति १ पु०पा० । (२)प्रागुत्पत्तेः-इत्यधिकम् ६ पु० ।

र्म्यात् प्रवर्त्तते तथा संशयसमापीति, अतोऽभेदान्न जात्यन्तरमिति ? न, उभयैकसाधर्म्यभेदात्—उभयसाधर्म्यात् संशयसमः एकसाधर्म्यात् साधर्म्यसम इति विशेषः ॥

**साधर्म्यात् संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ॥ १५ ॥**

साधर्म्यात् साधर्म्यदर्शनात् संशयः वैधर्म्याद्विशेषदर्शनाच्च संशयः उभयथा तु(१) संशये सामान्यविशेषदर्शने सति संशये ऽत्यन्त(२)संशयप्रसङ्गो नित्यं सामान्यं संशयं करोतीति तु न प्रतिपद्यामहे सति सामान्ये विशेषदर्शनाद्व्यावृत्तेरिति ॥

( इति संशयसमप्रकरणम् । )

**उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः॥१६॥**

उदाहरणं भाष्ये । संशयसमसाधर्म्यसमाभ्यां प्रकरणसमो न भिद्यते । कथमिति ? तत्रापि साधर्म्यमिहापीति ? । न, उभयपक्षसाधर्म्याद् भेदसिद्धेः—उभावत्र वादिप्रतिवादिनौ पक्षपरिग्रहेण नित्यानित्यत्वे साधयतः, न चैवं साधर्म्यसमसंशयसमयोरिति ॥

**प्रतिपक्षात् प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः(३) ॥ १७ ॥**

विरुद्धाव्यभिचार्येव उक्तोत्तर इति । प्रकरणोत्थानं च न प्रतिपक्षादिति ब्रूमः किन्तु तत्त्वादर्शनात्(४) तदुक्तं प्रकरणसमे हेत्वाभास इति ॥ ( इति प्रकरणसमप्रकरणम् । )

---

( १ ) उभयथा संयोगिनि—पा० ६ पु० ।
( २ ) सशय इत्यत्र—पा० ६ पु० ।
(३) प्रतिपक्षोपपत्तेः-पा० ६ पु० । (४) तथादर्शनात्-पा० ६ पु० ।

त्रैकाल्यासिद्धे(१)र्हेतोरहेतुसमः ॥ १८ ॥

अहेतुसाम्यात् प्रत्यवस्थानमहेतुसम इति ॥

न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः ॥ १९ ॥

विरोधः सूत्रार्थः । नोत्पद्यमानमहेतुन उत्पद्यते नापि ज्ञाप्यमानमहेतुना ज्ञाप्यते इति ।

प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः ॥ २० ॥

विरोध उत्तरदोष इति । यस्त्रिष्वपि कालेषु न साधयति स न हेतुरिति प्रतिषेधे अपि समानो दोषः । उक्तोत्तरत्वाच्च–प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेरित्यत्रोक्तोत्तरमेतदिति ।

( इति हेतुसमप्रकरणम् । )

अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ॥ २१ ॥

उदाहरणं भाष्ये ।

अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ॥ २२ ॥

अनुपपाद्य सामर्थ्यमर्थादापद्यत इति ब्रुवाणः पक्षं हापयति । किं कारणम् ? सामर्थ्यस्यानुक्तत्वात् । एवं च पक्षहानेरुपपत्तिः । अनैकान्तिकत्वाच्चार्थापत्तेः(२) पूर्वसूत्रव्याख्यातः । यदुक्तं नानैकान्तिकत्वमनर्थापत्त्यात्रार्थापत्त्यभिमानादिति ? तद्व्याहन्यते(३) नास्ति व्याघातः सविधिप्रतिषिद्धयोः अनैकान्तिकत्वाभ्युपगमात्—येयं सूत्रेणोपात्ता साऽनैकान्तिकी

---

(१) त्रैकाल्यानुपपत्तेरिति न्यायसूचीनिबन्धे ।

(२) अनुपपत्तेः–पा० ६ पु० । (३) नुपपत्तिरिति–पा० ९ पु० ।

नार्थापत्तिमात्रं यथानुमानं व्यभिचारि यत् तदप्रमाणं नेतरदिति तथेहापीति ॥

( इति अर्थापत्तिसमप्रकरणम् । )

**एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसमः ॥ २३ ॥**

उदाहरणं भाष्ये । साधर्म्यसमातो न भिद्यते अविशेषसमः । कस्मात् ? साधर्म्यमात्रात्—भवत्वेतदविशेषादिति चेत् ? न, एकसमस्तभेदाद्भेदः एकसाधर्म्यात् साधर्म्यसमा समस्तसाधर्म्याद्विशेषसमेति ।

**क्वचित् तद्धर्मोपपत्तेः क्वचिच्चानुपपत्तेः(१) प्रतिषेधाऽभावः ॥ २४ ॥**

क्वचित् साधर्म्यमुपलभ्यते क्वचिन्नेति सूत्रार्थः । अभ्युपगमाच्च विरोधः सर्वभावानामनित्यत्वं प्रसञ्जयता अभ्यनुज्ञातं शब्दस्यानित्यत्वं व्यर्थं वा सर्वभावग्रहणमिति । उक्तश्च विशेषोऽन्वयव्यतिरेकसम्पन्नो हेतुर्नेतर इति ।

( इति अविशेषसमप्रकरणम् । )

**उभयकारणोपपत्तेरुपपत्तिसमः ॥ २५ ॥**

उदाहरणं भाष्ये । उपपत्तिसमा प्रकरणसमातो न भिद्यत इति तत्रापि नित्यानित्यकारणोपपत्तिरिहापीति ? । न, नित्यानित्यकारणस्यैकत्रोपपत्तेः—नित्यकारणं चानित्यकारणं चैकत्रोपपद्यत इत्युपपत्तिसमः नित्यानित्यपक्षाभ्यां प्रत्यवस्थानात् प्रकरणसम इति भेदः ॥

(१) तद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः–पा० ६ पु० ।

**उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ॥ २६ ॥**

विरोधः सूत्रार्थः । नित्यत्वकारण(१)मप्यस्योपपद्यते इति ब्रुवताऽभ्यनुज्ञातं अनित्यत्वकारणमिति, तथा च विरोधादुत्तरपक्षोत्थानं न युक्तम् ॥

( इति उपपत्तिसमप्रकरणम् । )

**निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः ॥२७॥**

उदाहरणं भाष्ये । सर्वसाध्यारोपेणाव्यापकत्वं साधनस्येत्युपलब्धिसमार्थः । 'सर्वमनित्यं सामान्यविशेषवत्तोऽस्मदादिबाह्यकरणप्रत्यक्षत्वेनाध्यारोप्याव्यापकत्वं हेतोः, न ह्ययं हेतुः सर्वस्मिन्ननित्ये द्व्यणुकादौ विद्यत इति । श्रूयमाणप्रतिज्ञार्था(२)व्यापकत्वं वा हेतोः । यथाऽनित्यः शब्दः शब्दान्तरोत्पादकत्वादिति, न शब्दान्तरोत्पादकत्वेन सर्वः शब्दो व्याप्यते । न ह्यन्त्यः शब्दः शब्दान्तरं करोति ॥

**कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ॥ २८ ॥**

अनित्यः शब्द इति ब्रुवता न साध्यान्तराणां कारणान्तरं प्रतिषिध्यते न साध्यस्य कारणान्तरमिति ।

अपरे तु परिहारान्तरं ब्रुवते-यदेव प्रयत्नानन्तरीयकं तदेव तस्मादनित्यमिति ।.एतत्तु नातिवादात्-यः प्रयत्नानन्तरीयकत्वं प्रतिपद्यते न तं प्रति किञ्चित् साध्यते, यदा तु प्रयत्नानन्तरीयकत्वं वस्तुविशेषणं तदाऽन्यो हेतुर्वक्तव्यः । जातिलक्षणाभावान्नेयं जातिः ? । न, अहेतुसामान्याज्जातिः ॥

( इत्युपलब्धिसमप्रकरणम् । )

---

(१) नित्यानित्यकारण-पा० ६ पु० ।

(२) प्रतिज्ञातार्थ-पा० ६ पु० ।

**तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः ॥ २९ ॥**

उदाहरणं भाष्ये । न उक्तोत्तरत्वात्—द्वितीयाध्याये उक्तोत्तरमेतत् ॥

**अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ ३० ॥**

**ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् ॥ ३१ ॥**

आवरणाद्यसम्भवे सत्त्वाभ्युपगमे च सत्यनुपलब्धेरिति प्रयोगः । एवं च सति न हेत्वन्तरं नानैकान्तिकं विपक्षाद्व्यावृत्तत्वात् । आवरणाद्यसम्भवे सत्त्वाभ्युपगमे विपर्ययस्याव्यभिचारात्कार्यापत्तिसमेति ॥

( इति अनुपलब्धिसमप्रकरणम् । )

**साधर्म्यात् तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः ॥ ३२ ॥**

सर्वमनित्यं प्राप्नोतीत्युदाहरणं भाष्ये । अविशेषसमातो अनित्यसमा न भिद्यते तत्रापि सर्वाविशेष इहापीति ? । भिद्यते तत्र सर्वाविशेष इह सर्वानित्यत्वमिति ।

**साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसामर्थ्यात्(१) ॥ ३३ ॥**

**दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात् तस्य चोभयथाभावान्नाविशेषः ॥ ३४ ॥**

प्रतिषेध्येन पक्षेण प्रतिषेधस्य प्रतिज्ञादियोगः साम-

---

( १ ) साधर्म्यात्--पा० ६ पु० ।

न्यम् । तथाहि (वादि)प्रतिषेध्यस्यानित्यत्वस्यासिद्धिर्घटादिसाधर्म्यात् ननु प्रतिषेधस्याप्यसिद्धिः प्रतिषेध्येन प्रतिज्ञादियोगसामान्यादिति । नेयं साधर्म्यमात्रात् स्थापना, अपि तु दृष्टान्ते विशिष्टमन्वयव्यतिरेकिणं धर्म(१)मुपलभ्य तत्सामर्थ्यात् । न च प्रतिपक्षस्यैवंभूतो धर्म उपपद्यते । तस्मात् प्रतिषेधो नोपपद्यते इति । उक्तं चात्र क्वचित् तद्धर्मानुपपत्तेः क्वचिदुपपत्तेः प्रतिषेधाभाव इति । यथाविशेषसम उत्तरं तदिहापि द्रष्टव्यम् । नासाधनादिति चेत् ?—अथ मन्यसे न मया सर्वस्यानित्यत्वप्रसङ्गेन सर्वस्यानित्यत्वं साध्यते, अपि त्वेवं ब्रुवाणस्य सर्वस्यानित्यत्वं प्राप्नोतीति प्रसङ्गः क्रियते ? । न, विशेषहेतूपपत्तेः—न मया साध्यसाधर्म्यमात्रेण साधनमुच्यते इत्यतो न सर्वानित्यत्वप्रसङ्गः । सर्वानित्यत्वसाधने प्रमाणाभावाच्च— न सर्वानित्यत्वप्रसाधकं प्रमाणमस्तीति । अथ सर्वमनित्यं सत्त्वादिति साधयेत् ? तस्यापि नान्वयो न व्यतिरेकः ॥

( इति अनित्यसमप्रकरणम् । )

**नित्यमनित्यभावादनित्ये नित्यत्वोपपत्ते(२)र्नित्यसमः ॥ ३५ ॥**

अनित्यः शब्द इत्येतस्यां प्रतिज्ञायां प्रतिज्ञादिदोषोद्भावनद्वारिका जातिः—अनित्यः शब्द इत्यभिदधान एव भवान् शब्दस्य नित्यत्वं प्रतिजानीते । कथमिति ? यदनित्यत्वं तत्(३) किं शब्दे नित्यमस्ति उत कदाचिद्भवतीति ।

( १ ) व्यतिरेकिलक्षणं धर्मं—पा० ६ पु० ।

( २ ) नित्यत्वं—६ पु० ।

( ३ ) यत् तदनित्यत्वं—पा० ६ पु० ।

यदि नित्यं धर्मनित्यत्वाद्धर्मिणोऽपि नित्यत्वम् । अथानित्यमनित्यत्वस्याभावान्नित्यः शब्द इति ॥

**प्रतिषेध्ये नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः प्रतिषेधाभावः ॥ ३६ ॥**

प्रतिषेध्ये नित्यमनित्यत्वमिति ब्रुवताऽभ्यनुज्ञातमनित्यत्वम् । अभ्यनुज्ञानाच्चासमर्थः प्रतिषेध इति । अथ नाभ्यनुज्ञायते ? नित्यमनित्यभावान्नित्यः शब्द इति हेतुर्नोपपद्यते हेत्वनुपपत्तेरनर्थकः प्रतिषेधः । प्रश्नानुपपत्तिश्च पृथग्धर्मत्वेनानित्यत्वस्यानभ्युपगमात् । अपि चानात्यन्तिकसत्तायोगोऽनित्यत्वमित्युक्ते न युक्तः प्रश्नः किमयमत्यन्तं भवति उत नात्यन्तमिति । आत्यन्तिकानात्यन्तिकभावयोगश्चैकस्य न युक्तः । अनित्यता नित्येति ब्रुवता एकस्यात्यन्तिकसत्तायोगो ऽनात्यन्तिकयोगश्चाभ्यनुज्ञायते स चायं विरोधान्न युक्त इति । प्रतिषेधदोषोद्भावनायुक्त इति चेत् ?—अथ मन्यसे न मयैकस्य नित्यत्वमनित्यत्वं चाभ्युपगम्यते, अपि त्वनित्यः शब्द इति ब्रुवाणस्य भवतः स एव दोष इति ? न, विकल्पानुपपत्तेः— नायं पक्षदोषो न साधनदोषः, पक्षदोषस्तावदयं न भवति पक्षस्य तादवस्थ्यात् । न साधनस्य, प्रतिज्ञादिदोषाणामनुद्भावनात् । विरोधस्य चोक्तोत्तरत्वादिति ॥

( इति नित्यसमप्रकरणम् । )

**प्रयत्नकार्यानेकत्वात् कार्यसमः ॥ ३७ ॥**

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्युक्ते जातिः कार्यसमा प्रयुज्यते—प्रयत्नकार्यमनेकधा दृष्टमिति किञ्चित् प्रयत्नानन्तरं व्यज्यते किञ्चित् प्रयत्नानन्तरमुत्पद्यते प्रयत्नानन्त-

रसुपलब्धेर्हेतुत्वाभ्यारोपेणानैकान्तिकदेशनात् कार्यसमः। कार्यः शब्दः प्रयत्नानन्तरमुपलब्धेरिति हेतुमनैकान्तिकं चोदयति। प्रयत्नानन्तरमुपलभ्यमानं कार्यमकार्यं च दृष्टमिति। अथ प्रयत्नानन्तरं जन्म हेत्वर्थः तथाप्यसिद्धदेशनेति॥

कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः॥३८॥

यत्र खलु प्रयत्नेन व्यज्यते तत्रानुपलब्धिकारणमुपपद्यते, न तु शब्दस्यानुपलब्धिकारणं किञ्चिदस्ति, तस्मान्न व्यज्यते इति। संशयसमातो न भिद्यत इति चेत्? उभयसाधर्म्यात् संशयसमः अयं तु न तथा तस्माद्भिद्यत इति। अथ साधर्म्यसमातो न भिद्यत इति चेत्? न, हेत्वध्यारोपणात्। साधर्म्यसमा न हेत्वध्यारोपेण प्रवर्तते इयं त्वन्यथाभिहिते हेतौ अन्यथाकारं प्रवर्तते॥

( इति कार्यसमप्रकरणम्। )

एवं जातयो व्यवस्थिताः। अथेदानीं षट्पक्षीमुपन्यस्यन्निदमाह—

प्रतिषेधे विप्रतिषेधेऽपि(१) समानो दोषः॥ ३९॥

प्रथमपक्षवादी जातिवादिनमुत्तरं ब्रवीति। यद्यनैकान्तिकत्वादहेतुः प्रतिषेधोप्यनैकान्तिकः कस्यचिदप्रतिषेधात् कस्यचित्प्रतिषेधादिति। विशेषहेत्वभावो वा अविशेषः। शेषं भाष्ये॥

सर्वत्रैवम्॥ ४०॥

सर्वासु जातिष्वेषा प्रयुक्तिरिति सूत्रार्थः।

प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः॥ ४१॥

तृतीयः पक्षो विप्रतिषेधः। एतस्मिन् विप्रतिषेधे पु-

(१) प्रतिषेधे ऽपि समानो दोषः— इति न्यायसूचीनिबन्धे।

मानमनैकान्तिकत्वं दोष इति चतुर्थः पक्षः ॥

**प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा ॥ ४२ ॥**

प्रतिषेधं द्वितीयपक्षं सदोषमभ्युपेत्य तृतीयपक्षे ऽपि प्रतिषेधतुल्यदोषप्रमासञ्जयन् विप्रतिषेधे ऽपि समानो दोष इति ब्रुवन् मतमनुजानाति(१) सेयं मतानुज्ञा भवतीति पञ्चमः पक्षः ॥

**स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात् समानो दोषः ॥ ४३ ॥**

स्वपक्षसमुत्थानं दोषमभ्युपेत्य परपक्षे ऽपि प्रसञ्जयन्(२) स्वपक्षदोषमनुजानातीति तुल्या मतानुज्ञा । शेषं भाष्ये । अत्र खलु स्थापनाहेतुवादिनः प्रथमतृतीयपञ्चमाः पक्षाः । प्रतिषेधहेतुवादिनो द्वितीयचतुर्थषष्ठाः पक्षाः । तेषां साध्वसाधुतायां मीमांस्यमानायां चतुर्थषष्ठयोरर्थाविशेषात् न पुनरुक्तदोषप्रसङ्गः—समानः तृतीयपञ्चमयोः पुनरुक्तदोषः । तत्र पञ्चमषष्ठयोः पुनरुक्तदोषः, तृतीयचतुर्थयोर्मतानुज्ञा दोषः । प्रथमद्वितीययोर्विशेषहेत्वभाव इति षट्पक्ष्यामुभयोरसिद्धिरयुक्त(रत्न)वादित्वात् । यदाऽनुपलब्धिकारणाभावे सति प्रयत्नानन्तरमुपलब्धेरिति विशेषहेतुरुच्यते तदा न षट्पक्षी प्रवर्तते । एतास्तु जातयो न तत्त्वान्तरैकमुपकुर्वन्तीति भेदमात्रमासामुक्तमिति ।

( इति षट्पक्षीरूपकथाभासप्रकरणम् । )

इति-श्रीउद्द्योतकरे न्यायवार्त्तिके पञ्चमस्याध्यायस्याद्यमाह्निकम् ॥

---

(१) तमनुजानाति-पा० ६ पु० । (२) प्रयुञ्जन्-पा० ६ पु० ।

# पञ्चमेऽध्याये

द्वितीयमाह्निकम्।

प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ॥ १ ॥

विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वमिति सङ्क्षेपेणोक्तम्। तदिदानीं विभजनीयम्। निग्रहस्थानानि तु पराजयवस्तूनि अपराधाधिकरणानि। सामान्यतो द्वे निग्रहस्थाने। कर्तृकर्मकरणानां तस्य।

तत्रैके वर्णयन्ति पक्षस्येति, एवं चाहुर्दूषणानि न्यूनतावयवोत्तरदोषासेवभावोद्भावनानि एभिरसौ परपक्षो दूष्यत इति। एतत्तु न सम्यक्, कर्मणस्तादवस्थ्यात्—न हि दूषणाभिधानेन कर्मणोऽन्यथात्वं भवति यथाभूत एवार्थो दूष्यमाणस्तथाभूत एवादूष्यमाणोऽपि। न करणस्य विषयान्तरेऽसामर्थ्यात्—साधनमपि प्रतिज्ञादिकं न दूष्यते(१) विषयान्तरेऽसामर्थ्यात्। न हि किञ्चित्साधनं यद्विषयान्तरे समर्थं स्यात्

(१) न दूष्यमिति-पा० ६ पु०।

सर्वं साधनं स्वविषये समर्थमिति । तस्मादसमर्थयोः कर्मकरणयोरुपादानात् कर्तुर्निग्रह इति । यत् कर्म क्रियार्थमुपादीयमानमभीष्टक्रियां न निर्वर्तयति तदिदमसमर्थं यथा सिकता घटादिकरण इति । यत् च करणं क्रियार्थमुपादीयमानं क्रियां न निर्वर्तयति तदसमर्थं यथा तुर्यादि घटे । स्वविषये तूभयं समर्थम् । तदन्यविषयस्य च कर्मणोऽन्यविषयस्य च करणस्यान्यथोपादानात्(१) कर्तुरज्ञानम् । अज्ञानं पुनरप्रतिपत्तिर्विप्रतिपत्तिर्वेति कर्ता निगृह्यते, न कर्मकरणे पारतन्त्र्यात् । तस्मात् स्वतन्त्रस्य कर्तुर्निग्रह इति । विप्रतिपत्त्यप्रतिपत्त्योश्च पुरुषधर्मत्वात् पुरुषस्येति—विप्रतिपत्त्यप्रतिपत्ती च पुरुषस्य वचनद्वारेण गम्येते तस्मात् प्रतिज्ञादिदोषा इति भक्तिः(२) । कानिचिन्निग्रहस्थानान्यज्ञानादीनि पुरुषधर्मा एव ।

द्वैविध्यानुपपत्तिरनेकाभिधानादिति चेत् ?—अनेकं निग्रहस्थानं प्रतिज्ञाहान्यादिसूत्रे पठ्यते तस्माद्द्वे निग्रहस्थाने इत्ययुक्तम् ? । न, सामान्यभेदविस्तरस्य विवक्षातः प्रवृत्तेः—सामान्यमधिकृत्य निग्रहस्थाने द्वे, भेदविस्तरविवक्षायां तु द्वाविंशतिधा भेदः । उदाहरणमात्रत्वाच्च भेदस्याऽऽनन्त्यमिति ।

प्रायेण प्रतिज्ञाद्यवयवाश्रयाणीति भाष्यम् । वक्तृविषयकत्वात् प्रतिज्ञाद्यवयवाश्रयत्वमनुपपन्नमिति चेत् ?—अथ मन्यसे विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानमित्यभिधाने प्रतिज्ञाद्यवयवाश्रितत्वे कः प्रसङ्ग इति ? न,

(१) पपादनात्—पा० ६ पु० ।
(२) शक्तिः—पा० ६ पु० ।

क्रियावचनदोषद्वारेण कर्तृवक्तृणामङ्गत्वोपपत्तेः । क्रियाद्वारेण कर्ता दृश्यते वचनद्वारेण वक्तेति न प्रतिज्ञाया आश्रयत्वमनुपपन्नम् । न चाधाराधेयभाव आश्रयाश्रयिभावो विवक्षितः । किं तु प्रतिज्ञादिमुखेनोद्भावनमिति ।

तत्त्ववादिनमतत्त्ववादिनं चाभिसंप्लवन्त इति भाष्यम् । तत्त्ववादिनो निग्रहस्थानानुपपत्तिः प्रतिपादकत्वात्—तत्त्वं ब्रवीतीति प्रतिपादयति प्रतिपादयंश्च निगृह्यत इति न युक्तम् ? । न परावादिप्रदूषणदोषानवबोधद्वारेण तदुपपत्तेः । तत्त्ववादी प्रथमपक्षे द्वितीयपक्षवादिना (च) यो दूषणाभास उक्तस्तस्य तत्त्वानवबोधान्निगृह्यते तत्त्वमभिदधानोऽपि, तत्र वस्तु निर्णीतं निर्णीते च वस्तुनि दूषणाभासस्याप्रतिपत्त्या निगृह्यत इति । तत्रोदाहरणभेदप्रदर्शनार्थं प्रतिज्ञाहान्यादिसूत्रम् ॥

लक्षणं च—

प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः॥२॥

प्रतिदृष्टान्तस्य यो धर्मस्तं यदा स्वपक्षे दृष्टान्ते ऽभ्यनुजानाति तदा निगृहीतो वेदितव्यः । यथाऽनित्यः शब्द ऐन्द्रियकत्वात् घटवदित्येकः । सामान्यमैन्द्रियकं दृष्टं नित्यं, कस्मान्न तथा शब्द इति द्वितीयः । यदि सामान्यमैन्द्रियकं नित्यमिति घटोऽप्येवमास्त्विति तृतीयः । अनेन किल प्रतिदृष्टान्तधर्मं स्वदृष्टान्ते ऽभ्यनुजानाति अभ्यनुज्ञानाच्च दृष्टान्तं जहन्निगमनान्तमेव पक्षं जहातीति प्रतिज्ञाहानिरित्युच्यते ।

एतत्तु न बुद्ध्यामहे कथमत्र प्रतिज्ञा हीयते इति । हेतोरनैकान्तिकत्वं सामान्यदृष्टान्तेन परेण चोद्यते तस्यानैकान्तिकदोषोद्धारमनुक्त्वा स्वदृष्टान्ते नित्यतां प्रतिपद्यते । नि-

त्वतामतिपत्तेश्चासिद्धता(१) दृष्टान्तदोषो भवति। सोऽयं दृष्टान्तदोषेण साधनदोषेण वा निग्रहो न प्रतिज्ञाहानिः। दृष्टान्तं च जहत् प्रतिज्ञामपि जहातीत्युपचारेण निग्रहस्थानम्। न च प्रधानासम्भवे उपचारो लभ्यत इति प्रतिज्ञाहानेर्मुख्यो विषयो वक्तव्यः।

कथं तर्हीदं सूत्रं प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिरिति ?। दृष्टश्चासावन्ते व्यवस्थित इति दृष्टान्तः स्वश्चासौ दृष्टान्तश्चेति स्वदृष्टान्तशब्देन पक्ष एवाभिधीयते। प्रतिदृष्टान्तशब्देन च प्रतिपक्षः-प्रतिपक्षश्चासौ दृष्टान्तश्चेति। एतदुक्तं भवति। परपक्षस्य यो धर्मस्तं स्वपक्ष एवानुजानातीति यथाऽनित्यः शब्द ऐन्द्रियकत्वात् इति द्वितीयपक्षवादिनि सामान्येन प्रत्यवस्थिते इदमाह-यदि सामान्यमैन्द्रियकं नित्यं दृष्टमिति शब्दोऽप्येवं भवत्विति एषा प्रतिज्ञाहानिः। मागनेन प्रतिज्ञातमनित्यः शब्द इति सामान्येन अनैकान्तिकत्वेन प्रत्यवस्थित इदमाह नित्य इति(२) प्राक् प्रमाणावधारितार्थपरित्यागाद्विप्रतिपत्तितो निग्रहस्थानमिति। प्रसङ्गविधानादिति चेत् !-अथ मन्यते नासौ पश्चाद्वादे शब्दस्य नित्यतां प्रतिपद्यते, किं तु प्रसङ्गं करोति-यदि सामान्यमैन्द्रियकं नित्यं दृष्टं शब्दोऽप्येवं भवत्विति प्रसङ्गं विधत्ते ?। तच्च(३) नात एव तत्प्राप्तेः। यत एवासौ हेतुदोषोद्धारे कर्तव्ये प्रसञ्जयत्यत एव निगृह्यत इति।

हेतुदोषेण चरितार्थत्वान्न प्रतिज्ञाहाने(४)र्निग्रहस्थान-

(१) असिद्धान्तता इति २ पु० पा०।
(२) नित्यः शब्द इति—पा० ६ पु०।
(३) यच्च—पा० ६ पु०।
(४) प्रतिज्ञाहानिरिति नास्ति ६ पु०।

मिश्रन्वे— अन्ये तु वर्णयन्ति नैवेदं निग्रहस्थानं युक्तं हेतुदोषेण चरितार्थत्वात् यस्मादैन्द्रियकत्वादिरयस्य हेतोरनैकान्तिकत्वं दोषस्तेनायं निगृहीत इति । नानैकान्तिकत्वदोषपरिहारेण विप्रतिपत्तेरनुपपत्तेः—तस्यैवानैकान्तिकस्य परिहारं कुर्वाणोऽयं निगृहीत इत्यतो ऽनैकान्तिकत्वं न निग्रहस्थानमिति ॥

प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरम् ॥ ३ ॥

, उदाहरणं पूर्ववत् । सर्वगतासर्वगतविकल्पेन प्रतिज्ञान्तरं करोति असर्वगतोऽनित्यः शब्द इति—तत्रानित्यः शब्द इति पूर्वा प्रतिज्ञा सामान्येनैन्द्रियकेण प्रतिहता, असर्वगतोऽनित्यः शब्द इति प्रतिज्ञान्तरम् । तत् कथं निग्रहस्थानम् ? । साधनसामर्थ्यापरिज्ञानात्—अपरिज्ञाय साधनसामर्थ्यं कुर्वतोऽसर्वगतोऽनित्यः शब्द इति प्रतिज्ञा । न च प्रतिज्ञा प्रतिज्ञान्तरं साधयति साधनसामर्थ्यापरिज्ञानात् । तदेतत्प्रतिज्ञान्तरम् । तदिदमप्रतिपत्तितो विप्रतिपत्तितो वा निग्रहस्थानमिति ॥

प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ॥ ४ ॥

यत्र प्रतिज्ञा हेतुना विरुध्यते हेतुश्च प्रतिज्ञया स प्रतिज्ञाविरोधो नाम निग्रहस्थानम्— यथा गुणव्यतिरिक्तं द्रव्यं भेदेनाग्रहणादिति । एतेनैव प्रतिज्ञाविरोधोऽप्युक्तः—यत्र प्रतिज्ञा स्ववचनेन विरुध्यते यथा श्रमणा गर्भिणी । हेतुविरोधोऽपि—यत्र प्रतिज्ञा हेतुना विरुध्यते यथा सर्वं पृथक् समूहे भावशब्दप्रयोगादिति । एतेन प्रतिज्ञया दृष्टान्तविरोधोऽपि व-

क्तव्यः—हेतोश्च दृष्टान्तादिभिर्विरोधः प्रमाणविरोधश्च प्रतिज्ञाहेत्वोर्वक्तव्यः। परपक्षसिद्धेन गोत्वादिनाऽनैकान्तिकदेशनाद्विरोधः—यः परपक्षसिद्धेन गोत्वादिना व्यभिचारयति तद्विरुद्धमुत्तरं वेदितव्यम्। स्वपक्षानपेक्षं च तथा—यश्च स्वपक्षानपेक्षं हेतुं प्रयुङ्क्ते अनित्यः शब्द ऐन्द्रियकत्वादिति स प्रसिद्धस्य गोत्वादेर्नित्यत्वविरोधाद्विरुद्धः। उभयपक्षसम्प्रतिपन्नस्त्वनैकान्तिकः—यदुभयपक्षसम्प्रतिपन्नं वस्तु तथात्वेन तेनानैकान्तिकदेशनेति। दृष्टान्ताभासाश्च कस्मान्निग्रहस्थानेषु नोक्ताः? हेत्वाभासपूर्वकत्वाद् दृष्टान्ताभासानां तदभिधानेनैवोक्ता वेदितव्या इति॥

**पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः॥ ५॥**

यः प्रतिज्ञातमर्थं प्रतिषेधे कृते परित्यजति स प्रतिज्ञासंन्यासो वेदितव्यः। उदाहरणं पूर्ववत्। सामान्येनानैकान्तिकत्वे हेतोः कृते ब्रूयात् कश्चैवमाहानित्यः शब्द इति एतत्साधनसामर्थ्यापरिच्छेदात्(१) विप्रतिपत्तितो निग्रहस्थानमिति॥

**अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्॥ ६॥**

उदाहरणं भाष्ये। साधनान्तरोपादाने पूर्वस्यासामर्थ्यख्यापनान्निग्रहस्थानमिति, सामर्थ्ये वा हेत्वन्तरं व्यर्थमिति॥

(इति प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहस्थानपञ्चकविशेषलक्षणप्रकरणम्।)

**प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम्॥ ७॥**

उदाहरणं भाष्ये। अभ्युपगतार्थासङ्गतत्वान्निग्रहस्थानं प-

(१) परिज्ञानात्—इति क्वचित्।

दभ्युपगतं तत्सम्बद्ध(१)मन्यदसम्बद्धमुच्यत इति ॥

**वर्णक्रमनिर्देशवन्निरर्थकम् ॥ ८ ॥**

उदाहरणं भाष्ये । साधनानुपादानादज्ञानमेवं ब्रुवन्न साधनं साध्यं जानाति इति न साध्यं न साधनं चोपादत्त इति निगृह्यते ॥

**परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ॥ ९ ॥**

उदाहरणं भाष्ये । असामर्थ्यख्यापनान्निग्रहस्थानम् । असामर्थ्यं(२) चाज्ञानमिति ॥

**पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम् ॥ १० ॥**

यथा दशदाडिमादि(३)वाक्यम् । निरर्थकापार्थकयोरभेद इति चेत् ?—अथ मन्यसे निरर्थकादपार्थकं न भिद्यते तत्राप्यर्थो न गम्यत इहापीति ? । भिद्यत इति ब्रूमः । कथं ? तत्र हि वर्णमात्रमिह तु पदान्यसम्बद्धानि । तत् कथं निग्रहस्थानम् ? । वाक्यार्थे न विशेषावगतिरिति साधनसामर्थ्यापरिज्ञानान्निग्रहस्थानम् ॥

(इति प्रकृतोपयोगिवाक्यार्थप्रतिपत्तिफलशून्यनिग्रहस्थानचतुष्कप्रकरणम् ।)

**अवयवविपर्यासवचनमप्राप्तकालम् ॥ ११ ॥**

अवयवानां विपर्यासेनाभिधानं निग्रहस्थानम् ।

नैवमपिसिद्धेरित्येके—एके तु ब्रुवते नैतन्निग्रहस्थानमेवमपि सिद्धेरिति । समयानभ्युपगमाच्च—न च वयमेवं समयं प्रतीच्छाम इति । प्रयोगाच्च—प्रयुक्तश्चावयवविपर्ययः सर्वशास्त्रेष्विति कस्यायं समय इति । यत्तावदेवमपि सिद्धेरिति ? प्रयोगापेतशब्दवदेतत्स्या-

(१) तत् स्थितमिति क्वचित् । (२) असमर्थं वा—पा० ६ पु० ।
(३) दाडिमा इति—पा० ६ पु० ।

त्-यथा गौरित्यस्य पदस्यार्थे गवीति(१) प्रयुज्यमानं पदं ककुदादिमन्तमर्थं प्रतिपादयतीति । न च शब्दान्वाख्यानं व्यर्थम् । अनेन शब्देन गोशब्दमेवासौ प्रतिपद्यते गोशब्दाच ककुदादिमन्तमर्थम् । तथा प्रतिज्ञाद्यवयवविपर्यासेना(२)नुपूर्वीं प्रतिपद्यते आनुपूर्व्या चार्थ(३)मिति । एतत् कथम् ? । पूर्वं तावत् कर्मोपादीयते ततः करणम् मृत्पिण्डाद्युदाहरणम् अनेकधा लोक इति । यत्पुनरेतत् समयानभ्युपगमात् इति ? नायं समयोऽपि स्वर्थस्यानुपूर्वी, सोयमर्थस्यानुपूर्वीमन्वाचक्षाणोनाभ्याख्येय इति । यत्पुनरेतत्प्रयोगादिति ? । न, निग्रहस्थानविषयापरिज्ञानात्-शास्त्रे वाक्यान्यर्थसंग्रहार्थमुपादीयन्ते संगृहीतं त्वर्थं वाक्येन प्रतिपादयिता प्रयोगकाले प्रतिज्ञादिकयाऽऽनुपूर्व्या प्रतिपादयतीति ॥

हीनमन्यतमेनाप्यवयवेन न्यूनम् ॥ १२ ॥

यस्मिन् वाक्ये प्रतिज्ञादीनामन्यतमोऽवयवो न भवति तद्वाक्यं न्यूनं वेदितव्यम् । तत् कथं निग्रहस्थानम् ? । न साधनाभावे साध्यसिद्धिरिति ।

एके तु प्रतिज्ञान्यूनं नास्तीत्याचक्षते । एतत्तु न युक्तम् प्रतिज्ञामात्रेण प्रयोगो विकल्पतः पर्यनुयोज्यः । यः प्रतिज्ञान्यूनं वाक्यं ब्रूते किमयं निगृह्यते अथ नेति ?, यदि निगृह्यते ?, कस्मात् ? निग्रहस्थानमिति ? न हि हेत्वाभासादयो ऽत्र सन्तीति । न, हेत्वादिदोषाः सन्तीति निग्रहं चाभ्युपैति, तस्मात् प्रतिज्ञान्यूनं वेति । अथ न निग्रहः ? न्यूनं वाक्यमर्थं साधयतीति साधनाभावे सिद्धिरभ्युपगता भवति । यत्तु ब्रवीषि सिद्धान्तपरिग्रह एव

(१) गौरित्यस्य शब्दस्यार्थे गावीति ।
(२) विपर्ययेणा—पा० ६ पु० ।
(३) आनुपूर्व्याञ्चार्थम्—पा० ६ पु० ।

पादकत्वात् वैयर्थ्यं स्यात् वैयर्थ्यान्निग्रहस्थानं साधनविषयापरि-
ज्ञानात् न चायं शिष्यो न गुरुस्तस्मान्नायं पुनः प्रतिपाद्यत इति ॥

अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तम् ॥ १६ ॥

पूर्ववन्निग्रहस्थानमिति ॥

( इति पुनरुक्तनिग्रहस्थानप्रकरणम् । )

विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चा-
रणमननुभाषणम् ॥ १७ ॥

शेषं भाष्ये ।

उत्तरेणावस्थानात् नेदं निग्रहस्थानमिति केचित्-
उत्तरेणावस्थानात् उत्तरेण गुणदोषवत्ता मूढत्वामूढत्वं
म्यत(१) इति किं पुनरुच्चारिते नास्ति । अस्ति हि उप-
कश्चिदसमर्थो दृश्यते न प्रत्युच्चारणे, नासौ तावता निग्रहस्थानमि-
ति । पश्चारभ्य स्वपक्षं न निर्वाहयेत् तस्य स्यात् खलीक-
रमात्रमिति । नोत्तरविषयापरिज्ञानात्—यद्ययं न प्रत्युच्चार-
यति ? निर्विषयमुत्तरं प्रसज्यते । अथोत्तरं ब्रवीति ? कथं नोच्चा-
रयति तदिदं व्याहतमुच्यते नोच्चारयत्युत्तरं च ब्रवीतीति
अप्रतिज्ञानाच्च-नेदं प्रतिज्ञायते पूर्वमुच्चारयितव्यं पश्चादुत्तरमभि-
धेयमपि तु यथाकथञ्चिदुत्तरं वक्तव्यम् । उत्तरं चाश्रयाभावे
न युक्त(२)मिति युक्तमप्रत्युच्चारणं निग्रहस्थानमिति ॥

अविज्ञातं चाज्ञानम् ॥ १८ ॥

स्फुटं भाष्ये । अप्रतिपत्तिर्वा निग्रहस्थानम् ॥

उत्तरस्याप्रतिपत्तिरप्रतिभा ॥ १९ ॥

श्लोकपाठादिभिस्तत्क्षणं दर्शयन्नोत्तरं प्रतिपद्यत इति,
दप्रतिभा नाम निग्रहस्थानं मू(क)ढत्वादिति ॥

---

( १ ) अमूढत्वं गम्यते—पा० ६ पु० ।
( २ ) उत्तर चाश्रयाभावेन युक्तम—पा० ६ प

कार्यव्यासङ्गात् कथाविच्छेदो विक्षेपः ॥ २० ॥

यत्र कर्त्तव्यं कार्यं व्यासज्य कथां विच्छिनत्ति स विक्षेपो विज्ञेयः यथा रसालया मया भुक्तं प्रतिश्यायकणो मे कण्ठं क्षिणोतीत्येवमादि । तत् कथं निग्रहस्थानम् ? अज्ञाननिगूहनार्थं तु मत्युक्तमज्ञानमेव परिहारेणाविष्करोति ॥

( इति उत्तरविरोधिनिग्रहस्थानचतुष्कप्रकरणम् । )

स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा ॥ २१ ॥

यः परेण चोदितं दोषमनुद्धृत्य भवतोऽप्ययं दोष इति इति सा मतानुज्ञा परमते स्वमतेऽनु(१)जानाति । उदाहरणं चौरः पुरुषत्वादिति स तं प्रति ब्रूयात् भवानपीति सोऽभ्युगम्य दोषं परपक्षेऽप्यनुजानातीति निगृहीतो वेदितव्यः अनपुगच्छता(२) न पुरुषत्वं चौर्यं हेतुरिति वक्तव्यम् । किन्तु परस्वेनानतिस्पष्टेन सम्बन्धः तद् उत्तरापरिज्ञानान्निगृह्यत इति ।

प्रसङ्गविधानान्न निग्रहस्थानमित्यन्ये—अपरे तु ब्रुवते नैतन्निग्रहस्थानं प्रसङ्गविधानात्—नैवायं पश्चादपि तं दोषं प्रतिपद्यते अपि तु प्रसङ्गं करोति यदि पुरुषत्वाच्चौरो भवति भवानपि पुरुषत्वस्याच्चौर इति । एतत्तु नात एव,—यत एवायमुत्तरे वक्तव्ये प्रसङ्गं करोति, तत एवोत्तरापरिज्ञानान्निगृह्यत इति ॥

निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् ॥२२॥

यो निग्रहस्थानप्राप्तं न निगृह्णाति स निगृहीतो भवति ग्रहस्थानप्राप्तस्यापरिज्ञानात् । नान्यवचनादित्यन्ये—अन्ये ब्रुवते नेदं निग्रहस्थानम् अन्योत्तरस्याभिधानात्—यस्मादसौ न ग्रहस्थानप्राप्तं न निगृह्णाति ब्रुवन्नन्यदुत्तरमभिधत्त इति । तच्च

(१) न्यायतत्त्वेनानु—पा० ६ पु० । (२) अनभ्युपगतो—पा०६ पु० ।

नेनार्थ

नात एव-यत एवासौ निग्रहस्थाने वक्तव्ये अन्यदभिध एव निगृह्यते जानानो ह्यसौ किमर्थमन्यद् ब्रवीति ॥

अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ॥ २३ ॥

अनिग्रहस्थान एवाभिधत्ते निगृहीतोऽसीति एतन्निग्रहस्थानापरिज्ञानान्निग्रहस्थानमिति ॥

( इति दोषानिरूप्यमतानुज्ञादिनिग्रहस्थानत्रिकप्रकरणम्

सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः ॥ २४ ॥

अस्योदाहरणं स्फुटं भाष्ये । प्रतिज्ञातार्थव्यतिरेकेण। गतार्थपरित्यागान्निगृह्यत इति ॥

हेत्वाभासाश्च यथोक्ताः ॥ २५ ॥

यथैव विभक्ता लक्षणेन तथैव तेषां निग्रहस्थानभाव इ इमे प्रमाणादय उद्दिष्टाः प्रथमसूत्रे, लक्षिताः प्रथमेऽध्याये, क्षिताः शेषेष्विति त्रिविधा तत्त्वस्य परिसमाप्तिरुक्ता वेदितव्ये

( इति कथकान्योक्तिनिरूप्यनिग्रहस्थानद्वयप्रकरणम् ।

जातीनां सप्रपञ्चानां निग्रहस्थानलक्षणम् ।
शास्त्रस्य चोपसंहारः पञ्चमे परिकीर्तितः ॥
यदक्षपादप्रतिभो भाष्यं वात्स्यायनो जगौ(१)।
अकारि महतस्तस्य भारद्वाजेन वार्त्तिकम् ॥

इति श्रीपरमर्षि-भारद्वाज-पाशुपताचार्यश्रीमदुद्द्योतकरकृतौ न्यायवार्त्तिके पञ्चमोऽध्यायः समाप्त

॥ समाप्तोऽयं ग्रन्थः ॥

(१) योऽक्षपादमृषिं न्यायः प्रत्यभाद्वदतां वरम् ।
तस्य वात्स्यायन इदं भाष्यजातमवर्तयत् ।
अयं श्लोको न्यायभाष्यान्ते दृश्यते ॥